THE

# CHOWKHAMBÂ SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS

NO. 433.

# अग्निष्टोमपद्धतिः ।

वामनाचार्यविरचिता कर्कानुसारिणी

आध्वर्यवपद्धतिः ।

नानाभाई इत्युपनामक रामकृष्णत्रिपाठिकृता

औद्गात्रपद्धतिः ।

तथा

रघुनाथद्विवेदिनिर्मिता शाङ्खायनसूत्रानुसारिणी

हौत्रपद्धतिः ।

# Agnistoma Paddhati

Consisting of (i) ĀDHVARYAVA PADDHATI by Vāmanācharya, (ii) AUDGATRA PADDHATI by Rāmakṛṣṇa Tripāthī Nānābhāi and (iii) HAUTRA PADDHATI following the Sāmkhyāyana Sūtras by Raghunātha Dvivedi.

*Edited with notes etc., by*

PANDIT BHAGAVAT PRASĀDA S'ARMĀ,
Vedāchārya, Professor of Veda.
Government Sanskrit College, Benares.

FASCICULAS. 1–१.

*PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBA SANSKRIT SERIES OFFICE
*Benares City.*

1934.

॥ श्रीः ॥

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोदितम् ॥ २ ॥

स्तबक ४३३

*Printed by Jai Krishna Das Gupta*
*at the Vidya Vilas Press, Benares.*

श्रीगणाधिपतये नमः ॥

# अथाग्निष्टोमपद्धतिः ।

## आध्वर्यवपद्धतिः ।

लक्ष्मीनृसिंहपितरौ गुरूंस्त्वाग्रजांस्तथा ।
अग्निष्टोमस्य सरणिं वक्ष्ये कर्कानुसारिणीम् ॥

अग्निष्टोमं चिकीर्षुरादौ भूमिं पूजयेत्। तद्यथा—कर्ता सपत्नीको गुरुविप्रदैवज्ञशिल्पिसमेतः पूजासामग्रीं गृहीत्वा सोमारम्भात् प्राग्ज्योतिर्विदादिष्टे सुमुहूर्ते पूर्वाह्णे उक्तलक्षणलक्षितायां भूमौ गत्वा गुर्वाद्यनुज्ञातः कुशहस्तः कुशेषूपविश्य आचम्य प्राणानायम्य देशकालौ स्मृत्वा अमुकगोत्रोऽमुकप्रवरान्वितोऽमुकशर्मा सपत्नीकोऽहं करिष्यमाणाग्निष्टोमसंस्थज्योतिष्टोमयागोपयोगिप्राच्यादिदिक्साधनपूर्वकशालायतनादिनिर्मातुं तदङ्गतया विहितानि स्वस्तिवाचनभूमिकूर्मानन्तवराहविश्वकर्मपुरोहितदैवज्ञपूजनानि करिष्ये ।

तत्रादौ(१)निर्विघ्नतासिद्ध्यर्थं गणपतिगौरीपूजनं करिष्ये । यथोक्तविधिना गणपतिगौरीपूजनस्वस्तिवाचने विधाय अक्षतपुञ्जे भूमिकूर्मानन्तवराहान् पूजयेत् । षड्हस्तपरिमिते काष्ठे गज इत्याख्ये विश्वकर्माणं पूजयेत् ।

आदौ भूमेः—

चतुर्भुजां शुक्लवर्णां कूर्मपृष्ठोपरिस्थिताम् ।
प्रसन्नवदनां चक्रशूलशङ्खादिधारिणीम् । इति ध्यानम् ।
आगच्छ सर्वकल्याणि वसुधे लोकधारिणि ।
लोकदृश्यासि पृथिवि कश्यपेनाभिवन्दिते ॥

इत्यावाहनम् । स्योनेति पूजनम् । "ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथाः" ( शु० य० सं० ३६।१३ ) ।

---

(१) एतच्च सर्वकर्मस्वादौ कर्तव्यं निर्विघ्नार्थत्वात् । "न ऋते त्वत्क्रियते" ( ऋ १०।११२।९) इति मन्त्रलिङ्गाच्च । "सर्वकर्मसमृद्ध्यर्थमादौ पूज्यो विनायक"इति लैङ्गात्, नार्चितो हि गणाध्यक्षो यज्ञादौ यन्नुरोत्स्ना । तस्माद्विघ्नं समुत्पन्नमाकस्मिकमिदं खल्विति पाद्माच्च, "विलोक्य विघ्नेशविधिं तदेश्वर."इति (मा०८।७।८)शुकोक्तेश्च ।

आध्वर्यवपद्धतिः ।

पूजान्ते—

उद्धृतासि वराहेण कृष्णेन शतबाहुना ।
दंष्ट्राग्रेलीलया देवि यज्ञार्थं प्रणमाम्यहम् ॥

इति प्रणमेत् । ततो दधिदूर्वायवफलपञ्चरत्नयुतं जलं ताम्रादिपात्रे गृहीत्वा विशेषार्घं(१) दद्यात् ।

ब्रह्मणा निर्मिते देवि विष्णुना शङ्करेण च ।
पार्वत्या चैव गायत्र्या स्कन्देन वरुणेन च ।
यमेन पूजिते देवि धर्मस्य विजिगीषया ।
सौभाग्यं देहि पुत्रांश्च धनं रूपं च पूजिते ।
गृहाणार्घं मया दत्तं प्रसन्ना शुभदा भव ।
भूम्यै नमः इदमर्घं(२) समर्पयामि ॥

ततो गन्धपुष्पपायससक्तुलाजैः सघृतैः सदीपैर्युक्तं महाबलिं दद्यात् । "ॐ भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री । पृथिवीं यच्छ पृथिवीं दृꣳह पृथिवीम्माहिꣳसीः (शु०य० सं०१३।१८) ।

उपचारमिमं तुभ्यं ददामि परमेश्वरि ।
भक्त्या गृहाण देवेशि त्वामहं शरणं गतः ॥

ततः कूर्मानन्तवराहादीनां(३) नाममन्त्रेण पूजनम् । विश्वकर्मपूजनमपि नाममन्त्रेण । ततः पुरोहितपूजनं दयज्ञस्य च, ताभ्यां गोप्रदानम् । शिल्पिनं संतोष्य भूयसीं सङ्कल्प्य ब्राह्मणान् भोजयेत् । इति भूमिपूजनम् ।

---

(१) आवाह्य "भूरसी"ति पुष्पाञ्जलिं दत्वा प्रणम्यार्घं दत्वा भूरसीति भूमिं सम्पूज्य पूजां निवेद्य बलिं दत्वा प्रार्थयेदिति क्रमो रुद्रकल्पद्रुमे (३६३ पत्रे) ।

(२) अत्र यकाररहित एवार्घशब्दो वाजसनेयिभिः पठनीयः पारस्करसूत्रे तथैव प्रायशो दर्शनात् ।

"आपः क्षीरं कुशाग्राणि दधिदूर्वाक्षतास्तथा ।
फलं सिद्धार्थकांश्चैव अर्घोऽष्टाङ्गः प्रकीर्तितः" इति ।

(३) श्रीवराहस्य यज्ञात्मतां प्रपञ्चितं श्रीमद्भागवते (स्कं० ३। अ०१३ श्लो० ३५-३८)

"रूपं तवैतन्ननु दुष्कृतात्मनां दुर्दर्शनं देव यदध्वरात्मकम् ।
छन्दांसि यस्य त्वचि बर्हिरोमस्वाज्यं दृशि त्वङ्घ्रिषु चातुर्होत्रम् ॥
स्रुक् तुण्ड आसीत्स्रुव ईश नासयोरिडोदरे चमसाः कर्णरन्ध्रे ।
प्राशित्रमास्ये ग्रसने ग्रहास्तु ते यच्चर्वणं ते भगवन्नग्निहोत्रम् ॥
दीक्षाऽनुजन्मोपसदः शिरोधरं त्वं प्रायणीयोदयनीयदंष्ट्रः ।
जिह्वा प्रवर्ग्यस्तव शीर्षकं क्रतोः सभ्यावसथ्यं चितयोऽसवो हि ते ॥
सोमस्तु रेतः सवनान्यवस्थितिः संस्थाविभेदास्तव देव धातवः ।
सत्राणि सर्वाणि शरीरसन्धिस्त्वं सर्वयज्ञक्रतुरिष्टिबन्धनः" ॥ इति ।

आध्वर्यवपद्धतिः ।

ततस्तत्र समे देशे सङ्कुच्छायादिना प्रागुदक्सूत्रे संसाध्य प्राक्सूत्रे प्रागुपचारं विहारं रचयेत् ।

अथ विहारनिर्माणम्—

इतः परं तु सौमिक्या वेदेर्मानं मयोच्यते ।
द्विपदः प्रक्रमस्तत्र पदं तु त्रिविधं मतम् ॥ १ ॥
तिर्यक्पङ्क्तिकरजैर्ग्राह्यं तद्धि यथायथम् ।
अरत्निना सदोमानं सर्वत्र प्रक्रमैर्न हि ॥ २ ॥
पृष्ठ्यां विधायापरेऽन्ते विमितं चतुरस्रकम् ।
दश द्वादश वा दैर्घ्ये विस्तारे स्युररत्नयः ॥ ३ ॥
शाला वा दशविस्तारा दैर्घ्ये च द्विगुणा मता ।
तस्यानुदग्दिग्द्वाराणि त्रीणि स्युर्द्विकराणि हि ॥ ४ ॥
तस्मात्प्रत्यग्द्विहस्तद्वत्पश्चाद्रत्निमितं मितम् ।
तथोदक्स्यात्तन्मध्ये गर्तश्च करसम्मितः ॥ ५ ॥
तयोस्तु द्वारमेकैकं प्रागुदग्वा यथारुचि ।
विहारः प्राकृतस्तस्मिन्विशेषस्त्वधुनोच्यते ॥ ६ ॥
पूर्वद्वार्मध्यतः पश्चात्प्रक्रमद्वितये भवेत् ।
मध्य आहवनीयस्य पश्चात्सप्तान्तरे पुनः ॥ ७ ॥
मध्यः स्याद् गार्हपत्यस्य, शेषं प्राकृतमीरितम् ।
तन्मध्ययोरुदक्शङ्कू स्यातां सार्द्धकरद्वये ॥ ८ ॥
तौ मध्यौ खरयोस्तौ च वेद्यास्तौ करसंमितौ ।
पात्याद्दक्षिणतः प्रान्ते खर उच्छिष्टसंज्ञकः ॥ ९ ॥
दक्षिणाप्रवणोऽभ्यस्रः सर्वेऽपि द्व्यङ्गुलोच्छ्रिताः ।
पूर्वद्वार्मध्यतः शङ्कुः पुरस्तात्प्रक्रमत्रये ॥ १० ॥
सोऽन्तः पात्यो महावेदेः पश्चिमप्रान्त इष्यते ।
तस्मादुभयतः श्रोणी तिथिप्रक्रमसम्मिते ॥ ११ ॥
वार्ध्र्यसप्तदशेषु स्तो वेदेः प्राशस्त्यमिच्छतः ।
अन्तः पात्यात्पुरः शङ्कुः षट्त्रिंशत्प्रक्रमेषु तु ॥ १२ ॥
तस्मादुभयतः स्यातां द्वादशप्रक्रमेऽसकौ ।
अन्तः पात्यात्पुरः सार्द्धप्रक्रमे सदसोऽवधिः ॥ १३ ॥
तस्मादुभयतः श्रोणी नवारत्नौ ततः पुरः ।
नवारत्नौ ततस्तद्वदंसौ द्वारद्वयं भवेत् ॥ १४ ॥
पत्यान् षट्सु प्रक्रमेषु पुरः शङ्कुस्ततः पुनः ।
एकविंशत्यङ्गुलेषु शङ्कुस्तद्दक्षिणोत्तरा ॥ १५ ॥

आध्वर्यवपद्धतिः ।

पृष्ट्या, तस्यां धिष्णियाः स्युः, शङ्कोर्दक्षिणतो भवेत् ।
मध्यः शास्तुस्तु धिष्ण्यस्य अरत्नौ सनवाङ्गुले ॥ १६ ॥
पृष्ठ्याशङ्कोरुदक्पश्चात्प्राची शङ्कुर्नवाङ्गुले ।
षट्त्रिंशदङ्गुले तस्मादेवं शङ्कुचतुष्टयम् ॥ १७ ॥
एते मध्या धिष्ण्यानां, विस्तारोऽष्टादशाङ्गुलः ।
वेदाङ्गुलोच्चा वेदास्राः षट् धिष्ण्याः सदसि स्मृताः ॥ १८ ॥
शङ्कोः प्रक्रमषट्कस्थाद्दक्षिणा तु करत्रये ।
भवेदौदुम्बरीगर्तः प्रक्रमो हि महानयम् ॥ १९ ॥
षट्त्रिंशत्प्रक्रमे शङ्कौ मध्यो यूपावटस्य तु ।
तस्मात्पश्चात्पदे शङ्कुः पञ्चारत्नौ पुनस्तथा ॥ २० ॥
शङ्कोरुभयतो वेदिश्रोण्यंसाः पदपञ्चके ।
सर्वतः सा दशपदा स्यादुच्चा चतुरङ्गुला ॥ २१ ॥
चतुर्विंशत्यङ्गुला वाऽथवा षट्त्रिंशदङ्गुला ।
तत्पश्चाद्विप्रक्रमान्ते शङ्कुर्दशसु चापरः ॥ २२ ॥
तयोः शङ्क्वोरुभयतः श्रोण्यंसौ दशभिः पदः ।
पूर्वपश्चिमदिग्द्वारं हविर्धानं कटैर्वृतम् ॥ २३ ॥
दशप्रक्रमदघ्नं तच्चतुरस्रं समन्ततः ।
तस्मिन्दक्षिणपूर्वार्द्धमध्यमध्यं करात्मकम् ॥ २४ ॥
वेदास्रमष्विपु छिद्राण्यर्कव्यासानि चाज्ञया ।
संभिद्यात् तेऽपरयोः, सम्यक् चेत्पूर्वयो र्न हि ॥ २५ ॥
खरस्तदग्रे वेदास्रः पात्रार्थोऽरत्निसम्मितः ।
हविर्धानोत्तरश्रोणेरुदक् क्रमचतुष्टये ॥ २६ ॥
शङ्कुः, सोऽग्नीन्मण्डपस्य स्तम्भो नैर्ऋत्यधिष्ठितः ।
पञ्चारत्निर्मण्डपः स्यान्मध्ये कुण्डं तु धिष्ण्यवत् ॥ २७ ॥
मार्जालीयोऽप्येवमेव दक्षिणश्रोणितो भवेत् ।
तन्मध्ये धिष्ण्यवद्वेदेः प्रान्त उच्छिष्टवत्खरः ॥ २८ ॥
ऐन्द्रीयाम्योत्तरस्मिन् द्वार्द्वयं दक्षिणे ह्युदक् ।
महावेदेरुत्तरांसादुदक् स्यात्त्रिंशदङ्गुले ॥ २९ ॥
शङ्कुःस्तस्मात्पुनः पश्चाच्छङ्कुः स्यात्त्रिष्वरत्निषु ।
मध्यश्चात्वालगर्त्तस्य स स्याद् द्वात्रिंशदङ्गुले ॥ ३० ॥
तदुत्तरेण शामित्रं यथायोगं तु तन्मितिः ।
वेदेः खातस्त्र्यङ्गुलः स्यात्पृष्ठ्या भूमिसमा मता ॥ ३१ ॥
यूपावटात्प्रत्यगर्कप्रक्रमेपूत्तरानतौ ।

आध्वर्यवपद्धतिः ।

प्रादेशव्यासो गर्त्तः स्यादुत्करो यज्ञिये क्रतौ ॥ ३२ ॥
इति प्रक्रममानेनेरिता वेदिस्तु सौमिकी ।
अथैतदुपयोगिन्याः प्राकृत्या मानमुच्यते ॥ ३२ ॥
पृष्ठ्यायामधिकव्यासवृत्तं नर्यस्य कल्पयेत् ।
तन्मध्याद्वसुरुद्रार्कान्यतमप्रक्रमेष्वथ ॥ ३३ ॥
हस्तमात्रान्ध्यस्रमध्यः प्रक्रमो द्वादशाङ्गुलः ।
कुण्डमध्यान्तरालांशुं सस्वपञ्चं भजेत्त्रिधा ॥ ३४ ॥
नियम्यान्तौ मध्यशङ्कोर्वर्त्मैक दक्षिणा नयेत् ।
स मध्यस्तदुदङ् नन्दाङ्गुले वृत्तं प्रकल्पयेत् ॥ ३५ ॥
सपादाष्टत्रिव्यासं तद्वक्षार्धं धनुराकृति ।
वेदास्रमध्यात्पूर्वस्मात्परस्माद्वापि शङ्कुतः ॥ ३६ ॥
पश्चाद्वेदिस्त्र्यरत्निस्तच्छ्रोणी उभयतस्ततः ।
करद्वयमिते अंसौ सार्धहस्तौ तथा पुरः ॥ ३७ ॥
श्रोणितः पार्श्वयोर्मध्यौ सार्द्धद्वात्रिंशदङ्गुले ।
पञ्चचत्वारिंशद्व्यासार्धयोः सङ्ग्रहयोर्मतौ ॥ ३८ ॥
सभ्यावसथ्ययोः कुण्डे वृत्ते च नर्यसंमिते ।
वृत्तवेदास्रयोश्चोदग् यथा सम्भवमीरिते ॥ ३९ ॥
उदगंसात्पश्चिमेनोत्करो गर्तः षडङ्गुलः ।
अर्कोच्छ्रिताश्च तुर्व्यासा मेखलाः कुण्डसन्निभाः ॥ ४० ॥
वेद्याः खातस्त्र्यङ्गुलादिरखातौ सङ्ग्रहौ मतौ ।
वेद्यां सर्वो बहिः सर्वो बहिरन्तश्च भागतः ॥ ४१ ॥
त्रिविधोऽस्त्याहवनीयो वेदिः सर्वत्र तावती ।
वेदास्र आहवनीयो, वृत्तार्धं दक्षिणस्य च ॥ ४२ ॥
त्रीणि कुण्डानीतराणि वृत्तान्युक्तानि धीमता ।
प्राकृतस्य विहारस्य विज्ञेयैषोपकल्पना ॥ ४३ ॥
एवं विहारं सम्पाद्य यज्वा यष्टुं समारभेत् ॥ इति ।

अथ ज्योतिष्टोमप्रयोगः। तत्र प्रथमप्रयोगे स्वस्तिवाचनादिमातृपूजापूर्वकमाभ्युदयिकश्राद्धं नियमेन, द्वितीयादिप्रयोगे तु गणपतिगौरीपूजनस्वस्तिवाचने एव, आभ्युदयिकश्राद्धं विकल्पेन ।

ततः सुत्योपसद्दीक्षाद्यनुरोधेन सुमुहूर्ते कर्ता सपत्नीको देवतागुरुविप्रादीन्नमस्कृत्य निर्णेजनान्त वैश्वदेवं च कृत्वा कुशहस्तो गार्हपत्यस्य पश्चात्पृष्ठ्याया उत्तरतः कुशेषु शान्तिपाठपूर्वकमुपविश्य आचम्य प्राणानायम्य सुमुखश्चेत्यादि देशकालौ स्मृत्वा अमुकगोत्रोऽमुकप्रव-

आध्वर्यवपद्धतिः ।

गोऽमुकशर्मा सपत्नीकोऽहं करिष्यमाणाग्निष्टोमसंस्थज्योतिष्टोमाङ्गतया विहितानि स्वस्तिवाचनमातृकापूजनवसोर्द्धारापूजनायुष्यमन्त्रजपनान्दीश्राद्धानि करिष्ये । तत्रादौ निर्विघ्नतासिद्ध्यर्थं गणपतिगौरीपूजनं करिष्ये । इति संकल्प्य प्रयोगदर्पणायुक्तविधिना तानि कृत्वा यवाक्षतफलसुवर्णजलहस्तः प्रधानसङ्कल्पं कुर्यात् ।

अथ प्रधानसङ्कल्पः । अमुकगोत्रोऽमुकप्रवरोऽमुकशर्मा हिरण्यशतगवदक्षिणेन वासोऽश्वदक्षिणेन रथन्तरपृष्ठेन त्रिवृदादिचतुष्टोमेनाग्निष्टोमसंस्थेन ज्योतिष्टोमेनाहं यक्ष्ये । दौर्ब्राह्मण्यनिरासार्थप्रायश्चित्तपशोः समानतन्त्रेण करणपक्षे सङ्कल्पः । मम स्वीयदौर्ब्राह्मण्यनिरासार्थं करिष्यमाणस्यैन्द्राग्नपशोरग्नीषोमीयेण पशुना सहोपालम्भं कुर्वन् हिरण्येत्यादि। एवमेव पक्षे आश्विनोऽप्यूहनीयः। तत्रादौ ऋत्विजो वृणे इति सङ्कल्पयेत् ।

## औद्गात्रपद्धतिः ।

श्रीगणेशाय नमः ।

अथाग्निष्टोमसंस्थस्य ज्योतिष्टोमस्य प्रयोग उच्यते ।

ऋत्विगार्षेयोऽनूचानः साधुचरणो वाग्म्यन्यूनाङ्गोऽनतिरिक्ताङ्गो द्वयसतश्चानतिकृष्णोऽनतिश्वेतः ( द्राह्यायणश्रौ० सू० १ पटले १ खं ७ सू० ) ( लाट्यायनश्रौ० सू० १ प्रपाठ० १ कण्डि० । ७ सू० ) "असौ ज्योतिष्टोमेन यक्ष्यते तस्यौद्गात्रं भवता कर्तव्यम्" इति सोमप्रवाकेण प्रार्थित उद्गाता यद्यार्त्विज्यं न चिकीर्षति तदा "नमः सोमाय राज्ञे" इत्युक्त्वा सोमप्रवाकं प्रत्याचक्षीत "न करिष्यामो" ति । यद्यार्त्विज्यं चिकीर्षति तदा तं प्रतिमन्त्रयेत "महन्मे वोचो भर्गो मे वोच यशो मे वोचः स्तोमं मे वोचो भुक्तिं मे वोचः सर्वं मे वोचस्तन्मावतु तन्माविशतु तेन भुक्षिषीय" इति । इदं लौकिकं वरणम् ।

यत्रातिथीन्वासयति स आवसथः तं प्रति सोमप्रवाकाय लवणमन्नं दध्नाऽऽहारयेत् । ( द्रा० श्रौ० १।१।१२ )

## हौत्रपद्धतिः ।

अथाग्निष्टोमहौत्रपद्धतिः । आर्षेयान्यूनोऽनूचानान्त्विजो वृणीते सोमेन यक्ष्यमाणश्चतुरः सर्वान्वा ( शां० श्रौ० ५।१।२ ) । तद्यथा—

ब्रह्मादीन्प्राङ्मुखानुपवेश्य स्वयमुदङ्मुखो यजमानो दक्षिणभागतः स्थितया पत्न्या सहितो मन्त्रोच्चारणमात्रेण दैववरणेन वृणीते ।

आध्वर्यवपद्धतिः ।

## अथ दैवर्त्विग्वरणम् ।

अथ वरणम् । तत्रादौ दैवर्त्विग्वरणं मन्त्रोच्चारणरूपम् । अग्निर्मे होता, आदित्यो मेऽध्वर्युः चन्द्रमा मे ब्रह्मा, पर्जन्यो म उद्गाता, आपो मे होत्रा(१)शंसिनः । रश्मयो मे चमसाध्वर्यवः ।

औद्गात्रपद्धतिः ।

अथ गृहं प्रत्यागतानामृत्विजां यजमानो दैववरणं कुर्यात् । अग्निर्मे होता । आदित्यो मेऽध्वर्युः । चन्द्रमा मे ब्रह्मा । पर्जन्योम उद्गता । (सदस्यपत्ते—आकाशो मे सदस्यः ) । आपो मे होत्रशंसिनः । रश्मयो मे चमसाध्यर्यवः । इदं मन्त्रजपरूपं दैववरणम् ।

हौत्रपद्धतिः ।

"चन्द्रमा मे दैवो ब्रह्मा" इत्युपांशु "त्वं मानुपः" इत्युच्चैः । एवं सर्वान् । "आदित्यो मे दैव उद्गाता त्वं मानुपः । अग्निर्मे दैवो होता त्वं मानुपः । वायुर्मे दैवोऽध्वर्युस्त्वं मानुपः । प्रजापतिर्मे दैवः सदस्यस्त्वं मानुपः । ऋतवो मे दैव्या होत्राशंसिनो यूयं मानुपाः । रश्मयो मे चमसाध्वर्यव यूयं मानुपाः" इति दशहृयाकांश्चमसाध्वर्यून्वृणीते । "भर्गो मे वोचो भद्रं मे वोचो भूतिं मे वोचः श्रियं मे वोचो यशो मे वोचो मयि भर्गो मयि भद्रं मयि भूतिर्मयि श्रीर्मयि यशः" इति वृतो जपित्वा(२) । इति दर्वर्त्विग्वरणम् ।

---

(१) "महर्त्विग्व्यतिरिक्ता ब्राह्मणाच्छंस्याद्या द्वादशर्त्विजो होत्राशसिन" इति मानवे ।

(२) "कच्चिन्नाहीनानुदेश्य-न्यस्तार्त्विज्यनीतदक्षिणानामन्यतम इति पृष्ट्वा प्रतिशृणोति प्रत्याचष्टे वा" [शां० श्रौ० १।१।१०] इति सूत्रशेप ।अस्यार्थ –"भर्गो म"इत्येवमादिकं मन्त्रं वृत ऋत्विक् जपित्वानन्तरं जपात्पृच्छति यदि पूर्वं न ज्ञातो योऽयं यज्ञः कर्तव्यः। किमयमहीन उत नेति । कच्चिच्छब्दः किं शब्दस्यार्थे । अनुदेश्यः स उच्यते यः कृत्वाऽन्यस्मै जीवते मृताय वा अनुदिश्यते । यथा कात्यायनेनोक्तम् "उखां चेद्बिभ्रन्म्रियेत सोपकरणमाहिताग्न्यावृता दग्ध्वा नेदिष्ठर्युम्प्रि चित्वा तमस्मा अनुदिशेदित्येक" [ का० श्रौ० २५।१४।१ ] इति । न्यस्तार्त्विज्यस्तु न्यस्तं परित्यक्तमार्त्विज्यं यस्मिन्नन्येन केनचिद्यजमानस्य दोषेण । नीतासु दक्षिणासु यः शेषः स नीतदक्षिणो यज्ञशेषः । एवं दृष्टादृष्टदोषपरिहारार्थम् । यद्येतेषामन्यतमो न भवति ततः प्रतिशृणोति । इतरथा प्रत्याचष्टे । प्रतिश्रवः क्रियाभ्युपगम । प्रत्याख्यानं तद्विपर्ययः।

आध्वर्यवपद्धतिः ।

## अथ मानुषर्त्विग्वरणम् ।

तत्रादौ(१)यजमानः सोमप्रवाकस्य उदङ्मुखोपविष्टस्य दक्षिणं जान्वालभ्य गोत्रामुकशर्मन् अस्मिन्नग्निष्टोमसंस्थे ज्योतिष्टोमे सोमे त्वं सोमप्रवाको(२) भवेति वदेत् । भवामीति तेन प्रत्युक्ते तं मधुपर्कादिनाऽमन्त्रकमर्चयेत् । ततः सोमप्रवाको होतृगृहं गत्वा अमुकशर्मणः सोमो भविष्यति तत्र भवता हौत्रं कर्त्तव्यमिति वदेत् । एवमितरान्। आध्वर्यवम् ,ब्रह्मत्वम् , औद्गात्रम् , प्रशास्त्रम् , प्रतिप्रस्थात्रीयम् , ब्राह्मणाच्छंसीयम् , प्रस्तोत्रीयम् , अच्छावाकीयम् , नेष्ट्रीयम् , पौत्रम् , प्रातिहर्त्रम् , ग्रावस्तुतीयम् , औन्नेत्रम् , आग्नीध्रीयम् , सुब्रह्मण्यीयम् , इति विशेषः। ते च प्रत्येकमां तथेति वदेयुः । ततो यजमानः प्राङ्मुखो ब्रह्मादीन् षोडशर्त्विजउदङ्मुखानुपविष्टान् दक्षिणं जान्वालभ्य मानुषान्वृणीते(३) । गोत्रामुकशर्मन् हिरण्यशतगवदक्षिणेन वासोऽश्वदक्षिणेन च रथन्तरपृष्ठेन त्रिवृदादिचतुष्टोमेनाग्निष्टोमसंस्थेन ज्योतिष्टोमेनाहं यक्ष्ये ।

तत्र मे त्वं ब्रह्मा भव, एवमेवेतरान्, उद्गाता भव, होता भव । अध्वर्युर्भव, ब्राह्मणाच्छंसी भव, प्रस्तोता भव, मैत्रावरुणो भव, प्रतिप्रस्थाता भव, पोता भव, प्रतिहर्त्ता भव, अच्छावाको भव, नेष्टा भव, अग्नीद्भव, सुब्रह्मण्यो भव, ग्रावस्तुद् भव, उन्नेता भव ।

औद्गात्रपद्धतिः ।

अथ मानुषवरणं कुर्यात् । अमुकशर्मा मानुषः । इदमपि मानुषवरणं मन्त्रजपमेव ।

हौत्रपद्धतिः ।

ततो यजमानो ब्रह्मोद्गातृहोत्रध्वर्युब्राह्मणाच्छंसिप्रस्तोतृमैत्रावरुणप्रतिप्रस्थातृपोतृप्रतिहर्त्रच्छावाकनेष्ट्रग्नीत्सुब्रह्मण्यग्रावस्तुदुन्नेतृणां सदस्यानां मानुषवरणं करोति ।

---

( १) सव्ये रूप्यं गृहीत्वा साक्षतेन दक्षिणहस्ताग्रेण दक्षिणं ऋत्विग्जान्वालभ्य वरणं कुर्यादिति देवयाज्ञिकः ।

( २ ) यद्यपि सोमप्रवाकः कात्यायनसूत्रे नास्ति तथाप्याचारादत्र लिखितः ।

ततो यजमानः सोमप्रवाकं प्रति सोमप्रवाक सोमं मे ब्रूहि ऋत्विग्भ्यः । केभ्य इति तेनोक्ते अमुकशर्मादिभ्य इति होतृनामपूर्वकमाह—

नात्र को यज्ञ इत्यादयः । एतच्छाखायां प्रवादनस्यानभिधानात् । सोमप्रवाक एव न वरणीयोऽनभिधानात् इति याज्ञिकाः केचित् ।

( ३ ) वरणं नाम करिष्यमाणकर्मस्वरूपदक्षिणाद्रव्यतत्परिमाणश्रावणपूर्वकं स्वयमप्रवृत्तानां ब्रह्मत्वादिषु कर्मसु कर्तृत्वेनाभ्यर्थनम् ।

आश्वलायनपद्धतिः ।

## अथ मधुपर्कः ।

ततो मधुपर्केण समन्त्रकं० सर्वेषाᳮ समर्चनम् । तद्यथा-वृतानृत्विजः प्राङ्मुखानुपवेश्य स्वयं चोदङ्मुख उपविश्य "वृतानृत्विजो मधुपर्केणार्हयिष्ये" इति सङ्कल्प्य "साधु भवन्त आसतामर्चयिष्यामो- भवत" इति वृतान्प्रार्थयेत् । "अर्चय" इति प्रतिवचनन्तेषाम् । अर्चयितुर्विष्टरदानम् । अर्चयितुरन्यो यः कश्चनार्च्यान्सम्बोधयति "विष्टरो विष्टरो विष्टरो" इति । ततोऽर्चयिता "प्रतिगृह्यन्तामि"ति सकृद्ददति । ततोऽर्च्योऽर्चयितुः सकाशाद्विष्टरं गृहीत्वा ( "प्रतिगृह्णीम" इति प्रतिवचनं प्रतिग्रहीतृणां सर्वत्र ) स्वासने उदगग्रं निदधाति । "ॐ वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्यः । इमन्तमभितिष्ठामि यो मा कश्चाभिदासति" इति ।

ततः "पादार्थान्युदकानि पादार्थान्युदकानि पादार्थान्युदकानी"त्यन्यः । प्रतिगृह्यतामित्यर्चयिता, अर्च्यस्तत्प्रतिगृह्य भूमौ निधाय तदुदकमञ्जलिनाऽऽदाय दक्षिणं स्वं पादं पूर्वं प्रक्षालयेत् । "ॐ विराजो दोहो-

औद्गात्रपद्धतिः ।

ऋत्विजो वृत्वा मधुपर्कमाहरेदिति विधानान्मधुपर्कविधिः ।

तत्र यजमानविष्टरपुरगाः विष्टर पाद्यमर्घ्यमाचमनीयं मधुपर्कमाहरन्ति अर्हणीयप्रदेशादुत्तरतो गां बद्ध्वोपतिष्ठेरन् (गो० गृ० ४।१०।१) । "ॐ अर्हणा पुत्रवाससा धेनुरभवद्यमे । सा नः पयस्वती दुहा उत्तरा मुत्तराᳮ समाम्" ॥ अथोद्गाता तिष्ठन् जपेत्—

"इदमहमिमां पद्यां विराजमन्नाद्यायाधितिष्ठामी"ति ।

यजमानपुरुषै"र्विष्टरो विष्टरो विष्टरः प्रतिगृह्यतामि"त्युक्ते विष्टरं प्रतिगृह्य "ॐ या ओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः । तामह्यमस्मिन्नासनेऽच्छिद्राः शर्म यच्छत" इत्युदगग्रमास्तीर्योपविशेत् ।

पाद्यं पाद्यं पाद्यं प्रतिगृह्यतामित्युक्ते पाद्यं प्रतिगृह्यापः प्रेक्षेत । "ॐ यतोदेवीः प्रतिपश्याम्यापस्ततोमाराद्धिरागच्छन्त्वि"ति ततः सव्यं पादं

हौत्रपद्धतिः ।

ततो मधुपर्कः । तत्र यजमानेन कूर्चं गृहीत्वा "कूर्चः कूर्चः कूर्चः प्रतिगृह्यताम्" विष्टर इति वा "प्रतिगृह्णामो"ति प्रतिगृह्णीयात् । "ॐ अहं वर्ष्म सदृशाना विद्युतामिव सूर्यः । इमं तमधितिष्ठामि यो अस्माँ अभिदासती"ति मन्त्रेण तदुपरि तिष्ठेदुपविशेद्वा ।

ततः "पाद्यं पाद्यं पाद्यं प्रतिगृह्यताम्" इति यजमानेनोक्ते "ॐ विरा-

आध्वर्यवपद्धतिः।

ऽसि विराजो दोहमशीय मयि पाद्यायै विराजो दोह" इति। पुनस्तथैव सव्यं पादं मन्त्रेणैव।

ततः पूर्ववत् "विष्टरा विष्टरा विष्टराः प्रतिगृह्यन्ताम्"। अन्यौ "वर्ष्मोऽस्मी"ति विष्टरस्योपरि पादौ करोतीति विशेषः।

ततोऽन्यो "ऽर्घा अर्घाऽअर्घा" इति। "प्रतिगृह्यन्तामि"ति यजमानः। अर्घ्यः "ॐ आपः स्थ युष्माभिः सर्वान्कामानवाप्नवानि" इत्यर्घं प्रतिगृह्य शिरसाभिवन्द्य प्रागुदग्वा निनयन्ननुमन्त्रयते। "ॐ समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत। अरिष्टा अस्माकं वीरा मा परासेचि मत्पय" इति।

ततोऽन्यः "आचमनीयान्याचमनीयान्याचमनीयानि प्रतिगृह्यन्तामि"ति यजमानः। अर्घ्यस्ततप्रतिगृह्य तदेकदेशेनाचामति सकृत् "ॐ आमागन्यशसा सꣳ सृज वर्चसा। तं मा कुरु प्रियं प्रजानामधिपतिं पशूनामरिष्टिं तनूनामि"ति। ततः स्मार्ताचमनम्।

औद्गात्रपद्धतिः।

प्रक्षालयेत्। "ॐसव्यम्पादमवनेनिजेऽस्मिन्राष्ट्रे श्रियं दधे" इति तज्जलैकदेशेन दक्षिणं पादं प्रक्षालयेत् "ॐदक्षिणम्पादमवनेनिजेऽस्मिन्राष्ट्रे श्रियमावेशयामी"ति। शेषोदकेनोभौ पादौ प्रक्षालयेत् "ॐपूर्वमन्यमपरमन्यमुभौ पादाववनेनिजे। राष्ट्रस्यर्घ्या अभयस्यावरुध्या" इति।

"अर्घ्यमर्घ्यमर्घ्यं प्रतिगृह्यतामि"त्युक्त्वा यजमानपुरुषा उद्गातुरञ्जलौ कांस्यपात्रेणार्घ्यं निनयेत्। उद्गाता प्रतिगृह्णीयात् "ॐअन्नस्य राष्ट्रिरसि राष्ट्रिस्ते भूयासमि"ति।

"आचमनीयमाचमनीयमाचमनीयं प्रतिगृह्यतामि"त्युक्ते तज्जलं प्रतिगृह्याचामेत् "ॐयशोऽसि यशो मयि धेही"ति।

हौत्रपद्धतिः।

जो दोहोऽसि विराजो दोहमशीय मयि पाद्यायै विराजो दोहः" इति पाद्यं प्रतिगृह्य ततः पादयोस्तूष्णीं त्रिर्निनयेत्।

"अर्घ्यमर्घ्यमर्घ्यं प्रतिगृह्यतामि"त्युक्ते तदर्घ्यं प्रतिगृह्णामीति प्रतिगृह्य तूष्णीं पादयोर्निनयति।

तत "आचमनीयमाचमनीयमाचमनीयं प्रतिगृह्यतामि"त्युक्ते तत्पात्रं "प्रतिगृह्णामी"ति प्रतिगृह्य "ॐ आपो हि ष्ठा (१)मयोभुव०" इति तिसृभिः ऋग्भिः प्रत्येकमन्त्रान्ते आचामेत्।

(१) ॐ आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन। महे रणाय चक्षसे॥ यो वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः॥ तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः॥ (ऋ० १०।९।१-३)

आध्वर्यवपद्धतिः ।

ततोऽन्यो "मधुपर्को मधुपर्को मधुपर्कः" "प्रतिगृह्यन्तामि"ति यजमानः । ततोऽर्घ्यो दातृहस्तस्थं मधुपर्कं प्रतीक्षते "ॐ मित्रस्य त्वा चक्षुषा प्रतीक्षे" इति । मधुपर्कं प्रतिगृह्णाति—"ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम्प्रतिगृह्णामि" इति वामकरे धृत्वा दक्षिणानामिकया मधुपर्कमालोडयति सकृत्—"ॐ नमः श्यावास्यायान्नशने यत्त आविद्धं तत्ते निष्कृन्तामी"ति । ततोऽनामिकाङ्गुष्ठाभ्यां मधुपर्कैकदेशं गृहीत्वा प्रागुदग्वा क्षिपति, पुनरेव वारद्वयमालोडनप्रक्षेपणे । ततो मधुपर्कैकदेशं प्राश्नाति "ॐ यन्मधुनो मधव्यं परम९० रूपमन्नाद्यम् । तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोऽसानी"ति । एवं द्विरपरं मन्त्रेण, शेषं प्रागसञ्चरे निनयेत् । ततो द्विराचमनम् ।

प्राणान्त्सम्मृशति जलेन "ॐ वाङ्म आस्येऽस्तु" इति मुखे । "ॐ नसोर्मे प्राणोऽस्तु" इति दक्षिणनासायाम् । "ॐ नसोर्मे प्राणोऽस्तु" इति वामनासायाम् । "ॐ अक्ष्णोर्मे चक्षुरस्तु" इति दक्षिणाक्षिणि । "ॐ

औद्गात्रपद्धतिः ।

"मधुपर्को मधुपर्को मधुपर्कः प्रतिगृह्यतामि"त्युक्ते मधुपर्कं प्रतिगृह्णीयात् "ॐ यशसो यशोऽसीति" तस्यैकदेशं हस्ते निधाय पिबेत् "ॐ इदमन्नमयर्ठ० रस इमा गावः सह श्रिया तत्सवितुर्वरेण्यं वाग्बहु बहु मे भूयात्स्वाहे"ति। पुनस्तस्यैकदेशं हस्ते निधाय पिबेत् "ॐ इदमन्नमयर्ठ० रस इमा गावः सह श्रिया भर्गो देवस्य धीमहि प्राणो वै वाचो भूयान्बहुर्मे भूयो भूयात्स्वाहे"ति पुनस्तस्यैकदेशं हस्ते निधाय पिबेत् "ॐ इदमन्नमयर्ठ० रस इमा गावः सह श्रिया धियो यो नः प्रचोदयान्मनो वाच सर्वर्ठ०

हौत्रपद्धतिः ।

ततो "मधुपर्को मधुपर्को मधुपर्कं प्रतिगृह्यतामि"त्युक्ते 'ॐ मित्रस्य त्वा चक्षुषा प्रतीक्षे" इति प्रतीक्षते । "ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्प्रतिगृह्णामि यशसेब्रह्मवर्चसाये"ति मधुपर्कं प्रतिगृह्य वामहस्ते निधाय 'ॐ वसवस्त्वाग्निराजानो भक्षयन्तु" पूर्वार्द्धे सकृन्मन्त्रेण द्विस्तूष्णीं निलिम्पेत् । "ॐ पितरस्त्वा यमराजानो भक्षयन्तु" इति दक्षिणार्द्धे सकृत् । अप उपस्पर्शनम् । "ॐ आदित्यास्त्वा वरुणराजानो भक्षयन्तु" इति पश्चार्द्धे सकृत् "ॐ रुद्रास्त्वेन्द्रराजानो भक्षयन्तु" इत्युत्तरार्धे सकृत् । अपउपस्पर्शनम् । "ॐ विश्वे त्वा देवा प्रजापतिराजानो भक्षयन्तु" इति मध्यादूर्ध्वं क्षिपेत् । सकृन्मन्त्रेण द्विस्तूष्णीम् । ततः "ॐ भूः ॐ भुवः ॐ स्वः" इति प्रत्येकं प्राश्नीयात् । ततः "ॐ भूर्भुवः

आध्वर्यवपद्धतिः।

अक्ष्णोर्मे चक्षुरस्तु" इति वामाक्षणि। "ॐ कर्णयोर्मे श्रोत्रमस्तु" इति दक्षिणकर्णे। "ॐ कर्णयोर्मे श्रोत्रमस्तु" इति वामकर्णे। "ॐ बाह्वोर्मे बलमस्तु" इति दक्षिणबाहौ। "ॐ बाह्वोर्मे बलमस्तु" इतिवामबाहौ "ॐ ऊर्वोर्मे ओजोऽस्तु" इति दक्षिणोरौ। "ॐ ऊर्वोर्मे ओजोऽस्तु" इति वामोरौ। "ॐ अरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सह सन्तु" इति शिरः प्रभृति सर्वाङ्गानि स्पृशेत्। अत्र पुनराचमनं केचिदिच्छन्ति।

औद्गात्रपद्धतिः।

सर्वं मे भूयात्स्वाहे"ति तूष्णीं चतुर्थम्। अत्रोच्छिष्टशङ्का(१) न कार्या। आचमनीयेनाचम्य शेषं ब्राह्मणाय दद्यात्।

नापितेन गौर्गौर्गौरित्युक्त उद्गाता "ॐउत्सृजत गां तृणानि गौरत्त्वि"ति ब्रूयात्। अत्र मातारुद्राणामित्यनुमन्त्रणं नास्ति।

हौत्रपद्धतिः।

स्वः इति सकलशेषं पिबेत्। ततो ब्राह्मणायोच्छिष्टदानं सर्वपानं वा, अप्सु वा प्रक्षिपेत्। ततः (२)स्मार्तमाचमनम्।

"ततः शन्नो देवीरभिष्टय(३) इत्याद्याभिर्ज्योक् च सूर्यं दृशे"इत्यन्ताभिर्हृदयस्थलमभिमृशेत्। "ॐ प्राणपा असि प्राणं मे पाहि" इति नासिके मुखं च युगपदभिमृशेत्। "ॐ चक्षुष्पा असि चक्षुर्मे पाहि" इति च

(१) ताम्बूलेक्षुफले चैव भुक्तस्नेहानुलेपने।
सोमे च मधुपर्के च नोच्छिष्टं मनुरब्रवीत्। लघुहारीत १।३१।
"मधुपर्के तथा सोमे अप्सु प्राणाहुतीषु च।
अनुच्छिष्टो भवेद्विप्रो यथा वेदविदो विदुः"। अङ्गिरास्मृ
"प्राणाहुतिषु सोमेषु मधुपर्के तथैव च।
आस्यहोमेषु सर्वेषु नोच्छिष्टो भवति द्विजः"॥

(२) स्मार्ताचमनं यथा—
"कृत्वाऽऽदौ पादशौचं विमलमथ जलं त्रिः पिबेदुन्मृ
देशिन्यङ्गुष्ठयुग्मं सजलमभिमुखं नासिकारन्ध्रयुग्मम्
अङ्गुष्ठानामिकाभ्यां नयनयुगयुतं कर्णयुग्मं कनिष्ठा-
ङ्गुष्ठाभ्यां नाभिदेशे हृदयमथ तलेनाङ्गुलीभिः शिरोंऽसे"॥
अशक्तौ त्रिः पीत्वा हस्तौ प्रक्षाल्य मुखं विमृज्य खानि स्पृशेदिति निर्णयसिन्धुपूजाविधिनिरूपणे ११९२ पत्रे।

(३) ॐ शन्नो देवीरभिष्टय आपो भवन्तु पीतये। शंयोरभिस्रवन्तु नः॥ ईशाना वार्याणां क्षयन्तीश्चर्षणीनाम्। आपो याचामि भेषजम्॥ अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा। अग्निं च विश्वशम्भुवम्॥ आपः पृणीत भेषजं वरूथं तन्वे मम। ज्योक् च सूर्यं दृशे॥ (ऋ० १०।९।४-७)।

आध्वर्यवपद्धतिः ।

ततोऽन्यो "गावो गावो गावः" इति । यजमानः "प्रतिगृह्यन्ताम्" । ततोऽर्च्यः "ॐ माता रुद्राणां दुहिता वसूना७ स्वसाऽऽदित्यानाममृतस्य नाभिः । प्रनुवोच चिकितुषे जनाय मागामनागामदितिं वधिष्ट । मम चामुकशर्मणो यजमानस्य च पाप्मा हत" उपांशु "ॐ उत्सृजत" इति ब्रूयादुच्चैः ।

ततो यजमानेन दत्ते वाससी प्रतिगृह्य तयोरन्यतरत्परिदधाति "ॐ परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि । शतञ्च जीवामि शरदः पुरूची रायस्पोषमभिसंव्ययिष्ये" इति। तत आचमनम् ।

ततस्तद्दत्त यज्ञोपवीत "यज्ञोपवीतमि"ति मन्त्रेण (परिदधाति) "ॐ यज्ञोपवीत परमं पवित्र प्रजापतेर्यत्सहज पुरस्तात् । आयुष्यमग्र्यं प्रति मुञ्च शुभ्र यज्ञोपवीत बलमस्तु तेज" इति । तत आचमनम् ।

तत उत्तरीयम् "ॐ यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती । यशो भगश्च मा विदद्यशो मा प्रतिपद्यताम्" इति । द्विराचमनम् ।

दत्तं चन्दनमालिप्य जपति "ॐ सुचक्षा अहमक्षीभ्यां भूयासꣳ सुवर्चा मुखेन । सुश्रुत्कर्णाभ्यां भूयासमि"ति ।

ततस्तथैव माल्यानि प्रतिगृह्णाति "ॐ या आहरज्जमदग्नि. श्रद्धायै मेधायै कामायेन्द्रियाय । ता अह प्रतिगृह्णामि यशसा च भगेन च" इति।

औद्गात्रपद्धति ।

एव प्रस्तोतृप्रतिहर्तृसुब्रह्मण्यानां लौकिक दैव मानुपवरणमर्हत्वकर्म च भवति । तत्र विशेषः। "यशसो भक्षोऽसि महसो भक्षोऽसि श्रीभक्षोऽसि श्रिय मयिधेहि" इति मन्त्रेण मधुपर्क निर्भक्षयेयुः प्रस्तोत्रादय. तूष्णीं चतुर्थम् । मातारुद्राणामित्यनुमन्त्रण न कुर्यु । गवि प्रोक्तायां कुरुतेति न ब्रूयुः कलौ निषिद्धत्वात् । "मुञ्चगां वरुणपाशाद्द्विषन्त मे धेहि । तञ्जह्यमुष्य चोभयोरुत्सृज(त) गामत्तु तृणानि पिबतूदकम्" इति प्रस्तोत्रादयो मन्त्र ब्रूयुः ऋत्विज. प्राप्तत्वात् । अस्मिन् मन्त्रे अमुष्यपदे यजमानस्य षष्ठ्यन्त नाम गृह्णीयात् । एको विष्टरो द्वौ वा, स्मार्तसूत्रे गोभिले यज्ञे ऋत्विजां विशेष उक्तः ।

होत्रपद्धति ।

क्षुपी युगपत् । "ॐ श्रोत्रपा असि श्रोत्रं मे पाहि" इति श्रोत्रे, प्रतिश्रोत्रमन्त्रावृत्तिः । "ॐ अनु नो मार्ष्टु तन्वो यद्विलिष्ट" इति मुख विमृज्य ।

ततो यजमानेन 'गौर्गौर्गौरि'त्युक्ते "ॐ मातारुद्राणामि"ति जपित्वा "ओमुत्सृजत तृणान्यत्तु" इति वदेत् । इति मधुपर्क ।

आध्वर्यवपद्धतिः।

तानि धारयति "ॐ यद्यशोप्सरसामिन्द्रश्चकार विपुलं पृथु। तेन सङ्ग्रथिताः सुमनस आबध्नामि यशो मयी"ति।

ततो दातृदत्तकुण्डलादि मन्त्रावृत्त्या "ॐ अलङ्करणमसि भूयोऽलङ्करणं भूयादि"ति।

ततो नैवेद्यं दत्तं प्रतिगृह्णाति। इति मधुपर्कः।

अत्र वा स्वस्तिवाचनम्। यजमानाय सोमसमर्पणम्। यजमानस्य माङ्गल्यकरणम्।

## देवयजनप्रार्थना।

ततो यजमानो देवयजनभूमिं गत्वा दैवर्त्विग्भ्यो मानुषेभ्यश्च देवयजनं प्रार्थयेत्। तत्र दैवप्रार्थनामुपांशु मानुषप्रार्थनामुच्चैः। तद्यथा—

उपांशु-अग्निर्मे होता स मे देवयजनं ददातु, उच्चैः होतर्देवयजनं मे देहि। एवं सर्वत्र। आदित्यो मेऽध्वर्युः स मे देवयजनं ददातु, अध्वर्यो देवयजनं मे देहि। चन्द्रमा मे ब्रह्मा स मे देवयजनं ददातु, ब्रह्मन् देवयजनं मे देहि। पर्जन्यो म उद्गाता स मे देवयजनं ददातु, उद्गातर्देवयजनं मे देहि। आपो मे होत्राशंसिनस्ते मे देवयजनं ददतु, होत्राशंसिनो देवयजनं मे दत्त। रश्मयो मे चमसाध्वर्यवस्ते मे देवयजनं ददतु, चमसाध्वर्यवो देवयजनं मे दत्त। दत्तमिति सर्वेषां यथायथं प्रतिवचनम्।

औद्गात्रपद्धतिः।

## देवयजनप्रार्थना।

अथ यजमानो "अग्निर्मे होता स मे देवयजनं ददातु" इत्युपांशूक्त्वा "होतर्देवयजनं मे देही"त्युच्चैर्ब्रूयात्। आदित्यो मेऽध्वर्युः स मे देवयजनं ददात्वि"त्युपांशूक्त्वा"ध्वर्यो देवयजनं मे देही"त्युच्चैः। "चन्द्रमा मे ब्रह्मा स मे देवयजनं ददात्वि"त्युपांशूक्त्वा, "ब्रह्मन्देवयजनम्मे देही"त्युच्चैः। "पर्जन्यो म उद्गाता स मे देवयजनं ददात्वि"त्युपांशूक्त्वा, "उद्गातर्देवयजनं मे देही"त्युच्चैः। "सदस्यपक्षे" "आकाशो मे सदस्यः स मे देवयजनं ददात्वि"त्युपांशूक्त्वा "सदस्य देवयजनं मे देही"त्युच्चैः। "आपो मे होत्राशंसिनस्ते मे देवयजनं दद"त्वित्युपांशूक्त्वा "होत्राशंसिनो देवयजनं मे दत्ते"त्युच्चैः। "रश्मयो मे चमसाध्वर्यवस्ते मे देवयजनं ददत्वि"त्युपांशूक्त्वा "चमसाध्वर्यवो मे देवयजनं दत्ते"त्युच्चैः। होत्रादीनां "दत्तमि"ति प्रतिवचनम्।

आध्वर्यवपद्धतिः।

ततो देवयजनं जोषयन्ते उच्चतमर्ठ० सममविभ्रᳬंश्यभिनो देवयजनमात्रदेशं पुरस्ताद्धजं प्राक्प्रवणमुदग् वा यत्किञ्चानूचानर्त्विज उद्धतौपधिमूलेऽपरेऽन्ते विमितं कुर्वन्ति प्राग्वर्ठ०शं पुरस्तादुच्चं प्रतिदिग्द्वारमुदग्वंजं घा शालां वा परिवृते चोत्तरापरे सर्वत्र स्फ्येनारत्निना वा मानकरणम्।

अध्वर्युर्यजमानो वा "अयन्त" इति गार्हपत्य एवाग्निमरण्योस्त्रिः समारोह्य सकृन्मन्त्रेण द्विस्तूष्णीम्। "ॐ अयन्ते योनिर्ऋत्वियो यतो जातो अरोचथाः। तञ्जानन्नग्न आरोहाथानो वर्धया रयिम्" (शु०य० ३।१४)। सोमाधाने तु त्रयाणां समारोपः। देवयजनस्य दूरत्वे सभ्यावसथ्ययोः समारोपः, अन्यथा प्रत्यक्षावेव नेयौ।

ततः सर्त्विक् सपत्नीकः सोपकरणो यजमान उदवसाय देवयजनं गत्वा शालास्तम्भं पूर्वार्ध्यं गृहीत्वा(१)ऽरणिपाणिराहेदमगन्मेति।

"ॐ एदमगन्म देवयजनं पृथिव्या यत्र देवासो अजुषन्त विश्वे। ऋक्सामाभ्याᳬं सन्तरन्तो यजुर्भी रायस्पोषेण समिषा मदेम" (४।१)॥

प्रविश्य उत्रासने शालायाᳬं राजानं निदधात्याहृतश्चेत्, प्राक् क्रयादन्नमुपहरन्त्यस्मै हविष्यममाᳬंसं यजमानः "इदमन्नं सोमाय राज्ञे न ममेति"।

कुण्डेषु भूसᳬंस्काराः। अग्निमन्थनं गार्हपत्ये स्थापनम्। सभ्यावसथ्ययोः प्रत्यक्षयोर्मथित्वा वा स्वे स्वे कुण्डे निधानम्। आहवनीयस्य सतसु प्रक्रमेषु कल्पनम्। आहवनीयदक्षिणाग्न्योर्विहरणम्। यजमानोऽपराह्णेऽश्नातीष्टमुपपन्नं वा न वा पत्नी च।

औद्गात्रपद्धतिः।

अथोद्गाताऽऽत्मनो देवयजनगमनकालात् प्राक् तत्तत्कर्मानुष्ठानार्थं प्रस्तोतृसुब्रह्मण्यौ देवयजनं प्रति प्रेषयित्वा स्वगृहं गच्छेत्। यजमानस्य देवयजनयाचनाभावपक्षे तु उद्गातुः सोमप्रवाकाभिमन्त्रणम्। अन्नादिदानम्। कर्मारम्भात्पूर्वं प्रस्तोतृसुब्रह्मण्ययोः प्रेषणम्। स्वस्य क्रय औपवसथ्ये वा गमनम्। दैवमानुषवरणम्। मधुपर्कभक्षणम्। तानूनप्त्रादि सर्वम्, यद्यौपवसथ्ये गमनं तदा तानूनप्त्रादिनिवृत्तिः, सर्वेषामार्त्विज्योपक्रमवेलायां यज्ञोपवीतं चाचमनं च कर्तव्यम्। कर्मानुष्ठानकाले यज्ञाङ्गानामव्यवाय आभिमुख्यं च। प्राङ्मुखैश्च कर्म कर्तव्यमनादेशे।

---

(१) अनेकयजमानके च सर्वेऽरणिपाणयो मुख्यं गृहपतिं शालास्तम्भग्रहणं कुर्वाणमन्वारभन्ते, तदेतत्सूत्रकारो वक्ष्यति "अविभवति गृहपत्यन्वारम्भ (का० श्रौ० १२।१।१३ इति।

आध्वर्यवपद्धतिः ।

ततः कस्मैचित्समर्थाय क्रत्वर्थमपदिशति "क्रत्वर्थं मे गोपाय" "गोपायामी"ति तत्प्रतिवचनम् । "यथाकालꣳ सम्पादय" "सम्पादयामी"ति मः ।

## अथाप्सुदीक्षा

तत उत्तरे परिवृत उदकुम्भस्य प्सुदीक्षा । तत्र मध्यगतं उदकुम्भस्थापनम् । तदुत्तरतो नखनिकृन्तनकङ्कनोदपात्रकुशतरुणक्षुरौदुम्बरदन्तधावनकाष्ठदीक्षावाससामुपकल्पनम् । नापित उपतिष्ठति उपकल्पितानामुत्तरतः प्राङ् मुखो यजमान उदङ् मुखोऽध्वर्युः यजमानस्य नखानि निकृन्तत्यङ्गुष्ठ(ष्ठ) प्रभृतीनि दक्षिणहस्तस्य प्रथमं ततः सव्यहस्तस्य ततो दक्षिणवामपादयोः । कङ्कतेन दक्षिणगोदानं वितार्योदपात्रोदकेनोनत्तीमा आप इति "ॐ इमाऽआप शमु मे सन्तु देवीः" (४।१) यूपवत् (का० श्रौ० सू० ६।१।१२) कुशतरुणं प्रागग्रमन्तर्धाय "ॐ ओषधे त्रायस्व" (४।२) क्षुरेण चाभिनिधाय तूष्णीम् । "ॐ स्वधिते मैनꣳ हिꣳसीः" (४।२) । छित्वोदपात्रे प्रास्यति एवमुत्तरं तूष्णीम् । नापिताय क्षुरं प्रयच्छति तेन केशश्मश्रु वपति ।

ततो लौकिकाभिरद्भिः स्नानम् । औदुम्बरेण दन्तधावनम् । स्मार्ताचमनम् । उदकुम्भोदकेना(१)पो अस्मानिति स्नात्वा "ॐ आपो॰ न्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु । विश्वꣳ हि [illegible] हन्ति देवीः" (४।२) । उद्गिदाभ्य इत्युत्क्रामत्युत्तरपूर्वार्धे "ॐ शुचिरापूत एमि" (४।२) । क्षौमं वस्ते निष्पेष्टवै ब्रूय[illegible] इत्युपा[illegible] भ्युक्ष्य स्नातवस्यं चाऽभौत्रधौतं चिचितकेशं प्रसारितदश[illegible] [illegible]र्युः स मे "ॐ दीक्षातपसोस्तनूरसि तान्त्वा शिवाꣳ शग्मामर्परि[illegible] म्पुष्यन्" (४।२) । न नीविं कुरुते । स्मार्तं द्विराचमनम् [illegible]र्भैः । "[illegible] त्तरीयम् । "यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पत[illegible] [illegible]न्देवयज[illegible] मा विदद्यशो मा प्रतिपद्यताम्" (पा० गृ० सू० २।६।[illegible] [illegible]नं ददाति

एवं प्रतिप्रस्थाताऽपरस्मिन् परिवृते पत्नीं तूष्णीं वपनं[illegible] "सदस्य[illegible] खनिकृन्तनौदुम्बरदन्तधावनकाष्ठदीक्षावाससामुपकल्प[illegible] [illegible]त्युपाꣳशु[illegible] निकृन्तनम् । हस्तपादप्रक्षालनम् । आचमनम् । दन्तध[illegible] [illegible]ाशꣳसि[illegible] करणम् । द्विराचमनम् । उदकुम्भोदकेन स्नानम् । उ[illegible] यजनं मे द्[illegible] [illegible]दित्य"त्यु[illegible]

(१) न तु कुम्भोदकेन स्नानमविधानात् । उदकुम्भनिधानन्त्व[illegible] "दत्तमि"ति देवयाज्ञिकः ।

मणम् । वाससः परिधानम् । आचमनम् । उत्तरीयधारणम् । द्विराचमनम्(१) ।

ततोऽध्वर्युः प्राग्द्वारेण बाहुगृहीतं यजमानं विमितं प्रपाद्य प्रतिप्रस्थाता चापरद्वारेण पत्नीं दीक्षणीयया चरति ।

## अथ दीक्षणीयेष्टिः ।

तत्र यजमानोऽध्वर्युर्वा गार्हपत्यस्य पश्चात्प्रच्योत्तरत उपविश्य पट्समिधो गृहीत्वा करिष्यमाणावधारणं कुर्यात् । अस्मिन्नग्निष्टोमसंस्थे ज्योतिष्टोमे ये केचन वैकल्पिकपदार्थास्त ऋत्विक्प्रत्ययेन मयाऽवधारिताः । तत्र दीक्षणीयादीष्टिषु ब्रह्मवरण—(२)व्रतग्रहण—जप—दक्षिणा(३)—वेद्यालम्भ-समिद्ध्यजुरामभावः । वाचस्पतिप्रैषस्तु भवत्येव, (४)प्रायणीयादिष्वन्वाधानस्याप्यभावः । अग्नाविष्णू एकादशकपालेन पुरोडाशेन, पक्षे—आदित्यान् चरुणा सद्योऽहं यक्ष्ये । सप्तदशो वज्रः, व्रीहिभिर्यागः, ममाग्ने पक्षः, उत्तमे काले व्रतोपायनम्, ममाग्न इत्यादि षडासनम्, न ब्रह्मवरणम्, वाचस्पतिप्रैषः, प्रणीताप्रणयनम्, अग्नीनां परिस्तरणम् । पात्रासादने विशेषः-एकादशकपालानि, पुरोडाशपात्र्येका, नान्वाहार्यपात्रम्, न च तण्डुलाः, पक्षे—उपकल्पनीयानि,

---

(१) पत्न्यश्चेज्ज्येष्ठादिक्रमेण काण्डानुसमयेन सर्वासामप्सुदीक्षा ।

(२) सत्यवदनब्रह्मचर्यादिसङ्कल्परूपं व्रतं सोमार्थे पूर्वमुपेतम् । तच्चासोमसमाप्तेनपरित्यक्तव्यम् । तत्र पुनरुपायनं विरुध्यते । "अग्ने व्रतपते व्रतञ्चरिष्यामि" (सं० १।६) इत्ययमुपायनमन्त्रः न हि चर्यमाणे व्रते 'चरिष्यामि' इति प्रयोगः सम्भवति । तस्मात्प्रसङ्गसिद्धमिति भावः । तथा हि जैमिनिः—"तथा व्रतमुपेतत्वात् । विप्रतिषेधाच्च । सत्यवदिति चेत् । न संयोगपृथक्त्वात्" (१२ । १ । २०-२३) इति ।

(३) सोमयागान्तः पातिनीष्विष्टिष्वन्वाहार्यो दातव्यो न वेति संशये-"चतस्रो वै दक्षिणा हिरण्यं गौर्वासोऽश्व" (श० ४।३।४।७) इत्यादिदक्षिणा प्रधानस्यैव । न त्वङ्गानां, "दक्षिणा सोमस्य" इत्यभिधानात् । अत इष्टिषु चोदकप्राप्तोऽन्वाहार्यो दातव्य इति पूर्वः पक्षः । अत्रोच्यते—दाशमिकदक्षिणान्यायेन (१०।२।८) ऋत्विग्दाननानत्यर्थं, सोमयागमध्यपातिनीषु पृथगानत्यभावान्न दातव्य इति जैमिनेः (१२।१।१६) सिद्धान्तः ।

(४) अत्र दीक्षणीयादिष्वन्वाधानं कर्तव्यं न वेति संशये चोदकप्राप्तत्वात्कर्तव्यमिति प्राप्ते—अग्निधारणार्थमन्वाधानं कर्तव्यम् । तच्च धारणं दीक्षणीयायां कृतं तस्मादन्वाधानं नास्तीति सिद्धान्तः । तथाहि जैमिनिः—"धारणार्थत्वात्सोमेऽग्न्यन्वाधानं न विद्यते" (१२ । १ । १९) इति । "अग्न्यन्वाधानव्रतोपायनारण्यभोजनदाननहवनानि दीक्षणीयाप्रभृति प्रागुदवसानीयायाः सोमे कृतत्वात्" (८ । १ । ४) इति कात्यायनसूत्रं व्याचक्षाणः कर्काचार्यः "कृतत्वादिति अत्र न सम्भवतीत्यतः प्रभृतिशब्दः प्रायणीयादि विषयो द्रष्टव्य" इति वदन् दीक्षणीयायां अन्वाधानं विद्यत एव, प्रायणीयाप्रभृत्येव तु तन्निषेध इत्यभिप्रैति ।

आध्वर्यवपद्धतिः।

इध्मार्बर्हिः, षडवत्तम्, पक्षे-चरुस्थालीमेक्षणम्, (पोतकं चाल्नीं च) नवनीतम्, श्रैफकुदाञ्जनम्, एकविंश० शनिः कुशपवित्राणि, कृष्णाजिनद्वयम्, एकं वा, मेखला, उष्णीषं, कृष्णविषाणा, दीक्षितदण्डः, सतन्त्राया दीक्षणीयायाः उपांशुचरणम्, यागन्तेन वा, शूर्पाग्निहोत्रहवण्यादानादि। धुरीयारोहणे-देवयोरसीत्यूहः। चरुपक्षे अनूहः। ग्रहणे-देवाभ्यां अग्नाविष्णुभ्यां जुष्टं गृह्णामि। पक्षे-आदित्येभ्यो जुष्टं गृह्णामि। प्रोक्षणे-स्वाधिकः। मुसलावधाने-स इदं देवाभ्यां०, पक्षे-अनूहः, तत्रैव पक्षे चर्वर्थपुरोडाशीयानां विभागः। इदमग्नाविष्णवोः, इदमादित्यानाम्, दृषदि धान्यावापे-धिनुहि देवौ, पुरोडाशस्यैकत्वादनिर्देशः, आज्याधिश्रयणमग्नीधः, चरुपक्षे ब्रह्मणः, पक्षे-चरोः, (१)संयवनप्रथनाद्भिरभिमर्शनाभिवासनाना-

औद्गात्रपद्धतिः।

## अथ दीक्षणीयेष्टिः।

अथ दीक्षणीयेष्टौ प्रस्तोता पूर्वमवृतश्चेदिदानीं वृतः सन् 'प्रस्तोतरेहि, इत्यामन्त्रितः पूर्वया द्वारा पत्नीशालां प्रविश्योत्तरेणाग्नीन् गत्वा गार्हपत्यस्य पश्चादुपविश्य प्रधानयागकाले त्वमूष्विति तादयसामनी मध्यमस्वरेण प्रत्येकं त्रिस्त्रिर्गायेत्।

हौत्रपद्धतिः।

## अथ दीक्षणीयेष्टिः।

अपराह्णे दीक्षणीयाग्नावैष्णवेष्टिः। एहि होतरित्यामन्त्रितो होताचम्य तीर्थेन प्रविश्य कं प्रपद्यादि (२)पञ्चदश सामिधेन्यः उपांशु हविः, आवाहने-अग्निमग्न आ ४ वह सोममा ४ वह (उपांशु) अग्नाविष्णू (उच्चैः) आ ४ वह देवानित्यादिसमानम्।

उत्तमे प्रयाजे—भूर्भुवः स्वर्यं ४ यजामहे स्वाहाऽग्निं स्वाहा सोमं

(१)"आदित्येभ्यश्चरुं निर्वपन्ति (श० ३।१।३।२) इत्यादिवाक्ये चरुशब्दः किं स्थालीं वक्ति उत ओदनमिति सन्देहे लौकिकाश्चरुशब्दमल्प पात्रे प्रयुञ्जते। तस्या अदनीयत्वाभावेन पुरोडाशविकृतित्वं मा भूत् किन्तु श्रपणयोग्यतायाः सद्भावात्कपालविकृतित्वं भविष्यति। तस्मात्—चरुः स्थाली इति पूर्वः पक्षः। अन्नमेव चरुशब्देन उच्यते "अदितिमोदनेन" इति वाक्यशेषे ओदनशब्देन चरुरनूद्यते। निघण्टुकारा अपि "हव्यपाके चरुः पुमान्" इति (अमरकोषे २।७।२२) पठन्ति, तस्मात् चरुशब्दोऽन्नवाचीति (जै० १०।१।१०) राद्धान्तः। तस्य च स्थाल्यामेव (जै० १०।१।११) पाकः कर्तव्यः।

चरौ पेषणादिकं कर्तव्यं न वेति सन्देहे चरोः पुरोडाशविकृतित्वात् पुरोडाशे च पेषणादीनां सत्वात् अतिदेशेनात्र प्राप्तौ पेषणसंयवनोपधानादीनि कर्तव्यानीति प्राप्ते—तेषामर्थलोपादकरणमिति जैमिनेः (१०।१ सू० ४९-५८) सिद्धान्तः।

(२) कात्यायनानां शतपथोक्तेः (३।१।३।६) सप्तदश सामिधेन्यः।

आध्वर्यवपद्धतिः ।

मभावः । प्राणदाने-यस्ते०-त्वाग्नाविष्णू गच्छ स्वर्य० । पत्ने-आदित्यान् गच्छ० । सप्तदशेन वज्रेणेत्यववाधनम् । उत्तमे प्रयाजे-इदमग्नये सोमायाग्नाविष्णुभ्यां, पत्ने-आदित्येभ्यः देवेभ्य आज्यपेभ्य इत्यादि । कालेप्रस्तोतुः सामगानं, प्रधानयागे अग्नाविष्णुभ्यामनुब्रूहि अग्नाविष्णू यज निधनवषट्कारसमकालं यागः । इदमग्नाविष्णुभ्यां पक्षे-आदित्येभ्योऽनु-

औद्गात्रपद्धतिः ।

तार्क्ष्यसाम्नोस्तार्क्ष्यऋषिस्त्रिष्टुप् छन्दः इन्द्रो देवता दीक्षणीयायामिष्टौ विनियोगः ।

त्यमूषु । वाजि । ना ३४५ म । देवजूतां २३४ म् । सहो वानन्ता । रुता ३। रंॅ रथानाम्। अरिष्टनां २३४ यि मीम्। पृतना ३४३ जमाशुम्। स्वस्त । यायि । तार्क्ष्यमिहा ३४३ । हे २ वा ५ इमा ६५६ ॥ १ ॥

ईयइया ३ होइ । त्यमूपुवाजिना ३० दे ३ वजूतम् । ई ४ ये ईर्या । हो २३४ इ । सहोवानन्ता । रुता ३। रंॅ रथानाम् । ईय इया ३ होई । अरिष्टा ३ नोयि । मी ३० पृत । नाजेमाशूम् । ई ४ येईर्या । हो २३४५ इ । स्वस्त । यायि । तार्क्ष्यमिहा ३४३ । हूं ३ वा ५ इमा ६५६ ॥ २ ॥(१)

हौत्रपद्धतिः ।

स्वाहा (उपांशु ) अग्नाविष्णू (उ०) स्वाहा देवा इत्यादि समानम् । वार्त्रघ्नावाज्यभागौ—

अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया । समिद्धः शुक्रऽआहुतो३म् (ऋ० ४।५।२७।४) । त्वꣳ सोमासि सत्पतिस्त्वꣳ राजोत वृत्रहा । त्वं भद्रो असि क्रतो३म् ॥

ततः प्रधानम् । (उपांशु) अग्नाविष्णुभ्यां ( उच्चैः ) अनुब्रूहीत्युक्ते-

(उपांशु) अग्नाविष्णू महि तद्वां महित्वं पातं घृतस्य गुह्यानि नाम । दमे दमे सुष्टुतिर्वावृधानापवां जिह्वा घृतमाचरण्या३ओम् । इयं पुरोऽनुवाक्या । "ॐ अग्नाविष्णू महि धाम प्रियं वां वीथो घृतस्य गुह्या जुषाणा । दमे दमे सप्त रत्ना दधाना प्रति वां जिह्वा घृतमुच्चरण्या३त् (उच्चैः) वौषट् । इयं च याज्या (शां०श्रौ०२।४।४) । अत्र प्रस्तोतुर्निधनेन सह वषट्कारं ब्रूयात् । ततो विराजौ(२) स्विष्टकृतो नित्ये वा । अग्नये

(१) छ० आ० ४।१।६।५।१=गे० १, १,१—२—२ ।

(२) प्रेद्धो अग्न (ऋ० ६।१।६।१४) इमो ऽअग्न (ऋ० ७ । १ । १८) इति विराजौ स्विष्टकृतो याज्यानुवाक्ये भवतः शाखान्तरात् ।

आध्वर्यवपद्धतिः ।

ब्रूहि । आदित्यान्यज । इदमादित्येभ्यो । स्विष्टकृदादि । (१)द्विदेवत्यत्वाच्चतुर्द्धाकरणाभावः । बहुदेवत्यत्वाच्चरोरपि । न दक्षिणा । उल्मुकसम-

हौत्रपद्धतिः ।

स्विष्टकृतेऽनुब्रूहीत्युक्ते—

ॐ पिप्रीहि देवाँ उशतो यविष्ठ विद्वाँ २॥ ऋतूँ २॥ ऋतुपते यजेह । ये दैव्या ऋत्विजस्तेभिरग्ने त्वठं० होतॄणामस्या यजिष्ठो३म् । (का०हौ०१।११)।

ततो"ऽग्निꣳस्विष्टकृतं यज" इत्युक्ते भूर्भुवःस्वर्ये यजामहेऽग्निꣳस्विष्टकृतमयाडग्निरग्नेः प्रिया धामान्ययाट् सोमस्य प्रिया धामान्ययाट् ( उपांशु ) अग्नाविष्णवोः ( उच्चैः ) प्रिया धामान्ययाट् देवानामित्यादि प्रकृतिवत् ।

अग्ने यदद्य विशो अध्वरस्य होतः पावक शोचे वेष्ट्वठं० हि यज्वा । ऋता यजासि महिना वियद्भूर्हव्या वह यविष्ठ या ते अद्य ४वौषट् (मं०६ सू०१५ऋक्१४) ।

इडोपाह्वाने विशेषः-उपहूतं बृहदित्यादि देवपुत्र इत्यन्तं प्रकृतिवत्कृत्वा उपहूतोऽयं यजमानोऽस्य यज्ञस्यागुर उद्दृचमशीयेति तस्मिन्नुपहूतः । भक्षः । मार्जनम् । दक्षिणा न भवति । एषा ते० हि । त्रयोऽनुयाजाः । सूक्तवाके-अग्निर्हविरजुषतावीवृधत महो ज्यायोऽकृत सोमो हविरजुषता वीवृधत महोज्यायोऽकृत (उपांशु)अग्नाविष्णू (उच्चैः)हविरजुषेतामवीवृधेतामहोज्यायोऽक्राताां देवा आज्यपा आज्यमजुषन्तावीवृधन्त महोज्यायोऽक्रत अग्निर्होत्रेणेदठं० हविरजुषतावीवृधत महो ज्यायोऽकृत अस्यामृधेद्धोत्रायां देवंगमामाशास्तेऽयं यजमानोऽस्य यज्ञस्या गुर उद्दृचमशीयेत्याशास्ते यदनेन हवि०(२) देवेभ्यः । नमः उपतच्छंयो० दे । उद० ।

---

(१) प्रकृतौ "आग्नेयं चतुर्द्धा करोति" (आप० श्रौ० सू० ३ । ३ । २ ) इति श्रूयते । तत्राविशेषात्सर्वत्र चतुर्धाकरणं कर्तव्यमुत आग्नेय एवेति संशये–आग्नेयवदैन्द्राग्नाग्नीषोमीययोरपि पुरोडाशयोरग्निसम्बन्धात्, "तच्चतुर्धा पुरोडाशं कृत्वा बर्हिषदं करोति" (श० १ । ८ । १ । ४०) इति श्रुत्या पुरोडाशसामान्य एव चतुर्द्धाकारणश्रवणाच्च पुरोडाशत्रय एव चतुर्धाकरणं कार्यमिति पूर्वः पक्षः । आग्नेये पुरोडाशे एव अग्निदेवताया मुख्यः सम्बन्धः, । यद्यपि माध्यन्दिनशाखायां पुरोडाशमात्रे श्रवणमस्ति तथापि शाखान्तरे "आग्नेयं चतुर्धा करोति' इति विशेषस्यैव श्रवणात् "सामान्यविधिरस्पष्टः संह्रियेत विशेषतः" ( तन्त्र वा० ३।४।४७ ) इति न्यायेन सामान्यस्य पुरोडाशवाक्यस्य विशेषेण आग्नेयवाक्येन एकदेवत्ये आग्नेयमात्रे सङ्कोचादाग्नेयमात्रस्यैव चतुर्धाकरणमिति ( जै० ३।१।१९ ) सिद्धान्तस्त्वद्वदत्रापीति भावः ।

(२) पाऽऽशास्ते तदश्यात् तदृध्यात् तदस्मै देवा रासन्तां तदग्निर्देवो देवेभ्यो

आध्वर्यवपद्धतिः ।

सनादि । व्यूहने-अग्नाविष्णवोरु०,अग्नाविष्णू तमपनुदताम् । पक्षे-अग्नाविष्णवोरादित्यानामु०। अग्नाविष्णू आदित्यास्तमपनुदन्तु० । अभ्युदय जुह्वेत्यादि वेद्यालंभवर्जं प्राक् समिष्टयजुषः (१)कृत्वा होतृप्रायश्चित्तान्ते, शालां पूर्वेण बहिः कुशास्तरणं, तेष्ववस्थितं प्राङ्मुख यजमानं नवनीतेनाभ्यङ्क्ते शीर्ष्णोऽध्यनुलोमरु० सपादको महीनां पयोसीति "ॐ महीनां पयोऽसि वर्चोदा असि वर्चो मे देहि" (४।३) । यजमानः स्वयमेव

हौत्रपद्धतिः ।

पत्नीसंयाजान्ता । पत्नीवेदवाचनं स्तरणं च न भवति वेदशेषविमोक-आहवनीयोपस्थानस्थितिनिवृत्तिः अध्वर्युमन्वारभ्यौदुम्ग्रभणानि जुह्वन्तं

---

वनुतां वयमग्नेः परिमानुपाः इष्टं च वित्तं चोभे चैनं द्यावापृथिवी अंऽ० हृस्पातामिहं गतिर्वामस्येदं च नमो देवेभ्यः ( का० हौ० प० १।८ ) ( शां० श्रौ० १ । १४ । ११ ) ।

( १ ) अग्नाविष्णवेष्टौ प्रकृतिवत्सर्वाङ्गेषु प्राप्तेष्वाह कात्यायनः—"प्राक् समिष्टयजुषः करोति" ( ७।२।२९ ) । समिष्टयजुषः प्राक् यान्यङ्गानि तान्येव करोति।

ननु समिष्टयजुर्मात्रस्य प्रतिषेधः "समिष्टयजुरेव न जुहोति नेदिदं दीक्षितवसन परिधाय पुरा यज्ञस्य सꣳस्थाया अन्तं गच्छानीत्यन्तो हि यज्ञस्य समिष्टयजु" ( श० मा० ३।१।३।६ ) रिति ।'सत्यमेतत्, पुरा यज्ञस्य संस्थाया अन्तगमनदोषो मा भूदित्येतत्कारणमुपदिष्टं, ततश्च समिष्टयजुषि कृते यद्यन्तगमनं तर्हि तदुत्तरेषु पदार्थेषु क्रियमाणेषु सुतरामन्तगमनं भवति अतः साधूक्तं 'प्राक् समिष्टयजुष' इति । ।"समिष्टयजुर्वर्ज वा" ( का० ७।२।२६ ) । अथवा समिष्टयजुर्वर्जयित्वाऽन्यत्सर्वं कर्मापवर्गान्तं भवति तन्मात्रस्य प्रतिषेधात् । एवं पक्षद्वयोपन्यासे कृते यः पक्षः श्रेयान् स एवाभ्युपगन्तव्यः । कश्चासौ प्राक् समिष्टयजुषः करोतीति । अत्राहुर्हरिस्वामिनः—'तस्य सप्तदश सामिधेन्यो भवन्ति । उपांꣳशु देवते यजती"ति ( श ३।१।३।६ ) अत्र सप्तदशउपांशुत्वयोर्विधिः इतरेषामनुवादः प्राप्तत्वात् । "समिष्टयजुरेवे" ( श० ३।१।३।६ ) ति समिष्टयजुरादिपदार्थकाण्डावलोपविधिः । कुत एतत् तदन्तार्थवादात् । "अन्तो हि यज्ञस्य समिष्टयजु" ( श० ३।१।३।६ ) रिति । यत्र हि औपचारिकोऽन्यन्तः परिहीयते समिष्टयजुस्तत्र पारमार्थिको ब्राह्मणतरेणरूपो न परिहीयते इति का युक्तिः, तथा सुरेष्वागतेषु यजमानानुवानाः समिष्टयजुर्वर्जं करिष्यन्तीत्यनुपपन्नं यत्तु "समिष्टयजुरेव ने" ति तद्विराहुत्यन्तरापेक्षयावधारणम् । ये तु समिष्टयजुर्वर्जं क्रियां मन्यन्ते तेषामत्र "समिष्टयजुरेवे" त्ययमनुवादो भवति ध्रौवस्यायांन्तरे औदुम्भणहोमे विनियोगात् ( का० ७।३।१९ ) । समिष्टयजुषः सामर्थ्यादेव निवृत्तेः । "नेदिदं दीक्षितवसन" मिति प्रारम्भ एवान्तगमनरूपं न कार्यमित्यर्थः। तथाचापस्तम्बसूत्र (१०।४।७) मानवसूत्रयोः—"पत्नीसंयाजान्ता दीक्षणीया सन्तिष्ठत" इति "पञ्चदश सप्तदश वा सामिधेन्य" इति च । अतएव पुरा यज्ञस्य संस्थाया अन्तगमननिषेधाद्दीक्षणीयायाः प्रभृत्यनूबन्ध्यायाः प्राक् कस्यापि कर्मणः समिष्टयजुः प्रभृति कर्मापवर्गान्तं कर्म न भवति समानन्यायात् । तथा-दीक्षणीया दक्षिणाग्निहोमान्ता ( श० मा० १।८।१।११ ) प्रायणीया शंय्वन्ता ( श०

आध्वर्यवपद्धतिः।

वृत्रस्येत्यदयावनक्ति त्रैककुदाञ्जनेनाभावेऽन्यद् छिर्दक्षिणं त्रिरुत्तरं पराचसकृत्सकृन्मन्त्रः शरेषीकया साग्रया "ॐ वृत्रस्यासि कनीनकश्चक्षुर्दाऽअसि चक्षुर्मे देहि" (४ । ३) अध्वर्युः कुशपवित्रैश्चित्पतिर्मेति पावयति

---

१।६।१।१०) आतिथ्येडान्ता (श० १।६।१।२१) उपसत्प्रधानयागान्ता (श० १।६।१।२२) अग्नीषोमीयो दक्षिणाग्निहोमान्तः (श०१।६।१।२३) सवनीयपशुरनुबन्ध्यपशुश्च समिष्टयजुरन्तौ–सवनीयपुरोडाशाः पशुपुरोडाशाश्चेडान्ताः। यत"स्ते दीक्षणीयां निरवप"न्नित्यादि (श०१।१।६।१।१९) श्रुत्या दीक्षणीयाप्रायणीयादीनां तृतीयसवनान्तानामन्तलोप उच्यते। पश्चाच्च "ते देवा अब्रुवन्। ये न इमे यज्ञाः सामि सꣳस्थिता यानिमान्विजहतोऽगामोप तज्जानीत यथेमान्त्सꣳ स्थापयामे" (श०१।६।१।२८) ति विमर्शपूर्वकं "ते चेतयमानाः एतानि समिष्टयजूꣳष्यपश्यꣳस्तान्यजुहवुस्तैरेतान्यज्ञान्त्समस्थापयन्" "ते वा एते नवयज्ञाः नवैतानि समिष्टयजूꣳषि तद्यदेतानि जुहोत्येतानेवैतद्यज्ञान्त्स ꣳ स्थापयती" (श० १।६।१।२९-३०) ति सर्वेषां दीक्षणीयादीनां तृतीयसवनान्तानां संस्थितानां सदैव संस्थापनं विधीयते। अत एव यज्ञमसमाप्तेरवभृथगमनस्य निषेधाच्चयनेऽपि शतरुद्रियादिषु सर्वजुहोतिषु दर्शपूर्णमासधर्मेतरेऽपि समिष्टयजुषः पूर्णपात्रादि कर्मापवर्गान्तस्य चाभावः। एवं वाजपेये नैवारबार्हस्पत्यचरौ राजसूयान्तर्गतमैत्रावरुणपयस्यादौ च द्रष्टव्यम्। समानन्यायात्। सर्वयज्ञसंस्थायां तु सर्वं समिष्टयजुरादि कर्मापवर्गान्तं क्रियते सर्वयज्ञसंस्था चानुबन्ध्यान्ते भवति तां तु प्रकृत्य "ताꣳहि सर्वोऽनुयज्ञः सन्तिष्ठत" इति श्रवणात् अतोऽनुबन्ध्यान्ते सर्वसाधारणं पूर्णपात्रनिनयनादि कर्मापवर्गान्तं समापनीयम्। हरिस्वामिभिरप्यग्नीषोमीयसवनीयानुबन्ध्यसाधारणस्य शूलावभृथस्यानूबन्ध्यान्ते सिद्धान्तीकृतत्वाच्च। अनुबन्ध्याभावे पयस्यान्ते पूर्णपात्रनिनयनादि कर्मापवर्गान्तमनुष्ठेयं अनूबन्ध्याया स्थाने तस्याः (का०१०।९।१६) विहितत्वात्। सूत्रकारस्याप्ययमेवाभिप्रायो गम्यते यत्प्रागुदवसानीयायाः कस्यापि कर्मणः समाप्तिर्न भवतीति। "अग्न्यन्वाधानव्रतोपायनारण्यभोजनदानवस्त्रवरणानि दीक्षणीयाप्रभृति प्रागुदवसानीयायाः कृतत्वात्" (का० श्रौ० ८।१।४)। इत्यनेनाग्न्यन्वाधानादीनां प्रागुदवसानीयायाः प्रतिषेधात्। (महर्षिजैमिनेरपि बहुभिर्न्यायैः (१२।१।१०-११।१४।१६) इयमेव सिद्धान्तः।) तेनैवं विज्ञायते एतावत्पर्यन्तमग्न्यन्वाधानं व्रतोपायनादिसाधारणमिति तेन समाप्तिरपि प्रागुदवसानीया या एव सर्वसाधारणी युज्यते। अत एव श्रूयते "ताꣳहि सर्वोऽनुयज्ञः संतिष्ठत" इति। यथा द्वादशाहाद्यहर्गणेषु "पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्त" इति पत्नीसंयाजान्तानां सर्वेषामसाधारणं दक्षिणाग्निहोमादि कर्मापवर्गान्तं सर्वमन्त्येऽहनि समाप्यते (जै० १।१।९)। एवमत्रापि येषां सोमान्तर्गतानां दीक्षणीया-पशुपुरोडाश सवनीयपुरोडाशशतरुद्रियादि जुहोति-बार्हस्पत्यचर्वादीनामनन्तापच्छिन्नानां पूर्णपात्रकर्मापवर्गान्तमपेक्ष्यते तत्सर्वमनुबन्ध्यान्ते पयस्यान्ते वा सर्वसाधारणं समापनीयमिति सिद्धम्। अन्तापच्छिन्नानां प्रायणीयातिथ्योपसदग्नीषोमीयसवनीयानूबन्ध्यपशुतत्पुरोडाशानां तु तदपेक्षैव नास्ति। न हि दीक्षणीया कस्यापि भाष्यकारस्य मतेऽन्तापच्छिन्ना। सर्वैरपि समिष्टयजुर्वर्जं वा

आध्वर्यवपद्धतिः ।

सप्तभिः सप्तभिः प्रतिमन्त्रमच्छिद्रेणेति(१) सर्वत्र द्विरुपरिनाभ्युन्मृज्य प्रदक्षिणम् "ॐ चित्पतिर्मा पुनात्वच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः । तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम् (७।४)। पुनर्द्वितीयं सप्तकं गृहीत्वा तथैवोपरिनाभि "ॐ वाक्पतिर्मा पुनात्वच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः । तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम् (४।४)। ततस्तृतीयं गृहीत्वा सकृदवाङ्नाभेः "ॐ देवो मा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः । तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम्" (४।४)। कुशपवित्रत्यागः । एकेन त्रिभिः सप्तभिर्वैकशतेन वा राजसूये । आ वो देवास इति वाचयति(२) यजमानम् ।

"ॐ आ वो देवास ईमहे वामं प्रयत्यध्वरे । आ वो देवास आशिषो यज्ञियासो हवामहे" (४।५) इति ब्रूहि । यजमानः "ॐ आ वो देवास ईमहे वामं प्रयत्यध्वरे । आ वो देवास आशिषो यज्ञियासो हवामहे" । स्वाहा यज्ञमित्यङ्गुली अचते नानाहस्तयोरेवर्ठ० शेषं प्रतिमन्त्रम्। तत्रादौ

हौत्रपद्धतिः ।

यजमानं(३)तदुह स्माह कौषीतकिर्न होतव्या इति श्रुतेः । इति प्रथममहः ।

---

कर्मापवर्गान्ते पूर्वं कर्तव्यमित्यस्य पक्षस्य सिद्धान्तीकृतत्वात् प्रायणीयादिवत्प्रत्यक्षवचनाभावाच्च । तेन "नेदिद"मिति वचनात्समिष्टयजुरादिकं सर्वे तस्या अवशिष्यते । अनेनैव न्यायेनाग्नीषोमीयपशुपुरोडाशादीनामप्यवशिष्यते तत्र समिष्टयजूंषि सर्वसाधारणान्येव सुत्यान्ते हूयन्ते "तद्यदेतानि जुहोत्येतानेवैतद्यज्ञान् सर्ठ०स्थापयति" (श०१।६।१।३०) ति वाक्यात् । इतरत्पूर्णपात्रादिकर्मापवर्गान्तमनूबन्ध्यान्ते तन्त्रेण सर्वसाधारणं समाप्यत इति निरवद्यं, अनूबन्ध्याभावे पयस्यान्ते । पूर्णपात्रस्यासादनप्रोक्षणे अपि अनूबन्ध्यापशुपुरोडाशपात्रासादनकाले पयस्यायां कर्तव्ये लाघवाज्जिनयनसन्निधानाच्चेति दिक् ।

(१) "अनुषङ्गो वाक्यसमाप्तिः सर्वेषु तुल्ययोगित्वादि" (जै० २।१।४८)ति न्यायादत्र अच्छिद्रेणेत्यादेः मन्त्रत्रयेष्वनुषङ्गो भवति ।

(२) "अथाशिषामारम्भं वाचयति" [ श०३।१।३।२४ ) इत्यादौ ऋत्विजश्च द्वावपि वाचयितव्या उत स्व एवेति संशये अविशेषादुभौ वाचयितव्याविति पूर्वः पक्षः । अध्ययनविधिवशादधीतवेदस्य विदितवेदार्थस्यैव याजमानत्वादभिज्ञमेव वाचयेन्न त्वविज्ञमिति (जै० ३।८।१) सिद्धान्तः ।

(३) पञ्चाहुतीर्जुहुयात् "मनो मे मनसा दीक्षितां स्वाहेति प्रथमां वाङ्मे वाचा दीक्षितां स्वाहेति । द्वितीयां,प्राणो मे प्राणेन दीक्षतां स्वाहेति तृतीयां मन्ये प्राणमाह मन्ये ऽयं प्राणश्चक्षुर्मे चक्षुषा दीक्षितां स्वाहेति चतुर्थीं श्रोत्रं मे श्रोत्रेण दीक्षितां स्वाहेति पञ्चमीं तदुह स्माऽऽह कौषीतकिर्न होतव्या (शां० ब्रा० ७।४।शां० श्रौ० ५।४।१४) इति श्रुतेः।

आध्वर्यवपद्धतिः ।

कनिष्ठिके—"ॐ स्वाहा यज्ञं मनस आरभे" । ततोऽनामिके—

"ॐ स्वाहोरोरन्तरिक्षात् यज्ञमारभे" । ततो मध्यमे—"ॐ स्वाहा द्यावापृथिवीभ्यां यज्ञमारभे" । अन्तिमेन मुष्टी कृत्वा "ॐ स्वाहा वातादारभे यज्ञमा०" । स्वाहेत्युक्त्वा वाग्यतः "ॐ स्वाहा" (४।५) अङ्गुष्ठौ तत्सहिते तर्जन्यौ चोत्सृजति ।

अध्वर्युर्यजमानं बाहुगृहीतं (१)वाग्यतं प्रवेशयति पूर्वद्वारेण विमितं प्रविश्याहवनीयगार्हपत्यावन्तरेणागत्य स्वासने उपविशति सोऽस्य सञ्चर आप्रसवात् ।

एवं प्रतिप्रस्थाता पत्नीमभ्यञ्जनादि तूष्णीं (२)पूर्वद्वारेणैव अग्नी अन्तरेणापरेण वा प्रवेशयति । अस्या अप्ययमेव सञ्चर आ प्रसवात् ।

अध्वर्युः औद्ग्रभणानि जुहोति स्थाल्याः स्रुवेणाकूत्या इति प्रतिमन्त्रम् । "ॐ आकूत्यै प्रयुजेऽग्नये स्वाहा" । इदमाकूत्यै प्रयुजेऽग्नये । "ॐ मेधायै मनसेऽग्नये स्वाहा" । इदं मेधायै मनसेऽग्नये । तृतीयं जपत्येव । ( सस्वरं जपः ) ।

"ॐदीक्षायै तपसेऽग्नये स्वाहा" । "ॐसरस्वत्यै पूष्णेऽग्नये स्वाहा" । इदं सरस्वत्यै पूष्णेऽग्नये । "ॐ आपो देवीर्बृहतीर्विश्वशम्भुवो द्यावापृथिवीऽउरोऽअन्तरिक्ष । बृहस्पतये हविषा विधेम स्वाहा" । इदं (३)द्यावापृथिव्यन्तरिक्षबृहस्पतिभ्यो न मम । इदं सवित्रे न ममेति भङ्गः। पञ्चमं जुह्वां ध्रौवमासिच्य द्विश्च स्थाल्याः स्रुवेण तृतीयं स्रुचमभिपूरयति विश्वो देवस्येति । "ॐ विश्वो देवस्य नेतुर्मर्तो वुरीत सख्यम् । विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे स्वाहा (४।७) । इदं(४)विश्व-

( १ ) वाग्यमनस्यास्य कृत्स्नप्राकाशिकाङ्गत्वं (जै०३।१।१४) सिद्धान्तितम् ।

( २ ) अत्र मानवसूत्रे विशेषः—"प्रतिप्रस्थाता तूष्णीं पत्नीं पाययित्वा परया द्वारा प्रपाद्य दक्षिणतः पश्चादपरस्य पत्नीलोकमुपस्थाप्योपवेशयति" । अतोऽपरेण द्वारेण प्रवेशनं समुच्चयम् । अनेकयजमानकेऽभ्यञ्जनादि बाहुगृहीतप्रपादनान्तमेकै स्य यजमानस्य कर्तव्यं संस्कारस्यैतावत्परिमाणत्वात् ।अप्सुदीक्षायामपि नखनिकृन्तनादिप्रपादनान्तमेकैकस्येति ।

( ३ ) अत्र "आपो देवीर्लिङ्गोक्ता" इत्युक्त्वा ( सर्वानुक्रमणिः १।१६ ) मन्त्रलिङ्गे भिन्नविभक्त्यन्तानामेव देवतात्वेनावगमाच्च "इदमद्भ्यो द्यावापृथिवीभ्यामन्तरिक्षाय बृहस्पतये न मम" इति वा त्यागः । एवं सर्वत्राऽनेकदेवतासु ज्ञेयम् ।

( ४ ) इदं विश्वेभ्यो देवेभ्यः सवित्रे मित्राय बृहस्पतये पूष्ण इति वा । अथवा इदं सवित्रे इत्येतावानेव त्यागः, विश्वो देवस्य स्वस्त्यात्रेयः सावित्रीमनुष्टुभमिति सर्वानुक्रमण्या ( १।१६ ) मुक्त्वा"दथ सावित्रीं जुहोती"ति वचने ( श० ब्रा० ३।१।१।२१ ) श्रुतत्वाच्च ।

आज्ययैवपद्धतिः।

देव-सवितृ-मित्र-बृहस्पति-पूषभ्यो न मम। एतामेव वा पूर्णां जुहुयादेकां नेतराः(१)।

[ दीक्षणीयाशेषसमापनम् ]

ततो बर्हिर्होमादि(२) समिष्टयजु—र्ब्राह्मणतर्पणमैव—तर्पण-कर्मापवर्गावर्जं सर्वं पौर्णमासवत्।

इति दीक्षणीयेष्टिः।

## अथ कृष्णाजिनादिदीक्षा।

आहवनीयं दक्षिणेन कृष्णाजिने मांऽसहिते स्यूतान्ते तयोस्तु पश्चादासन्नवती निदधाति प्राग्ग्रीवे। एकं चेत्पश्चात्पादद्विगुणं कृत्वा यजमानो दक्षिणं जान्वाच्यास्ते पश्चादेनयोः। शुक्लकृष्णसन्धिमालभत ऋक्सामयोरिति॥

"ॐ ऋक्सामयोः शिल्पे स्थस्ते वामारभे ते मा पातमास्य यज्ञस्योदृचः" (४।६)।

तयोर्दक्षिणजानुनाऽऽरोहति शर्मासीति।

"ॐ शर्मासि शर्म मे यच्छ नमस्ते ऽअस्तु मा माहिᳪसीः" (४।६)। तेनास्ते ऽपरेन्ते।

मेखलां बध्नीते (३)वेणिं त्रिवृतᳪ शणमुञ्जमिश्रामन्तरं वासस ऊर्गसीति।

"ॐ ऊर्गस्याङ्गिरस्यूर्णम्रदा ऽऊर्ज्जं मयि धेहि"। (४।१०) नीविं कुरुते सोमस्य नीविरिति।

"ॐ सोमस्य नीविरसि"। (४।१०) उष्णीषेण स्वं शिरः प्रोर्णुते विष्णोः शर्म्मेति।

"ॐ विष्णोः शर्मासि शर्म यजमानस्य" (४।१०)।

प्रादेशमात्रीं कृष्णविषाणां त्रिवलिं पञ्चवलिं वोत्तानां परिधानीयस्य दशायां बध्नीते तया (४)कण्डूयनम्।

---

(१) एतान्यौदुम्भभगानि दीक्षणीयाङ्गं तच्छेषभूतद्रव्यसाध्यत्वात्। दीक्षणीयाऽभावे अस्थियज्ञे (का०श्रौ०२५।१३।३६) न भवति ध्रौवाज्यस्य हुतत्वात्।

(२) बर्हिर्होमः प्रणीताविमोकः राक्षसभागः। कर्कमते भागावेक्षणं व्रतविसर्गो भागप्राशनमिति। देवयाज्ञिकमते व्रतविसर्गोऽनुबन्ध्यान्ते पयस्यान्ते वा भवति नात्र।

(३) मेखलाबन्धनमध्वर्योरिति कर्कः। यजमानः स्वयं बध्नाति आत्मनेपदश्रवणादिति देवः।

(४) शाखान्तरे "सुपिप्पलाभ्यस्त्वौषधीभ्य" (आ० श्रौ१०।१०।१२) इति कण्डूयनमन्त्र आम्नातः तत्र यदाऽनेकेषु पाण्याद्यङ्गेषु युगपत्कण्डूरुत्पद्यते किं तदा प्रत्यङ्गं मन्त्रा-

आध्वर्यवपद्धतिः।

तत उदकोपस्पर्शः। काण्वानां तूत्तरीयदशायाम्। उपस्पृशत्येनया दक्षिणस्या भ्रुव उपरीन्द्रस्य योनिरिति "ॐ इन्द्रस्य योनिरसि" (४।१०)।

भूमौ चोल्लिखति सुसस्या इति। "ॐ सुसस्याः कृषीस्कृधि (४।१०)।

अध्वर्युर्मुखसम्मितमौदुम्बरं दण्डं(१) प्रयच्छत्युदगग्रं यजमानाय स गृहीत्वोच्छ्रयस्वेत्येनमुच्छ्रयति।

"ॐ उच्छ्रयस्व वनस्पत ऊर्ध्वो मा पाह्यꣳ० हस आस्य यज्ञस्योदृचः" (४।१०।) तं दक्षिणत उपयच्छे।

अत्र वा मुष्टिकरणवाग्यमने।

एवं प्रतिप्रस्थाता पत्नीं तूष्णीं युगपन्मेखलादि योक्त्रेण(२) वा जालं वा शिरसि त्रिपर्यायं (वा) पृथुमुखो (३)यज्ञियवृक्षशङ्कुः

---

वृत्तिरुत सकृदिति सन्देहे युगपदङ्गेषूत्पन्नायां कण्ड्वां प्रत्यङ्गमभ्यस्यमाने कण्डूयने कण्डूयनकर्मणस्तदपनेयस्य दुःखस्य दुःखापनयनसंस्काराणामङ्गानांच भिन्नत्वात्प्रत्यङ्गमावृत्तिरिति पूर्वः पक्षः। कृष्णविषाणया विधीयमानकण्डूयनशेषमन्त्रस्य संस्कार्यात्मन एकस्यासकृन्मन्त्रपाठेन तत्सिद्धेर्नावृत्तिः कर्तव्येति (जै० ११।४। सू०४१-५०) सिद्धान्तः।

(१) ज्योतिष्टोमे श्रूयते "दण्डेन दीक्षयति" "तस्य शतं दक्षिणा" इति। तद्दीक्षादक्षिणमङ्गप्रधानार्थमुत प्रधानार्थमेव। पुरुषाणामङ्गप्रधानार्थत्वाद्दीक्षादक्षिणस्याङ्गप्रधानार्थतेति प्राप्ते—"दीक्षा सोमस्य" (तै० ब्रा० ३।१।) "दक्षिणा सोमस्य" इति वचनाद्दीक्षादक्षिणं सोमस्य प्रधानस्यैवेति (जै० ३।७।८) सिद्धान्तः।

दर्शपूर्णमासयोरारम्भे सकृदेवान्वारम्भणीया कर्तव्या न प्रतिप्रयोगमावर्तनीया इत्युक्तं नवमे (१।३४-३५)। सा च विकृतिष्वपि कर्तव्येति निर्णीतं द्वादशे (२।६)।

अत्र सन्ति ज्योतिष्टोमे दर्शपूर्णमासविकृतिभूतानि दीक्षणीयादीनि कर्माणि। अस्ति तु प्रकृतावारम्भणीयेष्टिः "आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावा(रि)रप्स्यमाणः" (गो० ब्रा० उ० १।१२।) इति। तत्र सन्देहः दीक्षणीयादिष्वारम्भणीया कर्तव्या उत नेति। "विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यात्" (जै० १०।१।१) इति न्यायेन सर्वं प्राकृतं कर्तव्यमिति पूर्वः पक्षः।

सोमयागारम्भेणैव दीक्षणीयादीनामारब्धत्वात् तेषां पृथगारम्भाभावेन आरम्भणीयोपकारलोपाद्दीक्षणीयादिषु आरम्भणीया न कर्तव्या इति (जै० १०।१।२) सिद्धान्तः।

(२) इत ऊर्ध्वं पत्नीसन्नहनं कर्तव्यं न वेति चिन्तायां दार्शपौर्णमासिकं पत्नीसन्नहनं प्रायणीयादिषु चोदकप्राप्तं कर्तव्यमिति प्राप्ते—यद्यदृष्टाय बन्धः यदि वासोधारणं दृष्टप्रयोजनं, तदुभयमपि सौमिकेन योक्त्रबन्धनेन सिध्यति। अन्यार्थेनापि सन्नहनेन सन्नद्धैवेति न पृथक्सन्नहनमिति सिद्धान्तः। तथा हि जैमिनिकात्यायनौ—"सन्नहनं च वृत्तत्वात्" (१२।१।२९)। पत्नीसन्नहनं च सयोक्त्रत्वाः" (८।१।५) इति।

(३) यज्ञमर्हन्ति यज्ञियाः पलाशादयः। यज्ञर्त्विग्भ्यां घखञौ (पा० ५।१।७१) इति घप्रत्ययः। तथा च श्रुतिः—(श० १।२।५।२०) "ते वै पालाशाः स्युः" रित्यु-

आध्वर्यवपद्धतिः ।

कण्डूयने । ओल्लेखनात्करोति मेखलादि चेत् कृष्णाजिनादि चेद्दण्डान्तम्(१) ॥

इति कृष्णाजिनादिदीक्षा ।

अन्यो दीक्षितोऽयं ब्राह्मण(२) इत्याह त्रिरुच्चैः । प्रतिप्रस्थाता दीक्षितोऽयं ब्राह्मणः ३ । अस्मिन्नुद्वासने प्रैषे ब्राह्मण इत्येव वैश्यराजन्ययोरपि श्रुतेः ( श० ब्रा० ३ । २ । १ । ४० ) ।

एतत्प्राग्यदा च सूर्योऽस्तमियात्तदैव सायमग्निहोत्रं० हुत्वा सर्वमवशिष्टं कर्म कर्त्तव्यं नान्यथा ।

## अथ महावीरसम्भरणम् ।

एकदीक्षापक्षेऽत्रैव महावीरसम्भरणयूपाहुतियूपच्छेदनानि, दीक्षाबहुत्वे तु, यस्मिन् कस्मिंश्चिद्दीक्षादिने तानि ।

तत्रादौ महावीरसम्भरणम् । (३)दीक्षासु महावीरान्सम्भरन्ति ।

---

पक्षस्य "यदि पालाशान्न विन्देद्यो अपि वैकङ्कताः स्युर्यदि वैकङ्कतान्न विन्देद्यो अपि काश्मर्यमयाः स्युर्यदि काश्मर्यमयान्न विन्देद्यो अपि बैल्वाः स्युरथो खादिरा अथ ऽऔदुम्बरा ते हि वृक्षा यज्ञियाः" इति । ब्रह्मपुराणेऽपि—

पालाशाश्वत्थन्यग्रोधप्लक्षवैकङ्कतोद्भवाः ।
काश्मर्योदुम्बरौ बिल्वाश्चन्दनः सरलस्तथा ॥
शालश्च देवदारुश्च खादिरश्चेति याज्ञिकाः ।

(१) अनेकयजमानके एकैकस्य कृष्णाजिनास्तरणादिदण्डप्रदानान्तं कर्तव्यं, एवं पत्नीनामपि । दण्डप्रदानान्ते कृते दीक्षितो भवति, अतः कृष्णाजिनास्तरणादीनि दण्डोच्छ्रयणान्तानि समस्तानि दीक्षाकरणानि न व्यस्तानि । अतः सर्वेषु दण्डोच्छ्रयणान्तेष्वनुष्ठितेषु दीक्षितो भवतीति देवयाज्ञिकः । असामाधानिनो "दीक्षितोय" मित्येतस्मात्प्रागस्तमनेऽग्निहोत्रकाल आगते सायंप्रातर्होमस्तन्त्रेण कर्तव्यः, न प्रातर्होममिति याज्ञिकाः । इष्टेरनन्तरमेव होमादिनिषेध इति मीमांसकाः । तथा हि जैमिनिः—"परेणाऽऽवेदनाद्दीक्षितः स्यात्, सर्वैर्दीक्षाभिसम्बन्धात् । इष्ट्यन्ते वा तदर्था ह्यविशेषार्थसम्बन्धात् । समाख्यानं च तद्वत्" ( ६ । ३ । २९-३१ ) इति ।

(२) अनेकयजमानके चास्योहः । दीक्षिताविमौ ब्राह्मणौ, दीक्षिता इमे ब्राह्मणा इति ।

(३) महावीरग्रहणं पिन्वनरौहिणकपालानामप्युपलक्षणम् । तान्यप्यत्र प्रक्रियन्त एव । प्रयोजनं पिन्वनादीनामपि विस्मरणे सम्भारनिर्वपनादि सर्वं तदुपयुक्तं भवतीति । एकाहेषु—तावदेकादीक्षा तिस्रो दीक्षाश्चतस्रो दीक्षा द्वादश दीक्षा अपरिमिता ( जै० ६।७।१० ) वा दीक्षा भवन्ति ( जै० ६।५।८ ) ( का० ७।१।२४ ) । अहीनेषु—"दीक्षाः सुत्योपसद्भिरेणे" (का० २३।१।२) ति । द्वादशाहे च दीक्षा द्वादशे ( जै० ६।५।१ )ति । तत्रानेकदीक्षापक्षे यस्मिन्नहनीच्छा भवति तस्मिन्महावीरसम्भरणं कर्तव्यम् । एकदीक्षापक्षे च 'दीक्षितोऽयं ब्राह्मण' इति प्रैषानन्तरं प्रागस्तमयान्महावीरसम्भरणं अप्पणान्तं

आध्वर्यवपद्धतिः।

अन्तःपात्ये दक्षिणतः समन्त्रं ब्रह्मास्ते, तत्सव्यपार्श्वे यजमानः। अन्तःपात्यदेशे संभारान्निदधाति, मृदं, वल्मीकवपां, वराहविहतं, पूतीकानजापयो, गवेधुकाः, कृष्णाजिनमग्निचोत्तरतः। अध्वर्युर्देवस्य त्वेत्यभ्रिमादायौदुम्बरीं वैकङ्कतीं वारत्निमात्रीम्।

"ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम्। आददे नारिरसि" (३७।१)। सव्ये कृत्वा दक्षिणेनालभ्य जपति युञ्जत इति।

"ॐ युञ्जते मनऽउत युञ्जते धियो व्विप्राव्विप्रस्य बृहतो व्विपश्चितः। व्विहोत्रादधे व्वयुनाविदेकऽइन्मही देवस्य सवितुः परिष्टुतिः" (३७।२)।

साभ्रिभ्यां पाणिभ्यां मृदमादत्ते पिण्डवद्देवी द्यावापृथिवी इति।

"ॐ देवी द्यावापृथिवी मखस्य वामद्य शिरो राध्यासन्देवयजने पृथिव्याः। मखाय त्वा मखस्य त्वा शीर्ष्णे" (३७।३) आददे।

कृष्णाजिने निदधात्युत्तरतः सर्वत्र। देव्यो व्वम्यृ इति वल्मीकवपाम्। "ॐ देव्योव्वम्यो भूतस्य प्प्रथमजा मखस्य वोद्य शिरो राध्यासन्देवयजने पृथिव्याः। मखाय त्वा मखस्य त्वा शीर्ष्णे" (३७।४) आददे।

इयत्यग्र ऽआसीदिति वराहविहतम्। "ॐ इयत्यग्रऽआसीन्मखस्य तेऽद्य शिरो राध्यासन्देवयजने, पृथिव्याः। मखाय त्वा मखस्य त्वा शीर्ष्णे" (३७।५) आददे।

इन्द्रस्यौजस्थेति पूतीकान्। "ॐ इन्द्रस्यौजस्थ मखस्य वोऽद्य शिरोराध्यासन्देवयजने पृथिव्याः। मखाय त्वा मखस्य त्वा शीर्ष्णे" (३७।६) आददे।

मखायेति पयः "ॐ मखाय त्वा मखस्य त्वा शीर्ष्णे" (३८।६) तूष्णीं गवेधुकाः।

सम्भृतानभिमृशति मखायेति "ॐ मखाय त्वा मखस्य त्वा शीर्ष्णे" (३७।६) अभिमृशामि(१)।

कृष्णाजिनं परिगृह्योत्तरतः परिवृतं गच्छन्त्यध्वर्युप्रतिप्रस्थातृनेष्टोन्नेतारः प्रैतु ब्रह्मणस्पतिरिति।

"ॐ प्रैतु(२) ब्रह्मणस्पतिः प्र देव्येतु सूनृता। अच्छा व्वीरं नर्यम्पङ्क्ति-

कृत्वाऽऽपाकादुद्धरणं प्रातः कर्तव्यम्। 'तान् दिवैवोपवपेद्दिवोद्धपेदि' (श० ब्रा० १४।१।२।२१) स्युक्तत्वात्तत्कालमेव पाकासम्भवात्प्रातरुद्वापो युक्त इति।

(१) केचित्प्रत्येकमभिमर्शनमिच्छन्ति।

(२) "प्रैतु ब्रह्मणस्पति" रिति मन्त्रपाठः सर्वेषाम्। "अथोत्तरतः परिश्रितं भवति।

आध्वर्यवपद्धतिः ।

राधसन्देवा यज्ञन्नयन्तु नः ( ३७।७ ) ।

परिवृते निदधाति सम्भारानुद्धतावोक्षिते सिकतोपकीर्णे प्राग्द्वारे मखायेति ।

"ॐ मखाय त्वा मखस्य त्वा शीर्ष्णे ( ३७।७ ) निदधामि" ।

दक्षिणतः समन्त्रं ब्रह्मास्ते यजमानश्चास्ते । अजाक्षीरं गवेधुकाश्च पृथक्कृत्वा सम्भारैः सꣳसृजति मखायेति ।

"ॐ मखाय त्वा मखस्य त्वा शीर्ष्णे ( ३७।७ ) सꣳसृजामि"

मृदमादाय महावीरं करोति मखायेति ।

"ॐ मखाय त्वा मखस्य त्वा शीर्ष्णे ( ३७ ७ ) करोमि । प्रादेशमात्रमूर्ध्वमासेचनवन्तं मेखलावन्तं मध्यसङ्गृहीतमूर्ध्वं मेखलायास्त्र्यङ्गुलं निष्ठितमभिमृशति मखस्य शिर इति ।

"ॐ मखस्य शिरोऽसि" (३७।८) । स्थापयति आदानमेके । एवमितरौ प्रतिमन्त्रम् ।

मृदमादाय द्वितीयं करोति "ॐ मखाय त्वा मखस्य त्वा शीर्ष्णे" करोमि (३६।८)। अभिमृशति "ॐ मखस्य शिरोऽसि" (३७।८) स्थापयति।

तृतीयं करोति "ॐ मखाय त्वा मखस्य त्वा शीर्ष्णे करोमि" (३७।८) अभिमृशति "ॐ मखस्य शिरोऽसि । मखाय त्वा मखस्य त्वा शीर्ष्णे" ( ३७।८ ) स्थापयति ।

स्रक्पुष्कराकृती पिन्वने रौहिणकपाले परिमण्डले ।

मृदुमुपरायां निदधाति महावीरान् गवेधुकाभिः श्लक्ष्णयति मखायेति प्रतिमन्त्रम् । "ॐ मखाय त्वा मखस्य त्वा शीर्ष्णे श्लक्ष्णयामि" (२७।८)

दक्षिणाग्नेरेकदेशमुल्मुकमादाय तेनाश्वशकृता (१)धूपयत्यश्वस्येति प्रतिमन्त्रमुखावदग्निः ।

"ॐ अश्वस्य त्वा वृष्णः शक्नाधूपयामि देवयजने पृथिव्याः । मखाय त्वा मखस्य त्वा शीर्ष्णे" ( ३७।९ ) ।

कृष्णाजिनमपसार्य तत्राभ्र्या चतुरस्रं हस्तमात्रं गर्तं खात्वा तत्र श्रपणमास्तीर्य तत्र कृतक्रमेण तान् सर्वानधोमुखान्निधाय तेनैवोल्मुकेन

---

तदभिप्रयन्तो।जपन्ति प्रैतु ब्रह्मणस्पतिरि" ( श० ब्रा० १४।१।२।१८ ) त्यादि श्रुते । परिश्रितस्य सिद्धस्यैव निर्देशात्पूर्वं पञ्चारत्निप्रमाणं समचतुरस्रं प्राग्द्वारं कृत्वा तन्मध्ये सप्तभूसंस्कारान्कृत्वा सिकतोपकीर्णं कार्यं, 'तत' कृष्णाजिनं परिगृह्येत्यादि कार्यम् ।

( १ ) अथवा धूमायमानं सकृदेव हस्तेन गृहीत्वा भूमिस्थानेव महावीरान्स्वेन-परिवर्तनेन धूपयति ततस्तूष्णीं पिन्वने रौहिणकपालौ धूपयति ।

आध्वर्यवपद्धतिः।

प्रदहनं च मखायेति प्रतिमन्त्रम् "ॐ मखाय त्वा मखस्य त्वा शीर्ष्णे" (३७।६) प्रदहामि(१)। एवमितरौ।

पक्वानुद्धरत्यृजवे त्वेति प्रतिमन्त्रम्। ॐ "ऋजवे त्वा (३७।१०) उद्वपामि" "ॐ साधवे त्वा उद्वपामि," "ॐ सुक्षित्यै त्वा उद्वपामि"।

अजापयसाऽवसिञ्चति मखायेति प्रतिमन्त्रम्। "ॐ मखाय त्वा मखस्य त्वा शीर्ष्णे" अवसिञ्चामि। एवमितरौ।

तूष्णीं पिन्वनादीनां करणाभिमर्शनश्लक्ष्णनधूपनप्रदहनोद्धरणावसेचनानि दिवैव प्रदहनोद्धरणे, यदि सूर्योऽस्तमियाद्रात्रौ प्रदहनान्तं कृत्वा प्रातरुद्धरणावसेचने कुर्यादिति भद्रः(२)। इति महावीरसम्भरणम्।

## अथ यूपच्छेदनम्।

पूर्णाहुतिवन्निरूप्याज्यं गार्हपत्येऽधिश्रित्य स्रुक्स्रुवं च सम्मृज्योद्वास्योत्पूयावेक्ष्य चतुर्गृहीतं गृहीत्वा समित्पूर्वकमाहवनीये यूपाहुतिं जुहोति चतुर्गृहीतꣳ स्रुवेण चोरुविष्णविति।

"ॐ उरुविष्णो विक्रमस्वोरुक्षयाय नस्कृधि। घृतं घृतयोने पिब प्र प्र यज्ञपतिन्तिर स्वाहा" (५।४१)। इदं विष्णवे न मम।

आज्यशेषमादाय सतक्षा गच्छति यूपम्। अभिमृशत्यत्यन्यानिति, प्राङ्तिष्ठन्नभिमन्त्रयते(३) वा।

---

(१) अथवा महावीराणामादीपने मखायेति त्रयो मन्त्राः। सूत्रे प्रदहने विधानात्। श्रुतौ (श० ब्रा० १४।१।२।२१) वाऽवधाने विहिता इति पूर्वं तत्र प्रदर्शिताः। अथवा तत्कालमेवाग्निं मथित्वा तत्कालमथितेनाग्निना महावीरादीनां धूपनं श्रपणं श्रपणमपसार्योत्तानान् कृत्वा ऋजवे त्वेति प्रतिमन्त्रं महावीरानुद्धरति तूष्णीं पिन्वने रौहिणकपाले चोद्धरति। एतेषां पचनोद्धरणे दिवैव कर्त्तव्ये न रात्रौ।

(२) असम्भवे तु कुम्भकारादिकृतं सिद्धपात्रग्रहणं वा "खात-रुग्ण-छिन्ना-वहद-पिष्ट-दुग्ध-दग्धेषु यजुष्क्रियासम्भवात्" (का० श्रौ० १।१०।१३) इति परिभाषालिङ्गात्।

ततो महावीरादीनामसञ्चरे निधानं महता प्रयत्नेन रक्षणं च कार्यम्। भेदे प्रायश्चित्तस्य बाहुल्यात्। तथा हि तत्प्रायश्चित्तम्। "भूमिर्भूमिमगान्माता मातरमप्यगात्। भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यताम्"इति मृन्मयं भिन्नमभिमृशेत्। "य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः सन्धाता सन्धिं मघवा पुरूवसुरिष्कर्ता विहुतं पुनरि"(का० २५।५।२९-३०)ति धर्म्यम्। परमेष्ठ्यादींश्च (य० सं० ८।५४-५८) चतुस्त्रिंꣳशतं जुहोति" इति।

(३) अभिमन्त्रणलक्षणन्तु—

"मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वेन संस्मरेत्।
शेषिणं तन्मना भूत्वा स्यादेतदनुमन्त्रणम्॥

आध्वर्यवपद्धतिः।

"ॐ अत्यन्यांऽअगान्नान्यांऽउपागामर्वाक्त्वा परेभ्योऽविदम्परोवरेभ्यः । तन्त्वा जुषामहे देव वनस्पते देवयज्यायै देवास्त्वा देवयज्यायै जुषन्ताम्" ( ५।४२ ) ।

पालाशं बहुलपर्णमशुष्काग्रमूर्ध्वसकलशाखं मध्याग्रोपनतमव्रणमभावे खादिरबिल्वरौहितकान् । खादिराभावे सोम इतरात् ।

छेदनप्रदेशे स्रुवेणोपस्पृशति विष्णवे त्वेति-"ॐ विष्णवे त्वा (५।४२) उपस्पृशामि" ।

ओषध इति कुशतरुणं तिरस्कृत्य "ॐ ओषधे त्रायस्व" ( ५।४२ ) । स्वधित इति परशुना प्रहरति "ॐ स्वधिते मैनꣳहिꣳसीः" (५।४२)।

प्रथमशकलं निदधाति । अनक्षस्तम्भं वृश्चति । एकजम् । द्यां मालेखीरिति पतन्तमभिमन्त्रयते ।

"ॐ द्याम्मालेखीरन्तरिक्षं माहिꣳसीः । पृथिव्या सम्भव"। न दक्षिणा पतेत्,

अयꣳ हि त्वेति शोधनमभिमन्त्रणशेषो वा विशेषोपदेशात् । "ॐ अयꣳहि त्वा स्वधितिस्ते तिजानः प्रणिनाय महते सौभगाय (५।४३) ।

अतस्त्वमित्याव्रश्चने जुहोति यूपे वा तत्संस्कारात् स्थाणौ श्रुतेश्च । "ॐ अतस्त्वं देव वनस्पते शतवल्शो विरोह सहस्रवल्शा विवयꣳरुहेम ( ५।४३ ) स्वाहा" । इदं वनस्पतये न मम ।

परिवास्याच्छेदनं पुनः । त्र्यरत्निश्चतुररत्निर्वा । एकरत्निप्रभृतीनेके । अष्टाश्रि करोत्युपरवर्जं । मूलात्स्वरुनिष्पादनम् । अग्राच्चषालं पृथुमात्रमष्टाश्रिमध्यसद्गृहीतमूर्ध्वमग्रे प्रतिमुञ्चति द्व्यङ्गुलं त्र्यङ्गुलं वा तन्नातिक्रान्तं यूपस्य पञ्चारत्निः पञ्चदशपर्यन्तः सोमे दशसप्तचतुर्दशवर्जमपरिमितो वा सप्तदश वाजपेये । एकविꣳशतिरश्वमेधे यथाकायꣳस्यविमा। इति यूपच्छेदनम्(१) ।

औदुम्बरणादारभ्य यतवाग्यजमान अस्तमयाद्वाचं यच्छति पत्नी

---

एतदेवाभिमन्त्रस्य लक्षणं चेक्षणाधिकम् ।"
इत्याश्वलायनश्रौतसूत्रीयनारायणवृत्युक्तं बोध्यम् ।

( १ ) यूपैकादशिनीपक्षे एवमेवैकादश यूपांश्छित्वा वितष्टं च द्वादशमचषालमनष्टाश्रीकृतं देवयजनं नयेत् । यूपाहुतिः (,का० श्रौ० ६ । १ । ४ ) सकृदेव ( जै० ११ । २ । ७ ) भवति । "यूपाहुत्यग्न्यादानयवावपनानि सकृदि" ( का० श्रौ० ८ । ८ । १ ) त्युक्तेः । स्थाण्वाहुतिश्च पृथक् सर्वेषां भवतीति रामवाजपेयिनः ।

आध्वर्यवपद्धतिः ।

च अध्वर्युः अस्तमिते "दीक्षित वाचं(१) विसृजस्व" ३ । "पत्नि वाचं विसृजस्वे"ति त्रिराह पृथक् ।

यजमानः अग्निमभ्यावृत्य व्रतं कृणुतेति वाग्विसर्जनं विरुक्त्वा "ॐ व्रतङ्कृणुत व्रतङ्कृणुत व्रतङ्कृणुत" ( ४ । ११ ) अग्निर्ब्रह्मेति च सकृत् "ॐ अग्निर्ब्रह्माग्निर्यज्ञो वनस्पतिर्यज्ञियः" ( ४ । ११ ) । भूर्भुवः स्वरिति वा "ॐ भूर्भुवः स्वः" ।

अत ऊर्ध्वमामुष्टिविसर्गादनस्तमितेऽनुदिते च त्रिराह "दीक्षित वाचं यच्छ, पत्नि वाचं यच्छे"ति । यथोक्तं विसर्जनम् ।

व्रतदुघे दोहयति यजमानः । 'गावौ धुक्ष्वे'ति प्रैषः । तद्दीक्षितौ(२) भवतः । प्रथमे व्रते व्रीहियवयोरन्यतरमावपत्युभावेके तद्व्रतमदोहे स-र्वौषधं० सर्वसुरभि वैके ।

अध्वर्युर्गार्हपत्ये दीक्षितस्य व्रतस्य श्रपणं कुर्यात् । दक्षिणाग्नौ प-त्न्याः लौकिकीं यवागूं राजन्यस्य तथामिक्षा वैश्यस्य कांस्यपात्रेणाध्व-र्युर्यजमानाय दीक्षितसञ्चरेण व्रतं प्रयच्छत्यनुत्सिक्तमपररात्रे सायंदोह-मपराह्णे प्रातर्दोहम् ।(३)

---

( १ ) अनेकयजमानके अस्योहः । 'दीक्षितौ वाचं विसृजेथा'मिति द्वयोः । "दीक्षिता वाचं विसृजध्व"मिति बहुषु । पत्नीशब्दस्य तु नोहः प्रकृतावप्यसमवेतत्वात् ।

( २ ) ज्योतिष्टोमे दीक्षितस्यान्नभोजनाभावे व्रतमाम्नायते—"पयोव्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य" इति । तत्पुरुषार्थमुत क्रत्वर्थमिति संशये प्रकरणं बाधित्वा पुरुषसंयोगाद्व्रतस्य पुरुषप्रीत्यर्थतया लब्धफलस्य पुरुषार्थत्वमिति पूर्वः पक्षः । पुरुषाणां क्रियार्थानां शरीरधारणार्थो बलकरणार्थश्चायं संस्कारो व्रतं नाम । स क्रतुधर्मो भवितुमर्हति,प्रकरणानुग्रहाय, पुरुषार्थत्वे सति फलं कल्प्यं, कॢप्तमितरत्र । प्रयोगवचनेनोपसंहृतं तत्प्रधानस्य । तस्मात्क्रत्वर्थमिति ( जै० ४ । ३ । ४ ) सिद्धान्तः ।

"पयो व्रतं ब्राह्मणस्य यवागू राजन्यस्यामिक्षा वैश्यस्य" अत्र सन्देहः किं यस्यापरं भोजनं न विद्यते स पयो व्रतयेत्, यवागूमामिक्षां वा, उत विद्यमानेऽपीति । तदेतदसत्यन्यस्मिन्भक्षे कर्तव्यं, अन्याभावस्य निमित्तत्वात् । निमित्ते सति नैमित्तिकस्यानुष्ठेयत्वादिति प्राप्ते न ह्यत्रान्याभावो निमित्तत्वेन श्रुतः । तस्मात्-सत्यप्यन्यस्मिन्भक्षे-नियमादृष्टाय पय एव व्रतयेदिति ( जै० ६ । ८ । ८ ) सिद्धान्तः ।

( ३ ) ज्योतिष्टोमे श्रूयते—"अथास्मै व्रतं प्रयच्छति अतिनीय मानुषं कालं सायं दुग्धमपररात्रे प्रातर्दुग्धमपराह्णे" (श० ३।२।२।१६) इति । तत्र सन्देहः किं यस्याजीर्णिः सम्भाविता तेनापि व्रतयितव्यमुत नेति । "नियतं वाऽर्थवत्वात्स्यादि"ति न्यायेन ( जै० ६।८।२६ ) ( विहितत्वात् ) व्रतयितव्यमेवेति पूर्वपक्षे—यजमानस्य रोगोत्पत्त्या क्रतुविरोध एव सम्भाव्येत । तेन प्रधानविरोधादजीर्णसम्भवे न व्रतयितव्यमिति ( जै० ६ । ८ । ९ ) सिद्धान्तः ।

आध्वर्यवपद्धतिः।

यजमानः स्वासने कृष्णाजिनयोः दैवीं धियमिति व्रतायोपस्पर्शनं कुर्यात्। व्रतार्थमाचमनम्। "ॐ दैवीं धियं मनामहे सुमृडीकामभिष्टये। वर्चोधां यज्ञवाहसꣳ सुतीर्था नो असद्वशे" (४। ११)।

ये देवा इति व्रतयत्यग्नये कांस्यपात्रे "ॐ ये देवा मनो जाता मनोयुजो दक्षक्रतवस्ते नोऽवन्तु ते नः पान्तु तेभ्यः स्वाहा" (४ ११)।

आचम्य श्वात्राः पीता इति नाभिमालभते "ॐ श्वात्राः पीता भवत यूयमापो अस्माकमन्तरुदरे सुशेवाः। ता अस्मभ्यमयक्ष्मा अनमीवा अनागसः स्वदन्तु देवीरमृता ऋतावृधः" (४।१२)। पत्नी लौहे तूष्णीं व्रत्यभक्षणमात्रं पत्न्या व्रतश्रपणप्रदाने प्रतिप्रस्थातुरिति संप्रदायः।

मेदयन्कृष्णविषाणया लोष्टं किञ्चिद्वाऽऽदत्त इयं त इति।

"ॐ इयं ते यज्ञिया तनूः"।

अपो मुञ्चामीति मेहति "ॐ अपो मुञ्चामि न प्रजाम्। अꣳहोमुचः स्वाहाकृताः पृथिवीमाविशत"। शौचाचमनान्ते—

पृथिव्या सम्भवेत्यात्तं निदधाति "ॐ पृथिव्या सम्भव" (४।१३)।

अग्ने त्वमित्युक्त्वा स्वपित्यधः प्राङ् दक्षिणतोऽग्निमुखः "ॐ अग्ने त्वꣳ सुजागृहि वयꣳ सुमन्दिषीमहि। रक्षा णो अप्रयुच्छन् प्रबुधे नः पुनस्कृधि" (४।१४) इति प्रथममहः॥

## (अथ द्वितीयमहः।)

अग्निमभ्यावृत्तं विबुद्धमस्व(१)प्स्यन्त पुनर्मन इति वाचयत्यध्वर्युः।

"ॐ पुनर्म्मनः पुनरायुर्म्मऽ आगन्पुनः प्राणः पुनरात्मा मऽ आगन्पुनश्चक्षुः पुनः श्रोत्रम्मऽ आगन्।

वैश्वानरोऽ अदब्धस्तनूपाऽ अग्निर्नः पातु दुरितादवद्यात्" इति ब्रूहि। यजमानः—

"ॐ पुनर्म्मनः पुनरायुर्म्म आगन्पुनः प्राणः पुनरात्मा मऽ आगन्पुनश्चक्षुः पुनः श्रोत्रम्म आगन्।

वैश्वानरोऽ अदब्धस्तनूपाऽ अग्निर्नः पातु दुरितादवद्यात्" (४।१५)

अनुदिते दीक्षित वाचं यच्छ ३। पत्नि वाचं यच्छेति त्रिराहाध्वर्युः।

उदिते च दीक्षित वाचं विसृजस्व ३। पत्नि वाचं विसृजस्वेति त्रिराह।

यजमानस्य व्रतङ् कृणुतेत्यादि (पत्र ३२) पूर्ववत्। तत्र स्निनं

(१) आहवनीयाभिमुखीभूतं यजमानं विगतनिद्रं पुनः स्वापमकरिष्यन्तं पुनर्मन इति वाचयति।

गावौ धुत्वेति मैवः(१)। व्रताधिश्रयणं पूर्ववत् ( पत्र ३२ )।

त्वमग्ने इत्याह क्षुध्या ऽग्नत्यं वा व्याहृत्य।

"ॐ त्वमग्ने व्रतपाऽ असि देव आमर्त्येष्वा। त्वं यज्ञेष्वीड्यः" (४।१६)।

लब्धमालभ्य(२) वाचयति रास्वेयदिति। अध्वर्युर्गामालभस्वेत्यादि यथाद्रव्यम्।

"ॐ रास्वेयत्सोमा भूयो भर देवो नः सविता व्वसोर्दाता व्वस्वदादि"ति ब्रूहि। यजमानः—

ॐ रास्वेयत्सोमा भूयो भर देवो नः सविता व्वसोर्द्दाता व्वस्वदात् (४।१६) आलब्धुमशक्येऽ(३)भिमन्त्रणम्।

## ( अथ दीक्षितनियमाः। )

अथ नियमाः। शूद्रसम्प्रवेश-सम्भाषा-प्रत्युत्थाना-भिवादनोदकावायवर्षाणि वर्जयेत्प्रागवभृथात्। परिह्वालं वदति विचक्षणचनसितवर्तो वाचम्। शालासनास्वप्नौ सन्धिवेलयोः वेद्यांसुत्यासु। अप्रायश्चित्तमपराधे। इतरेतरस्मिन्वोपहवमिच्छेरन्। पत्न्यामेकदीक्षा। इति नियमाः(४)—

---

(१) अत्र साग्नौ (चयने) यजमानोऽ'हरहरप्रयात(११।७५)'मिति मन्त्रेण स्वाहान्तेनोखायां समिधमादधाति। ततो भस्मापोऽभ्यवहरणादि प्रायश्चित्यन्तम्। ततो विष्णुक्रमवात्सप्रे समासेन। ततोऽध्वर्युः पलाशशाखया गार्हपत्यस्य चितेः स्थानस्य सम्मार्जनादि निवेदान इत्युपस्थानान्तम्।

(२) शाखान्तरे "दीक्षितो भृतिं वन्वीते"ति ( आ० श्रौ० १०।१८।४ ) दीक्षितस्य भृतियाचनार्थं प्रयाणं विहितमस्ति। तत्र याचने क्रियमाणे यद्धिरण्याद्यगवादि यत्कश्चिद्ददाति तल्लब्धहिरण्याद्यालभ्य हिरण्यमालभस्व गामालभस्वेत्येवमादिना प्रपेणालम्भं कारयित्वा रास्वेयदित्यमुं मन्त्रं यजमानं वाचयति। "अथ यद्दीक्षितायामिहरन्ति तस्मिन्वाचयति रास्वेयदिति" ( श० ३।२।२।२५ ) श्रुतेः। आपस्तम्बः—

"दीक्षितो द्वादशाहं भृतिं वन्वीत यज्ञमेव तत्सम्भरतीति विज्ञायते। पूषा स न्येति सनीहारान्सं शास्ति। चन्द्रमसीत्येतैर्यथालिङ्गं प्रतिगृह्णाति देवः सविता वसोर्वसुदावेत्यन्यानि' ( १०।१८।४-७ )। तथा "पृथगरणीष्वग्नीन्समारोप्य रथेन प्रयाति। तदभावे रथाङ्गमादाये ( १०।११।६ ) त्यादि।

(३) यदा कश्चिद्दाता प्राह ममान्यस्मिन्देशे एका गौर्वर्तते हिरण्यादि वा तुभ्यं दास्यामि तदा विप्रकृष्टत्वात्तस्यालम्भः।कर्तुं न।'शक्यत।तदाभिमन्त्रणमिति भावः।

(४) दीक्षितः शूद्रेषु न प्रविशेत् शूद्रैः सह सम्भाषणं न कुर्यात् अथवा शालामध्ये शूद्रस्य प्रवेशो वारणीयः, यदि शूद्रेण सम्भाषणेनावश्यं कार्यं भवति तदा त्रैवर्णिकमन्तरा कृत्वा तेन कारयितव्यं न तु साक्षात्, प्रत्युत्थानार्हस्यापि वृद्धगुर्वादेः प्रत्युत्थानं न

आध्वर्यवपद्धतिः।

कार्यम्, अभिवादनञ्च। उदक्यान्त्ये प्रवेशनं न कार्यं वृष्ट्युदकधारासंयोगो वर्ज्यः कोमलं वदेत् न परुषं संस्कृतां वाचं वदेत्। अन्नदानपरां सत्यां वाच वदेत्। विचक्षणशब्दवर्ती चनसितं शब्दवर्ती च ब्राह्मणादिनामधेयभूतां वाणीं वदेत्। तथा च मानवे—

"न प्रत्यक्षनाम्नाचक्षीत चनसिन्वेत्यर्हता सह सम्भाषमाणे ब्रूयाद्विचक्षणेतीतरैरिति। (२।१।२।१९)। आपस्तम्बे (१०।१।२६) च—

जागर्त्येतां रात्रिं क्रीते राजनि द्वितीया थः सुत्यायां तृतीयायाम्। ।चनसितं विचक्षणमिति नामधेयान्तेषु निदधाति। चनसितेति ब्राह्मणम्। विचक्षणेति राजन्यवैश्यौ। परिगणेन मानुषीं वाचं वदति। न स्त्रिया न शूद्रेण सम्भाषेत नैनमनुप्रपद्येत यद्येनं शूद्रेण सम्वाद उपपद्येत ब्राह्मणराजन्यवैश्यानामेकं ।ब्रूयादिममित्थं ब्रूहीति वाजसनेयकम् ( श० ब्रा० ३।१।१।१० )। कामं शूद्रेण सम्भाषेत यः पापेन कर्मणानभिलक्षितः स्यादिति शाट्यायनकम्। अभिवदति नाभिवादयतेऽन्याचार्यं श्वशुरं राजानमिति शाट्यायनकम्। न चास्य नाम गृह्णीयात्। न च दन्तान्दर्शयते। हस्तेनापिगृह्य स्मयते। मधु मांसं स्त्रियमवतमुपरिशय्यां ष्ठीवनं विकाले निष्क्रमणं दीक्षितविमितात्प्रवासमिति वर्जयेत्। न दिवा मूत्रपुरीषे कुर्यात्। यदि कुर्याच्छायायाम्। न प्रतीच्या द्वारा निष्क्रामति। नाकृतसंयुक्तामाहुतिं जुहोति नाग्निहोत्रम्। न दर्शपूर्णमासाभ्यां यजने। न पचते। न दीक्षितवसनं परिदधीत। नास्य पापं कीर्तयेत्। नान्नमदनीयादिति।

काठके च—यदि प्राक्कालादङ्गुलीर्वाचं चोत्सृजेदिदं विष्णुर्विचक्रमे बृहस्पते जुषस्व नस्त्वमग्ने व्रतपा असीत्यग्निमुत्तमयेति।

आश्वलायनसूत्रे—दीक्षणादि पित्र्याणां दैवानां च धर्माणां प्राकृतानां निवृत्तिः सर्वशश्च वर्जयेयुर्ग्रामचर्यां सरणं विवृतम्मयनं स्त्र्यभिहासमनार्याभिभाषणमनृतं क्रोधमपां प्रगाहणमभिवर्षगमारोहणं च वृक्षस्य नावो वा रथस्य वा दीक्षिताभिवादनं दीक्षितस्त्रोपसदामुमो मुञ्चन्ता समसिद्धान्ता. पूर्वारम्भिगममितरतरं वा सर्वसाम्ये यथा दयो नृत्तगीतवादितान्यन्यांश्चावृत्योपचारान्न चैनान्बहिर्वदिसतोऽभ्याश्रावयेयुरिति ( ४४१ पत्रे )।

सायं काले शालायामेवोपवेशनं कर्तव्यं नत्वितस्ततो गमनं प्रातः सन्ध्याकाले च स्वापो न कार्य. उत्थायोपवेष्टव्यम्, अस्यासनास्वप्नस्यापराधे यद्यपि प्रायश्चित्तं किमपि नास्ति तथाप्ययं नियमोऽवश्यं पालनीय.। अथवास्य नियमस्यातिक्रमे अनेकयजमानके परस्परमुपद्रवप्रार्थनं कार्यं दीक्षिता उपद्रवध्वमित्येवं अग्निष्टोमादावेकयजमानके एत नियमातिक्रमे पत्न्या उपद्रवप्रार्थनं प्रायश्चित्तं पत्न्युपद्रवस्वेति सा च उपद्रुत इति प्रसौति।तथा दन्तधावननित्यस्नानाग्निहोत्रावसथ्यहोमवैश्वदेवतर्पण सन्ध्योपासनादिकं किमपि न करोति तत्र दीक्षामध्ये एवं नियमयुक्त आस्ते।

त्रिषो रात्रीर्व्रतं चरेत्। अमांसाशयमृन्मयपायी। स्त्री शूद्र शव कृष्णशकुनिशुना चादर्शनमसम्भाषा च तैः। शवशूद्रसूतकान्नानि च नाद्यात्। मूत्रपुरीषे ष्ठीवनं चातपे न कुर्यात्सूर्याच्चात्मानं नान्तर्दधीत। तप्तेनोदकार्यान्कुर्वीत। अवज्योत्य रात्रौ भोजनम्। सत्यवदनमेव वा। दीक्षितोऽप्यातपादीनि कुर्यात्प्रवर्ग्यवांश्चेद्। ।( पा० गृ० सू० २।८। १—९। श० ब्रा० १४।१।१।२८ ) इति।

ब्रह्मचर्यसत्यवदनादिनियमेषु याथाकाम्यमुत नेति विचारे "फल्गुत्वाम।मारम्भे या-

आध्वर्यवपद्धतिः ।

थाकामी फलार्थित्वा" (का० श्रौ० १।२।१०)दिति सर्वकर्मस्विच्छयानुष्ठानप्राप्तौ—"न नियमनिमित्ताग्निहोत्र—दर्शपूर्णमासदाक्षायणाग्रयणपशुषु प्रवृत्ते (१।२।११)" रिति सूत्रेण न याथाकाम्यमिति । तथा हि सूत्रार्थः-नियमः = सत्यं वदेदित्यादिकः, निमित्तं = कपालविनाशादि, अग्निहोत्रं = सायंप्रातर्होमः, दर्शपूर्णमासौ = प्रकृतीष्टी, दाक्षायणोऽपि दर्शपूर्णमासविशेष एव, आग्रयणं नवयज्ञः, पशुर्निरूढः, एषु नियमादिषु पञ्चान्तेषु सूत्रोक्तेषु कर्तुं न याथाकाम्यम् । कुतः प्रवृत्तेः शास्त्रं ह्येतेषु नियमेन पुरुषं प्रवर्तयति अत एतेषां नियोगतोऽनुष्ठानं कर्तव्यम् नेच्छया नियमेषु तावत् "सत्यं वदेत्, नानृतं वदेत्" "अधः शायी स्यात्" (श० ब्रा० १।१।६) इत्येवमादिशास्त्रं नियमेन प्रवर्तयति कथं यदि नियमेषु याथाकाम्यं स्यात्तर्हि नियमशास्त्रमनर्थकं स्यात् शास्त्रं विनापि याथाकाम्यस्य सिद्धत्वात् सर्वोऽपि यदेच्छति तदा सत्यं वदति अधः शेते वा, न च वेदे मात्रामात्रस्याप्यानर्थक्यमिष्यते अतः शास्त्रार्थवत्त्वाय नियमेषु न याथाकाम्यमिति । तदयमनृतवदननिषेधः क्रत्वर्थः संयोगः न तु पुरुषार्थः तथा हि जैमिनिः—

"अकर्म क्रतुसंयुक्तं संयोगान्नित्यानुवादः स्यात्, विधिर्वा संयोगान्तरात्" (३।४।१८—१९) न्यायमाला च—

"अनृतं न वदेद्दीक्षः पुंधर्मो वाऽनुवादगीः ।
सक्रतौ पुंसि शुद्धे वा क्रतौ यद्वा विधिः क्रतौ ॥
अनृतोक्तेः पुमर्थत्वात्तन्निषेधस्तथाविधः ।
स्मार्तानुवादः पुंस्क्रत्वोः श्रुतिप्रक्रिययोर्वशात् ॥
नाऽऽख्याते पुरुषानुक्तिः प्रकृतावेव प्रयाजवत् ।
सत्योक्तिनियमादन्य संयोगोऽतः क्रतौ विधिः" ॥
(३।४।८।१४—१६) इति ।

दीक्षितस्यामनोज्ञस्वप्नादिदर्शने प्रायश्चित्तमाम्नातम् । तत्रयथामनोज्ञस्वप्नदर्शने—दीक्षितोऽमनोज्ञꣳस्वप्नं दृष्ट्वा जपेत् "पर्यावर्ते दुःस्वप्न्यात्पापात्स्वप्न्यादभूत्यै ब्रह्माहमन्तरं करवे परः स्वप्नमुखा क्षुधो"ति । दीक्षितस्य रेतःस्कन्दने—इन्द्रियꣳस्कन्नमभिरासिञ्चे "यो मेऽद्य पयसो रसः यदि दोषादुदर्पियः । अग्निहोत्रमिव सोमेन तमहं पुनराददे" इति । दीक्षितस्य जलतरणे—उदकं चेत्तरेत्तदभिमन्त्रयेत "उन्दतीर्बलं धत्तौजो धत्त सहो धत्त मा मे दीक्षां मा तपो निर्वधिष्टे"ति । अववर्षणे-"उन्दतीर्बल" मित्यनेनाभिमन्त्रणम् । दीक्षितस्यामेध्यदर्शने-अमेध्यं दृष्ट्वा सूर्यमुपतिष्ठेत "बद्धं मनो दरिद्रं चक्षुः सूर्यो ज्योतिषां श्रेष्ठो दीक्षे मा मा हासी"रिति । दीक्षितस्याङ्गे शोणितोत्पत्तौ—"हृदियाभ्योऽद्भ्यः स्वाहे"ति जुहुयात् । एवं निष्ठीवेच्चेद् "बीभत्साभ्योऽद्भ्यः स्वाहे"ति । धावेच्चे"द्रायवे स्वाहे"ति । स्विद्याच्चे"त्तपस्याभ्योऽद्भ्यः स्वाहे"ति । स्वप्याच्चे"त्प्रजापतये स्वाहे"ति । आश्रुकरणे "तृप्ताभ्योऽद्भ्यः स्वाहे"ति । छर्दाविष्टः पयः पीत्वोदकं वा छर्दयीत निष्ठ्यूतवद्धोमः (का० २५।११।२१—३२) इति । पत्न्या अप्येषु निमित्तेष्वेतान्येव प्रायश्चित्तानि ।

अथैतत्संदिह्यते किं युगपदनेकामनोज्ञस्वप्नदर्शने सकृन्मन्त्रवचनमुत भेदेनेति । तथा नदीतरणेऽपि च स्रोतसां भेदे किं भेदेन मन्त्रवचनं उत सकृदिति । अववर्षणेऽपि च

आध्वर्यवपद्धति ।

## ( अथ प्रायणीयेष्टिः । )

अथ प्रायणीया । दीक्षान्ते प्रायणीयमदित्यै(१)चरु निर्वपति । न सङ्कल्पो नान्वाधानम्, न व्रतोपायनारण्यभोजने । न ब्रह्मवरणम् । चतुरासनम् । वाचस्पतिप्रैष । प्रणीताप्रणयनम् । आहवनीयस्यैव परिस्तरणम् । पात्रासादने—

औद्गात्रपद्धति ।

अथ द्वितीयेऽहि प्रायणीयायां प्रस्तोता पूर्ववद्गार्हपत्यस्य पश्चादुपविश्य चरुहोमकाले "प्रो अयासीदिति" प्रयद्वार्गव तृचे गायेत् ।

हौत्रपद्धति ।

श्वोभूते प्रायणीयेष्टिः । एहि होतरित्यामन्त्रितो होताऽऽचम्य तीर्थेन प्रविश्य क प्रपद्यादि प्रञ्चदश सामिधेन्य, उपांशु हवि, ( शाङ्खायनानां ) नाज्यभागौ भवत स्वसूत्रे ( शां० श्रौ० ५।५।६ ) पठितम् ।

अनाज्यभागपक्षे—आवाहने "आ ४ वह देवान्यजमानाय पथ्या स्वस्तिमग्नमा ४ वहे"त्यादि ।

---

युगपदनेकधारासन्निपाते किं प्रत्यवयवेण मन्त्रवचनमुत सकृदिति ? एवं युगपदनेकामेध्यदर्शने वनीवाहनप्रयाणे ( जै० ६।८।१ ) चेति ।

यदि निद्रा मध्ये प्रबोधैरल्पेऽर्थवयायेत, नदी च बहुलातायुका द्वीपै, वृष्टिश्च विच्छेदै, अमेध्यानि च देशै, तदा तैरन्तरायैर्निमित्तेषु भिद्यमानेषु नैमित्तिका मन्त्रा आवर्त्या इति प्राप्ते—रात्रिगता कृत्स्नां निद्रामुद्दिश्य मन्त्रविधानान्निमित्तनेकम् । एवमितरत्रापि योज्यम् । तस्मान्नास्ति मन्त्रावृत्तिरिति सिद्धान्त । तथा हि जैमिनिकात्यायनौ—'स्वप्ननदीतरणाभिवर्षणामेध्यप्रतिमन्त्रणेषु चैवम्'' (११।४।०१) स्वप्ननदीतरणाववर्षणामेध्यदर्शनप्रयाणेषु तु सकृत् कालद्रव्यैकार्थत्वात् ( १।७।१२ ) इति ।

ज्योतिष्टोमे श्रूयते "दीक्षितो न ददाति न जुहोति न पचति" ( मै० ३।६।५ ) इति । तत्र विचार किमयं सर्वेषामेव पुरुषार्थानां क्रत्वर्थानां चोपदिष्टानामतिदिष्टानां प्रतिषेध, उतातिदिष्टानां पुरुषार्थानां च, अथवा पुरुषार्थानामेवाग्निहोत्रादीनामिति । तत्राविशेषाद्दानादिकं पुरुषार्थं, यच्च क्रत्वर्थं, तत्राप्युपदिष्टमतिदिष्टं च तत्सर्वं प्रतिषिध्यते । इत्याद्य पूर्वं पक्ष । उपदिष्टस्यापि प्रतिषेधे उपदेशस्य व्यर्थत्वापत्ति स्यादतोऽतिदिष्टं, पुरुषार्थं च प्रतिषिध्यत इति मध्यम पक्ष ।

नित्याग्निहोत्रदानादिकं पुरुषार्थत्वेन यत्प्रत्यक्षश्रुतानुपदिष्टं तज्ज्योतिष्टोमकालेऽतिप्राप्तम्, यच्चातिदिष्टं दानादिकं, तयोरुभयोर्मध्ये प्रत्यक्षोपदिष्टनिषेधस्योपदिष्टमेव सन्निहितमिति पुमर्थस्यैवात्र निषेध इति ( जै० १०।८।७ ) सिद्धान्त । यदि प्रतिषेधपक्षे वाक्यभेद शङ्क्येत, तर्हि पुमर्थदानादिव्यतिरिक्त क्रतुकालेऽनुष्ठेयमिति पर्युदासोऽस्तु ।

( १ ) "अदित्यै चरुरन्यत्रापी" ( का० श्रौ० ८।७।२ ) इत्यनेनैव सिद्धेऽपि पुनश्चरुग्रहणं चरो प्रायणीयत्वप्रज्ञप्त्यर्थम् । तथा च श्रूयते "आदित्य चरुं प्रायणीयं निर्वपति ( श० ३।२।३।१ ) ति ।

आध्वर्यवपद्धतिः ।

शूर्पाग्निहोत्रहवणीस्फ्यः शम्या-कृष्णाजिनं-उलूखल-मुशलं-दृषदु-पलं-पात्री-पवित्रच्छेदनानि-पवित्रे-आज्यस्थाली-उपसर्जनीपात्रं-कुश-मुष्टिः-वेदितृण-मन्निः । पत्नी-योक्त्रम्, स्रुवः, जुहूपभृत् ध्रुवा-सन्नहना-चच्छादनानि, परिधयो विधृत्यौ आज्यम्, होतृषदनम्, औषधं प्राशित्र हरणे(१) ।

उपकल्पनीयानि इध्माबर्हिः चरुपात्रमेक्षणे ( कपालस्थाने चरुस्थाली, श्रतावदानस्थाने मेक्षणम् )। षडवत्तं लौकिककपालम्। पात्र्यामौषध-करणादि । बिलालम्भे दैव्या असीत्यूहः ।

ग्रहणे-अदित्यै जुष्टं गृह्णामि । प्रोक्षणे-त्वाऽधिकः ।

मुसलावधाने-सदिदं देव्यै हविः । कुक्कुटाहननम् ।

फणान्तेऽध्वर्योराज्यनिर्वापोपसर्जन्यधिश्रयणे ।

चरोः ( पेषण ) संयवनप्रथनाद्भिरभिमर्शणपिष्टलेपपाण्यङ्गुलिप्रक्षा-लनाभिवासनानामभावः(२) ।

औद्गात्रपद्धतिः ।

प्रवद्भार्गवस्य(३) भृगुऋषिः जगतीछन्दः सोमो देवता

प्रायणीयायां गाने विनियोगः ।

हौत्रपद्धतिः ।

कात्यायनानां चार्त्रघ्नावाज्यभागौ । आज्यभागपक्षे तु आवाहने—"आ ४ वह देवान्यजमानाय अग्निमग्न आ ४ वह सोममा ४ वह (उपांशु-पथ्यां स्वस्ति ( उच्चैः ) आ ४ वह । ( उपांशु-) अग्नि ( उच्चैः-) मा ४ वह । ( उपांशु ) सोम (उच्चैः-) मा ४ वह । ( उपांशु- ) सवितार-(उच्चैः-) मा ४ वह । (उपांशु-) अदितिं (उच्चैः–) मा ३ वह देवानित्यादि प्रकृतिवत् ।

उत्तमे प्रयाजे—भूर्भुवयं ४ यजामहे स्वाहाग्निं स्वाहा सोमं स्वाहा ( उपांशु-) पथ्यां स्वस्ति ( उच्चैः ) स्वाहा ( उपांशु-) अग्निं ( उच्चैः–) स्वाहा ( उपांशु-) सोमं ( उच्चैः-) स्वाहा ( उपांशु-) सवितारं (उच्चैः–)

---

( १ ) कपालोपधानान्वाहार्यपात्रोद्धरणपात्र्यन्वाहार्यतण्डुलान्तर्धानकटपूर्णपात्रकर्मा-पवर्गाणामभाव इति रामवाजपेयिनः । अग्न्यन्वाधन-ब्रह्मवरण—व्रतग्रहण—दक्षिणादान-व्रतविसर्गाणामभावः इति देवः । ब्रह्मयजमानषडवत्तभागा हि पुरोडाशविकारत्वाच्च-रोरपि स्युः ।

( २ ) श्रतज्ञानाय माभेरिति स्पर्शनं तु भवत्येवेति रामवाजपेयिनः ।

( ३ ) प्रायणीयायां प्रवद्भार्गवम् ( द्रा. श्रौ. २।२।२२ ) ।

आध्वर्यवपद्धतिः ।

एकत्वादनिर्देशः । आज्याधिश्रयणमग्नीधः। प्राणदाने–अदिर्ति गच्छ । पञ्चदशेन वज्रेणेत्यवबाधनम् ।

उत्तमे प्रयाजे—इदमग्नये सोमाय पथ्यायै स्वस्तये अग्नये सोमाय सवित्रेऽदित्यै देवेभ्य आज्यपेभ्योऽग्नये स्विष्टकृते च न मम । पञ्च मम० । अन्नादो भूयासम् ।

आज्यभागाविष्ट्वाज्येन देवता(१)श्चतस्रो यजति पथ्यास्वस्तिमग्निꣳ० सोमꣳ० सवितारं च अदितिं चरुणा ।

आप्याय्याप्याय्य चतुर्गृहीतग्रहणं सर्वत्र । मन्त्रमुपांशु वा प्रधानयागः ।

हौत्रपद्धतिः ।

स्वाहा देवानित्यादि समानम् ।

वार्त्रघ्नावाज्यभागौ—"ॐअग्निर्वृत्राणि जङ्घनद् द्रविणस्युर्विपन्यया । समिद्धः शुक्र आहुतोꣳम्" ( य० सं० ३३।९। प्रथमाज्यभागपुरोऽनुवाक्येयम् ) ।

---

(१) ननु गण्यमाना एवैताश्चतस्रो भविष्यन्ति किमर्थं पुनश्चतस्र इत्युक्तम् । मा भूत्कस्यचिदाशङ्का पथ्यां स्वस्तिमिति पृथगेते द्वे देवते इति । इदानीं प्रसङ्गादिदं विचार्यते—प्रायणीये किं पञ्च प्रधानानि आदित्यश्चरुराज्यभागाश्च, उत किमादित्य एव प्रधानमङ्गयागा इतर इति । तत्र "स वै पञ्च प्रायणीये देवता यजति पञ्चोदयनीय" ( श० ३।२।३।२३ ) इति पञ्चानां प्रायणीयसंयोगात्पञ्च प्रधानानीति केचिदाहुः । अपरे पुनर्वर्णयन्ति उत्पत्तिवाक्ये केवलस्यादित्यस्य प्रायणीयसंयोगः "आदित्यं चरुं प्रायणीयं निर्वपती"।( श० ३।२।३।१ ) ति । उदयनीयेऽपि निगमने "तस्मादेष आदित्य एव प्रायणीयो भवत्यादित्य उदयनीय" ( श० ३।२।३।६।) इति यस्तु पञ्चानां प्रायणीयसंयोगो न स प्रायणीये पञ्च प्रधानानि विदधातीति । किं तर्हि पौर्णमासिकीभ्यो देवताभ्योऽभ्यधिका पञ्च प्रायणीये देवता यजतीति पञ्चानामतिरिक्तानां सार्थवाद इति । यदि पञ्च प्रधानानि परिसमाप्तायामपि प्रायणीयायां विस्मृतस्य यागस्य पुनः करणम् । यदि आदित्य याग एव प्रधानं ततोऽक्रिया । तत्रादित्यं चरुं प्रायणीयमिति चरुसामानाधिकरण्यादस्यैव प्राधान्यमितरेषां चाङ्गत्वमिति सिद्धान्तः । अङ्गत्वेऽपि सत्याज्यद्रव्यकत्वमादृष्टत्वेनोपांशुयाजधर्मप्राप्तेः पथ्यास्वस्त्यादीनां व्यूहनावाहनादिषु सङ्कीर्तनं भवत्येव । सआपस्तम्ब —"चतुर आज्यभागान्प्रतिदिशं यजति पथ्यां स्वस्तिं पुरस्तादग्निं दक्षिणतः सोमं पश्चात्सवितारमुत्तरतः मध्येऽदितिं हविषेति (१०।२१।११) एवं मानव (२।१।३।२६) कल्पसूत्रयोरपि । शतपथे तु "ता वा एताः पञ्च देवता यजती"(श०३।२।३।१२)ति प्रकृत्यो"दीचीमेव दिशं पथ्यया स्वस्त्या प्राजानन् , प्राचीमेव दिशमग्निना प्राजानन् , दक्षिणामेव दिशꣳ० सोमेन प्राजानन् , प्रतीचीमेव दिशꣳ० सवित्रा प्राजानन्नूर्ध्वामेव दिशमदित्या प्राजानन्निति ( श० ३।२।३।१२-१९ )श्रूयते । तेनाग्नेरुत्तरभागे पथ्यां स्वस्तिं यजति प्राच्यामग्निं दक्षिणतः सोमं पश्चात्सवितारं मध्येऽदितिमिति ।

( अथ प्रधानयागः । )

पथ्यायै स्वस्तयेऽनुब्रूहि । पथ्यां स्वस्ति यज । उत्तरतो होमः । इदं पथ्यायै स्वस्तये ।

अग्नयेऽनुब्रूहि । अग्निं यज । पूर्वतः । इदमग्नये ।

सोमायानुब्रूहि । सोमं यज । दक्षिणतः । इदं सोमाय ।

सवित्रेऽनुब्रूहि । सवितारं यज । पश्चात् । इदं सवित्रे ।

हौत्रपद्धतिः ।

"ॐ त्वꣳ सोमासि सत्पतिस्त्वꣳ राजोत वृत्रहा । त्वं भद्रो ऽअसि क्रतो३म्" । ( का०हौ०प०१।४। द्वितीयाज्यभागपुरोऽनुवाक्येयम् ) ।

अथ प्रधानयागः—( उपांशु- ) पथ्यायै स्वस्तये ( उच्चैः- ) अनुब्रू ४ हीत्युक्ते—( उपांशु- )

"ॐ स्वस्ति नः पथ्यासु धन्वसु स्वस्त्यप्सु वृजनेष्वर्वति ।

स्वस्ति नः पुत्रकृथेषु योनिषु स्वस्ति राये मरुतो दधातन ( उच्चैः- ) ओ३म् ( ऋ०१०।६४।१५ ) ।

(उपांशु-) पथ्यां स्वस्ति (उच्चैः-) यज । भूर्भुवर्ये४ यजामहे (उपांशु-) पथ्यां स्वस्तिं "स्वस्ति ऋद्धि प्रपथे श्रेष्ठा रेक्णस्वत्यभियावा ममेति सा नो अमा सो अरणे निपातु स्वावेशा भवतु देवगोपा ४ ( उच्चैः- ) वौ ४ षट् ( ऋ० १०।६४।१६ ) । ओजः सहः सह ओजः स्वः ।

( उपांशु- ) अग्नये ( उच्चैः- ) अनुब्रू४हि ( उपांशु- ) ॐ अग्ने नय सुपथा राये ऽअस्मान् विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम ( ऋ०१।१८९।१ ) (उच्चैः-)ओ३म् ।

( उपांशु- ) अग्निं ( उच्चैः- ) यज । भूर्भुवर्ये ४ यजामहे ( उपांशु- ) अग्निमग्ने त्वं पारया नव्यो अस्मान्त्स्वस्तिभिरति दुर्गाणि विश्वा । पूश्च पृथ्वी बहुला नऽउर्वी भवा तोकाय तनयाय शंयोः ( ऋ० १।१८९।२ ) ( उच्चैः- ) वौ ४ षट् । ओजः सहः सह ओजः स्वः ।

( उपांशु- )सोमाय ( उच्चैः- ) अनुब्रू४हि । ( उपांशु- ) "त्वं सोम प्र चिकितो मनीषा त्वं रजिष्ठमनुनेषि पन्थाम् । तव प्रणीती पित

औद्गात्रपद्धतिः ।

प्रौ अयोसावि(त) । इन्दुरिन्द्रा । स्या२ निष्कृताम् । सखासख्युः । न प्रमिना । ता२ यि सङ्गिरम् । मर्यं इवा । युवति भायिः । सौ मर्पतायि । सोमः कला । शेशतया । मा२ नौपथो ३१ उ ॥

आध्वर्यवपद्धतिः ।

अवदानधर्मेण चरुमवदाय अदित्यै अनुब्रूहि । अदितिं यज । निधनसमकालं मध्ये यागः । इदमदित्यै ।

औद्गात्रपद्धतिः ।

प्रयोधियो । मन्द्रयुवो । वा २ यिपन्युवाः । पनस्युवाः । संवरणायि। पूरवंकेमूः । हरिं क्रीडा तमभ्यनू । षा २ तस्तुभाः । अभिवेना । वंः पयसायित् । आरशिश्रयू ३ रां उ ॥

आनः सोमा । संयतं पायि । प्यूरपामिषाम् । इन्द्रायेवा स्वेपवमा । ना २ ऊर्मिणा । यां नोदोहा । तेभिरहान् । आरसस्वुपायि । क्षुमद्वाजा । वन्मधुमात् । सूरवीरियां ३ मां उ । वा २ ३ ४ ५(१) ॥

हौत्रपद्धतिः ।

रो न इन्द्रो देवेषु रत्नमभजन्त धीराः" (ऋ० १ । ९१ । १) (उच्चैः- ) ओ३म् । ( उपांशु- ) सोमं ( उच्चैः- ) यज भूर्भुवर्यं ४ यजामहे ( उपांशु- ) सोमं या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम् । गयस्फानः प्रतरणः सुवीरोऽवीरहा प्रचरा सोम दुर्या ४ न् ( ऋ० । १ । ९१ । १९ । ) ( उच्चैः- ) वौ ४ षट् । ओजः सहः सह ओजः स्वः ।

( उपांशु- ) सवित्रे ( उच्चैः- ) अनुब्र४हि-( उपांशु- ) "तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ( ऋ० ३।६२।१० ) ( उच्चैः- ) आ३म् । ( उपांशु- ) सवितारं ( उच्चः- ) यज भूर्भुवर्यं ४ यजामहे ( उपांशु- ) सवितारं य इमा विश्वा जातान्याश्रावयति श्लोकेन । प्र च सुवाति सविता ४ ( ऋ० ५। ८२। ९ ) ( उच्चैः- ) वौ ४ षट् । ओजः सहः सह ओजः स्वः ।

(उपांशु-) अदित्यै, अनुब्रू४ही ( त्युच्चैः )।

( उपांशु- ) सुत्रामाणं पृथिवीं द्यामनेहसं सुशर्म्माणमदितिं सुप्रणीतिम् । दैवीं नावं स्वरित्रामनागसमस्रवन्तीमा रुहेमा स्वस्तये। ( ऋ० १०(६३)६४।१० ) ।

( उच्चैः- ) ओ३म् ( उपांशु-) अदितिं ( उच्चैः- ) यज भूर्भुवर्यं ४ यजामहे ( उपांशु ) अदितिं महीमू षु मातरं सुव्रतानामृतस्य पत्नीमवसे हुवेम ।

---

(१) ( उ० आ० ४, २, ७, १, ऊह ४, १, ७ ) ।

हौत्रपद्धतिः।

तुविक्षत्रामजरन्तीमुरुचीं सुशर्म्माणमदितिं सुप्रणीतिं (उच्चैः) (शु० य० सं० २१।५) वौ ४ षट्। ओजः सहः सह ओजः स्वः। अथ प्रस्तोत्रा निधनेन सहादितियाज्याया वषट्कारं कुर्यात्। अग्नये स्विष्टकृतेऽ नुब्रू ५ ही त्युक्ते—

त्वां चित्रश्रवस्तम हवन्ते विक्षु जन्तवः। शोचिष्केशं पुरुप्रियाग्ने हव्याय वोळ्हवे (मं० १ सू० ४५ ऋक् ६) वौ ४ षट्। ओजः सहः सह ओजः स्वः।

"अग्निं स्विष्टकृतं यजे" त्युक्ते भूर्भुवर्येध यजामहे ऽग्नि स्विष्टकृतमयाडग्निरग्नेः प्रिया धामा न्ययाट् सोमस्य प्रिया धामान्ययाट् पथ्यायाः स्वस्तेः (उपांशु), प्रिया धामान्ययाट् (उच्चैः), अग्नेः (उपांशु), प्रिया धामान्ययाट् (उच्चैः), सोमस्य (उपांशु), प्रिया धामान्ययाट् (उच्चैः), सवितुः (उपांशु), प्रिया धामान्ययाट् (उच्चैः), अदितेः (उपांशु), प्रिया धामान्ययाट् देवानामाज्यपानां प्रि० (१) हविः।

यद्वा हि ष्टं तदग्नये बृहदर्च विभावसो। महिषीवत्वद्रयिस्त्वद्वाजा उदीरते (ऋ०मं०५। सू० २५ ऋक् ७) वौ ४ षट्। ओजः सहः सह ओजः स्वः।

उदकोपस्पर्शः। उपह्वानं पर्यञ्जनादि। उपहूतं, इडोपहू० पुत्रे, उपहूतोऽयं यजमानोऽस्य यज्ञस्यागुर उद्दृचमशीयेति तस्मिन्नुपहूतः। भक्षः। मार्जनं। दक्षिणा न। एषा(२) ते० हि। अयोऽनुयाजाः। सूक्तवाके अग्निर्ह०कृत, सोम० कृत पथ्यास्वस्ति (उपांशु) हविः कृत अग्निः (उपांशु) हविः कृत, सोम (उपांशु) हविः कृत, सविता, (उपांशु) हवि० कृत अदितिः (उपांशु) हविः कृत देवा आज्यपा कृत, अग्निर्होत्रे० कृत। अस्यामृधेद्धोत्रायां देवङ्गमायामाशास्तेऽयं यजमानोऽस्य यज्ञस्यागुर उद्दृचमशीय यदनेन हवि० भ्यः। नम उप शंयोर्ब्रूहीत्युक्ते तच्छंयो० दे। उदकोपस्पर्शः। शंय्वन्ता। पत्नीसंयाजाः। इति प्रायणीया।

---

(१) "या धामानि यक्षदग्नेर्होतुः प्रिया धामानि यक्षत्स्वं महिमानमायजतामेज्या इषः कृणोतु सो अध्वरा जातवेदा जुषतां हविः" रिति मन्त्रशेषः।

(२) "एषा ते अग्ने समित्तया वर्धस्व चा च प्यायस्व। वाधषीमहि च वयमाच प्यासिषीमहि" इति मन्त्रः।

आध्वर्यवपद्धतिः ।

ततः स्विष्टकृदादि । न दक्षिणा ।

व्यूहने-पथ्यायाः स्वस्तेरग्नेः सोमस्य सवितुरदितेरु० । पथ्याः स्वस्तिरग्निः सोमः सवितादितिस्त्वम० ।

अप्रधानत्वात्पथ्यास्वस्त्यादीनां व्यूहनं नेति कश्चित् ।

शंय्वन्ते परिधिहोमः । संस्रवाहुतिः । धुरि निधानम् । न वेदालम्भः । वेदविमोकः, पत्नी योक्त्रस्य च । आवेदेस्तरणम् ॥

चरुमेक्षणबर्हिर्निदधात्युदयनीयायै(१) सलेपं चरुं प्रमृष्टं मेक्षणम् । प्रक्षालयति वा चरुमनुप्रहरतीतरे त एवर्त्विजो विप्रेतेष्वन्येऽपि ।

शंय्वन्तं(२) भवत्यन्तवचने पूर्वं प्राप्तेरुत्तरं वा प्रकृत्यनुग्रहानुया-

(१) ज्योतिष्टोमे प्रायणीयश्चरु (श० ३।२।३।१) उदयनीयश्च (श० ४।५।१।१) तत्र शाखान्तरे (त० सं० ६।१।५) श्रूयते-"प्रायणीयस्य निष्कासे उदयनीयमनुनिर्वपती"ति तत्र विचारः। किं प्रायणीयनिष्कासद्रव्यकमुदयनीयधर्मकं कर्मान्तरं विधीयते किं वा प्रायणीयनिष्कासस्योदयनीयनिर्वापसंयोगः प्रतिपत्तिः उत प्रायणीयनिष्कासे निर्वापः उदयनीयस्य संस्कार इति । अत्र पूर्वन्यायेन ( पू० मी० ११।२।१६ ) निष्कासद्रव्यकमुदयनीयसमानधर्मकमर्थकर्म । इत्याद्यः पूर्वः पक्षः। मुख्यस्योदयनीयस्य प्रकृतत्वाद्भिन्नप्रकरणाम्नातावभृथधर्मातिदेशवदुदयनीयधर्मातिदेशासम्भवाच्चार्थकर्मत्वम् । किन्तु निष्कासप्रतिपत्तिरिति मध्यमः पक्षः । उपयुक्तसंस्कारादुपयोक्ष्यमाणसंस्कारस्य गरीयस्त्वादुदयनीयस्य संस्कार इति ( पू० मी० ११।२।१६ ) सिद्धान्तः ।

( २ ) अत्र श्रूयते "शंय्वन्ता प्रायणीया सन्तिष्ठते, न पत्नीः संयाजयन्ति ( श० ३।२।३।२३) इडान्ता आतिथ्या सन्तिष्ठते, नानुयाजान्यजन्ति" ( श० ३।४।१।२६ ) इति। तत्र संशयः किं प्रायणीयातिथ्ये शंय्विडान्ते वा कृत्स्नसंस्थे वा उत शंय्विडान्ते एवेति । तत्र शंय्विडान्तवचनेन परेष्वङ्गेषु सर्वेष्वकर्तव्येषु पुनः पत्नीसंयाजानुयाजानामकर्तव्यत्ववचनं परिसङ्ख्यार्थमङ्गान्तराणामकर्तव्यताप्रतिषेधेन कर्तव्यताविधानार्थं पत्नीसंयाजानेव न कुर्यादन्यानि कुर्यादेवेति । तेन पत्नीसंयाजानूयाजप्रतिषेधेन कृत्स्नसंस्थाविधानात् शंय्विडान्तवचनेन तत्संस्थाविधानाद्द्वयोः संस्थयोर्व्रीहियववद्विकल्प इति पूर्वः पक्षः । मैवम् ।

वाक्यभेदो हि न न्याय्यो विकल्पश्चाष्टदोषभाक् ।
त्रिदोषा परिसंख्या च तस्मात्स्तुत्यैकवाक्यता ॥

शंय्विडान्तविधिरेवायमर्थवादार्थोऽनुवादः पत्नीसंयाजाद्यकरणाल्लाघवं भवतीति न विध्यन्तरम् । तस्मान्नियमेन शंय्विडान्ते एव प्रायणीयातिथ्ये इति ( पू० मी० १०।७। सू० ३८—३९) सिद्धान्तः ।

शंय्विडान्तयोरेव सन्देहः प्रकृतौ द्वौ शंयू पत्नीसंयाजानां पुरस्तादेकः पश्चादपरः । तथैडे अपि द्वे अनूयाजानां पुरस्तादेका पश्चादपरा । तत्र किं पूर्वाभ्यां शंय्विडान्ताभ्यां सदन्तता उतोत्तराभ्यामुतानियम इति । तत्र विशेषाभावादनियम इति प्रथमः पूर्वः पक्षः।

यदि प्रायणीया पूर्वशंय्वन्ता, आतिथ्या च पूर्वेडान्ता तदानीमन्तत्वविधिनैव प्रा-

आज्यग्रहपद्धतिः।

जप्रतिषेधाभ्यां ग्रहणादप्रवृत्तिः सन्नवराश्रुतेश्च नित्यानुवादोऽनुयाजप्रतिषेधः।

उपरवदेशे प्रतिप्रस्थाता रोहिते चर्मण्यानडुहे सोमं निवपति विमायेन विचिनोति कौत्सः शूद्रो वा। दक्षिणतो ब्राह्मण उपास्ते स च ब्राह्मणाच्छंसी। उदकुम्भश्च पुरस्तात्।

अध्वर्युः शालाद्वाराण्यपिधाय ध्रौवं जुह्वां चतुर्विगृह्णाति ध्रुवयैव। बर्हिस्तृणेन हिरण्यं बध्वावदधात्येषा त इति जुह्वाम्।

"ॐ एषा ते शुक्र तनूरेतद्वर्चस्तया सम्भव भ्राजङ्गच्छ" (४।१७)।

आहवनीये जूरसीति जुहोति।

"ॐ जूरसि धृता मनसा जुष्टा विष्णवे।

तस्यास्ते सत्यसवसः प्रसवे तन्वो यन्त्रमशीय स्वाहा" (४।१८)।

इदं यावे।

ब्रह्मा हिरण्यवत्या ॐ हुतायां दक्षिणोऽनुगच्छत्याक्रयात्।

शुक्रमसीति हिरण्यमुद्धृत्य—

"ॐ शुक्रमसि चन्द्रमस्यमृतमसि वैश्वदेवमसि" (४।१८)।

तूष्णीं वेद्यां तृणं निदधाति सुग्रवद्वठं० हिरण्यं कुरुते।

अत्र प्रायणीयाशेषसमाप्तिः। चरुस्थालीं प्रक्षाल्य उदनीयाय निदध्यात्। पक्षे बर्हिर्होमः। प्रणीताविमोकः। राक्षसभागः। भागावेक्षणप्राशने। पक्षे मेक्षणप्रासनमाहवनीये। इति प्रायणीया।

## (अथ सोमक्रयः।)

अथ सोमक्रयः। अध्वर्युः-निरूप्याज्यं गार्हपत्येऽधिश्रित्य स्रुक् स्रुवं च सम्मृज्याज्यमुद्वास्योत्पूयावेक्ष्य चतुर्गृहीतं गृहीत्वा अन्वारभस्व यजमानेत्याह।

अन्वारब्धोऽध्वर्युर्यजमानश्चापावृतद्वारे निष्क्रामतः प्रतिप्रस्थाता च। दक्षिणेन द्वारठं० सोमक्रयणी तिष्ठत्यलक्षिताऽव्यङ्गाऽप्रवीताऽरज्जुव-

---

भ्यां शंय्विडाभ्यामूर्ध्वमप्राशानां पत्नीसंयाजानामनुयाजानां च वारितत्वान्निषेधो व्यर्थः स्यात्। परयोरन्तत्वे ताभ्यां शंय्विडाभ्यां प्राशानां तेषामनिवारणात्तन्निवारणाय सार्थको निषेधः। तस्मात्परे एव शंय्विडे ग्राह्ये इति द्वितीयः पक्षः।

निषेधोऽयं नित्यानुवादः स च पूर्वयोः शंय्विडान्तयोरन्तत्वेऽप्येकवाक्यतामापाद्यार्थवादत्वेनोपपद्यते। सन्नावविरोधिन्यौ हि पूर्वे शंय्विडे। तस्मात्पूर्व एव शंय्विडे ग्राह्ये इति (जै० १०।७ सू० ४०—४२) राद्धान्तः।

आध्वर्यवपद्धतिः ।

द्रा बभ्रुः पिङ्गला पिङ्गलाऽभावेऽरुणा(१) रुणाभावे रोहिण्यश्येताक्षी चिदसीत्येनामभिमन्त्रयते ।

"ॐ चिदसि मनासि धीरसि दक्षिणासि क्षत्रियासि यज्ञियास्यदितिरस्युभयतः शीर्ष्णी । सा नः सुप्राची सुप्रतीच्येधि मित्रस्त्वा पदि बध्नीताम्पूषाऽध्वनस्पात्विन्द्रायाध्यक्षाय । अनु त्वा माता मन्यतामनु पितानुभ्राता सगर्भ्योऽनुसखा सयूथ्यः । सा देवि देवमच्छेहीन्द्राय सोमᳬं रुद्रस्त्वा वर्त्तयतु स्वस्ति सोमसखा पुनरेहि(२) (४।१९-२०) ॥

अध्वर्युप्रतिप्रस्थातरावुदीचीन्नीयमानावनुगच्छतो वस्व्यसीति मन्त्रेण पत्नीयजमानब्रह्माणस्तूष्णीम् ।

"ॐ (३)वस्व्यस्यदितिरस्यादित्यासि रुद्रासि चन्द्रासि । बृहस्पतिष्ट्वा सुम्ने रम्णातु रुद्रो वसुभिराचके" (४।२१) ॥

सर्वे षट् पदान्यतीत्य सप्तमं (४)पर्युपविशन्ति ।

अध्वर्युः-हिरण्यमस्मिन्त्सप्तमे पदे निधायाभिजु(५)होत्यदित्यास्त्वेति ।

---

(१) "अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात्" (पू० मी० ३।१।१२) इति न्यायेनाऽरुण्यादि गुणानामसङ्कीर्णता सिद्धान्तिता तत एवावगन्तव्या ।

(२) "सोमक्रयण्यन्वित्सः साण्डः" इति माध्यन्के आम्नायते, (का० श्रौ० २२।३।३१) तत्रायं मन्त्र ऊह्यते । चिदसि मनोऽसि धोरसि दक्षिणोऽसि क्षत्रियोऽसि यज्ञियोऽस्यदितिरस्युभयतः शीर्षा । स नः सु प्राङ् सुप्रत्यङ् एधीति । अग्निष्टुति (का० श्रौ० २२।४।३१) च "अग्नयेऽध्यक्षाय" इति। इन्द्रस्तुति (का० श्रौ० २२।५।३) "इन्द्रायाध्यक्षाय" इति। "सूर्यस्तुति (का० श्रौ० २।५।३) "सूर्यायाध्यक्षाय" इति। वैश्वदेवस्तुति विश्वेभ्यो देवेभ्योऽध्यक्षेभ्य" इत्यादि । तथा इन्द्राय सोममित्यत्राग्नये सोममित्यादि । (का० श्रौ० २२।५।३)

(३) अस्यापि माध्यन्के (का० श्रौ० २२।२।१) ऊहः । वस्व्यस्यदितिरस्यादित्योऽसि रुद्रोऽसि चन्द्रोऽसीति ।

(४) "अथ सप्तमं पदं पर्युपविशन्ती"(श० ब्रा० ३।३।१।३)ति श्रवणात् । कर्कसूत्रे—तस्य दक्षिणेषु सप्तसु पूर्वपादेषु लक्षणं कुरुते । मानवे च "षट् पदान्यनुनिष्क्रामति दक्षिणस्य पूर्वपदस्य तूर्ष्णीं सप्तमं पदमभिपरिगृह्य" (२।१।३।३१) इति ।

(५) यदाहवनीये जुह्वति तेन सोऽस्याममीष्ट. प्रीत (तै० ब्रा० प्र० १ अ. १० पत्र ६१) आहवनीये होमाः (का० १।८। ४३) इति सामान्यविहितस्याहवनीयस्य "पदे जुहोति वर्त्मनि जुहोति गार्हपत्ये पत्नीसंयाजाञ्जुहोति" इति विशेषविहितैः पदादिभिः किं विकल्पोऽथवा बाध इति सन्देहः । सामान्यविशेषयोस्तुल्यबलत्वाद्विकल्प इति पूर्वः पक्षः । पत्नीसंयाजादिषु होमविशेषेषु होमसामान्ये श्रुतस्याहवनीयस्य लक्षणया प्राप्तिः

आध्वर्यवपद्धतिः।

"ॐ अदित्यास्त्वा मूर्द्धन्नाजिघर्मि देवयजने पृथिव्याऽइडायास्पदमसि घृतवत्स्वाहा" ( ४।२२ )। इदमदित्यै ।

स्फ्येन पदं त्रिः परिलिखत्यस्मे रमस्वेति । (१)सकृन्मन्त्रेण द्विस्तूष्णीम् ।

"ॐ अस्मे रमस्व"।

हिरण्यꣳ समुद्धृत्य अभ्युक्ष्य खात्वा तत्पदꣳस्थाल्यामावपत्यस्मे ते बन्धुरिति ।

"ॐ अस्मे ते बन्धुः" ( ४।२२ )॥

अपः पदस्य स्थाने निषिच्य यजमानाय पदं प्रयच्छति(२)त्वे राय इति ।

"ॐ त्वे रायः सन्तु" ( ४।२२ )।

मे राय इति यजमानः प्रतिगृह्णाति ।

"ॐ मे रायः सन्तु" ( ४ २२ )॥

मा वयमित्यध्वर्युरात्मानꣳ संस्पृशति ।

"ॐ मा व्वयꣳ रायस्पोषेण वियौष्म" ( ४।२२ ) उदकोपस्पर्शः।

अध्वर्युर्दत्वा पत्न्यै(३) पदं प्रयच्छति नेष्टा तोत इत्येनां याचयति ।

---

गार्हपत्यादि तु श्रुत्यैव होमविशेषे विधीयते, तेनास्मिन्विशेषे श्रुत्या शीघ्रप्राप्तं गार्हपत्यादिकं लक्षणया मन्त्रप्राप्तमाहवनीयं निरुन्धानोऽयतो बाध इति सिद्धान्तः ।

तथाहि जैमिनिः—"अविशेषेण यच्छास्त्रमन्याय्यत्वाद्विकल्पस्य तत्संन्दिग्धमाराद्विशेषशिष्टं स्यात्" ( १०।८।१६ ) इति ।

( १ ) अत्र च सकृन्मन्त्रेण द्विस्तूष्णीम् । "एकद्रव्ये कर्मावृत्तौ सकृन्मन्त्रवचन (का० श्रौ० १।७।८ ) मित्युक्तेः। "अथ स्फ्यमादाय परिलिखति। स परिलिखति "अस्मे रमस्वेति" ( श० ब्रा० ३।३।१।५-६ ) श्रुतत्वात् । अत्र परिलेखनमुपप्लुंपरि कार्यं चयने बर्हिर्बर्हिरिति विशेषो ( का० श्रौ० १६।२।२३ ) क्तेः ।

( २ ) अनेकयजमानके पदसमर्पणे प्रतिग्रहणे च सर्वेषामन्वारम्भ ऊहश्च । युवयोरायः, आवयोराय इति द्वियजमानके । युष्मासु रायोऽस्मासु राय इत्यनेकयजमानके ।

( ३ ) अत्र श्रूयते "अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति" ( तै०सं० ६।१।६) "सप्तपदान्यनुनिष्क्रामति" ( श० ब्रा० ३।२।१ ) "तत् ( सप्तमं पदं ) यजमानः प्रतिगृह्णाति" इति ( श० ब्रा० ३।३।८ )। इदमपरं श्रूयते "यर्हि हविर्धाने प्राची प्रवर्तयेयुस्तर्हि तेनाक्षमुपाञ्ज्यात्" इति ।

अत्र सन्देहः । किं सोमक्रयण्याख्यस्य पदस्य कर्मणुत क्रयप्रयुक्तमिति । नयनात् क्रयः पदं चैतदुभयं निष्पद्यते । 'एकनिष्पत्तेः सर्वं समं स्या( जै० ४।१।२२ )दिति न्यायेनोभयं प्रयोजकमिति पूर्वः पक्षः ।

"एकहायन्या क्रीणाति" (तै० सं० ६।१।६) इति तृतीयाश्रुत्या गोःक्रयार्थता गम्यते।

आध्वर्यवपद्धतिः।

"ॐ तोतो रायः सन्तु" इति (१)ब्रूहि। पत्नी—

"ॐ तोतो रायः सन्तु" (४।२२)।

सोमक्रयण्या च समीक्षमाणा ँ समख्ये इति वाचयति नेष्टा।

"ॐ समख्ये देव्या धिया सन्दक्षिणयोरुचक्षसा। मा मऽआयुः प्रमोषीर्मोऽअहन्तव वीरं विदेय तव देवि सन्दृशि" (४।२३) इति ब्रूहि। पत्नी—

'ॐ समख्ये देव्या धिया सन्दक्षिणयोरुचक्षसा। मा मऽआयुः प्रमोषीर्मो ऽअहन्तव वीरं विदेय तव देवि सन्दृशि' (४।२३)।

सा च शालायां सुगुप्तदेशे पदं स्थापयति अध्वर्युः प्रक्षाल्य पाणी हिरण्यं बध्नीतेऽनामिकायाम्। आप्यायनामिषवांँश्वदाभ्येषु च(२)॥६॥

प्रेष्यति च सोमोपनहनमाहर, सोमपर्याणहनमाहर, उष्णीषमाहर, इति प्रैषत्रयम्।

अत्र वा(३)निवपन ठं० सोमस्य।

शोभन ठं० सोमोपनहनं भवति उष्णीषाभावे सोमपर्याणहनाद् द्व्यङ्गुलं त्र्यङ्गुलं वोष्णीषायावकृन्तति। अध्वर्युर्यजमानो वा सोमोपनहनठं० हरति। अन्य इतरे=प्रतिप्रस्थाता पर्याणहनोष्णीषे आहरतीत्यर्थः। ब्रह्मयजमानाध्वर्युप्रतिस्थातारः सोमं गच्छन्ति।

अध्वर्युरेष त इति वाचयति यजमानम्।

---

गोद्वारा तदानयनमपि क्रयार्थमेवेति क्रय एवाऽऽनयने प्रयोजकः। न च पद्कर्मार्थत्वं गोर्वा तदानयनस्य वा क्वचिच्छ्रुतम्। तस्मात्—तदप्रयोजकमिति सिद्धान्तः (पू० मी० ४।१। अ० १०)।

(१) अनेकपत्नीके सर्वासां वाचनं सूतं ब्रूहीत्यादिपर्यायं प्रयोगः।

(२) सोमक्रयार्थमेतद्धिरण्यबन्धनम्। यत एवं श्रूयते "अग्निरेतर्म वै हिरण्य (श० ब्रा० ३।३।२।२) मित्यादि। पाणिप्रक्षालनं दृष्टार्थं पदपरिलेखनोद्धरणादिना धूलिलिप्तत्वात्।

पाणिप्रक्षालनं त्वत्रैव, आप्यायनामिषवांँश्वदाभ्येषु नानुक्रम्यते तस्य दृष्टार्थत्वात्, आप्यायनादिषु तच्छ्राश्रवणाच्च। सोमाप्यायने हिरण्यबन्धनं शाखान्तरात्। समिषवे स्वशाखायामेव "अथास्याँ हिरण्यं बध्नीत" (३।९।४।१) इति। अंशुग्रहे "अथास्य हिरण्यं बद्धं भवती" इति (श० ४।६।१।६)। अदाभ्ये च "अथ हिरण्य ममि······नित्यसावेव बन्धुरिति। यदि चात्र पाणिप्रक्षालनमप्यभिमतं भवेत् तदा हिरण्यबन्धनवच्छ्रूयेत न श्रूयते च अतो न भवति।

(३) स्वशाखायामस्मिन्नेव काले श्रुतत्वात् "पदठं० समुद्य पाणी" (श० ब्रा० ३।३।१।१) त्याद्युक्त्वा "अथाग्रेण राजनं विविन्वन्ति तदुदकुम्भ उपनिहितो भवति तद्ब्राह्मण उपास्ते" (श० ब्रा० ३।३।२।६) इति।

आध्वर्यवपद्धतिः।

"ॐ एष ते गायत्रो भागऽइति मे सोमाय ब्रूतादेष ते त्रैष्टुभो भागऽइति मे सोमाय ब्रूतादेष ते जागतो भागऽइति मे सोमाय ब्रूताच्छन्दोनामाना ँ साम्राज्यङ्गच्छेति मे सोमाय ब्रूतादि"ति ब्रूहि (४।२४)।

यजमानः—

"ॐ एष ते गायत्रो भागऽइति मे सोमा(१)य ब्रूतादेष ते त्रैष्टुभो भागऽइति मे सोमाय ब्रूतादेष ते जागतो भागऽइति मे सोमाय ब्रूताच्छन्दो नामाना ँ साम्राज्यङ्गच्छेति मे सोमाय ब्रूतात्" (४।२४)।

सोमस्य पश्चादध्वर्युः प्राङुपविश्य तदुत्तरतः प्रतिप्रस्थाता सोमं दक्षिणेन समन्त्रं ब्रह्मा तद्वामे यजमानः तत्पश्चात् पत्नी(२)अध्वर्युरास्माकोऽसीति सोममालभते।

"ॐ आस्माकोऽसि शुक्रस्ते ग्रह्यो विचितस्त्वा विचिन्वन्तु" (४।२४)।

न विचिनोत्य(३)तस्तृणकाष्ठापासनमेके(४)।

---

(१) मन्त्रस्य न्यग्रोधे ऊहः।

(२) अत्र हरिस्वामिनः—'यजमानोऽभिमृशति आस्माकोऽसीति मन्त्रलिङ्गात् "स्व इव ह्यस्यैतद्भवति" (श० ब्रा० ३।३।२।७) इति वाक्यशेषात्। अतो यजमान एवाभिमृशति नाध्वर्युः। प्राङ्विस्युदङ्निवृत्त्यर्थं श्रौतत्वज्ञापनार्थं च। "यदि राजन्यं वैश्यं वा याजयेत्स यदि सोमं बिभक्षयिषेन्न्यग्रोधस्तिभिनी (अङ्कुराः फलानि वा) राहृत्य ताः सम्पिष्य दधन्युन्मृज्य तस्मै भक्षं प्रयच्छेन्न सोमम्" इतिशाखान्तरीयश्रुतेर्वैश्यराजन्ययोः सोमभक्षणनिषेधः। अत्र वैश्यक्षत्रिययोः सोमयागे अध्वर्युर्यजमानं भक्षं कारयितुमिच्छन् वटफलस्तबकान् उपनहनेन वाससा बद्ध्वा सोमस्यैवेतिकर्तव्यतया न्यग्रोधस्य क्रयणादारभ्य अभिषवादर्वाक् संस्कारजातं कुर्यात्। तदुक्तम्—"वैश्यराजन्ययोः सोमे न्यग्रोधस्तिमीनुपनह्येच्छन् भक्षणाय" (का० श्रौ० १०।९।२८) इति। तस्मिन्पक्षे मन्त्रस्यास्य (न्यग्रोधे) विपरिणामः। 'आस्माको स्य' इत्यादिरूपेण।

(३) अतः परं सोमविक्रयी सोमं न विचिनोति शाखान्तरात्। आध्वर्युस्तु पूर्वमपि न विचिनोति शाखान्तरे प्रतिषेधदर्शनात्। तथा च मानवे—"नाध्वर्युः सोमं विचिनुयादिति प्रतिषिद्धं विचयनं प्रेक्षणं च" (२।१।३।६६) इति। काठके च—"न विचीयमानं प्रेक्षेरन्" इति।

(४) एकेनेति। "अत्र हैके तृणं वा काष्ठं वा विस्त्रापास्यन्ति तदु तथा न कुर्यात्" इत्यादि (३।३।२।८) श्रवणात्। अत्र काले एके चरकयजमानाः सोममध्यगतं तृणकाष्ठं वा वित्वा लब्ध्वा = यदि लभन्ते ततः सोमादपास्यन्ति = बहिः क्षिपन्ति प्रसितं तस्मै, अनुगम्य पलायमानं प्रसितारं आच्छिद्य प्रसितारं परां बहिः क्षिपेदेवन्तत्। "तस्मादभिमृशेदेव नापास्येदि" (श० ब्रा० ३।३।२।८)त्युपसंहरतीति यजमानस्यैवापासनं दर्शयति, इति हरिस्वामिनः।

आध्वर्यवपद्धतिः।

सोमोपनहनं द्विगुणं चतुर्गुणं वा स्तृणाति(१)प्रागुदशमुदग्दशं वा तस्मिन्त्सोमं(२)मिमीते दशकृत्वोऽभित्यमिति सर्वाभिः प्रथममङ्गुष्ठप्रभृति चैकोत्सर्गं द्विः कनिष्ठिकयोपचयश्चाञ्जलिना दशममन्यद्वाध्यावापश्रुते । तत्रादौ साङ्गुष्ठाभिरङ्गुलीभिः प्रथमम् ।

"ॐ अभित्यन्देवꣳ सवितारमोण्योः कविक्रतुमर्चामि सत्यसवꣳ रत्नधामभि प्रियम्मतिङ्कविम् । ऊर्ध्वायस्यामतिर्भाऽअदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपास्वः"( ४।२५) ।

ततोऽङ्गुष्ठरहिताभिश्चतसृभिर्द्वितीयम् ।

ततोऽङ्गुष्ठतर्जनीरहिताभिस्तिसृभिस्तृतीयम् ।

ततोऽनामिकाकनिष्ठिकाभ्यां चतुर्थम् ।

ततः कनिष्ठकया पञ्चमम् ।

पुनरपि कनिष्ठिकया षष्ठम् ।

ततः कनिष्ठिकानामिकाभ्यां सप्तमम् ।

ततो मध्यमानामिकाकनिष्ठिकाभिस्तिसृभिरष्टमम् ।

तर्जनीमध्यमानामिकाकनिष्ठिकाभिश्चतसृभिर्नवमम् ।

अङ्गुष्ठसहिताभिः सर्वाभिरङ्गुलीभिर्दशमम् ।

दशसु मन्त्रोऽभित्यमिति। तूष्णीमेकादशं, समस्याञ्जलिनाध्यावपति।

सोमोपनहनस्यान्तान्त्संगृह्योष्णीपेण बध्नाति प्रजाभ्यस्त्वेति ।

---

(१) अत्रापस्तम्बः—'क्षौमं वासो द्विगुणं त्रिगुणं वा प्राग्दशमुत्तरदशं वमध्यास्तृणाति उदग्दशं वा' (१०।२४।७) इति । मानवे—"प्राग्दशे क्षौमे सोमं राजानं मिमीत" (२।१।४।३) इति ।

(२) ज्योतिष्टोमे सोमस्योपावहरणं मानं च यत्र कुत्रापि कार्यमुत वासस्येवेति संशये—उपावहरणे मानं च सम्पादनप्रयत्नेन विना स्वत एव एकेन केनापि साधनेन कार्यमिति पूर्वपक्षे—"अथ वासः द्विगुणं वा चतुर्गुणं वा प्राग्दशं वोदग्दशं वोपस्तृणाति तद्राजानं मिमीते" (श० ब्रा० ३।३।२।९) "वाससि मिनोति वाससा चोपावहरती" ति वचनेन वाससो विहितत्वाद्वासस्येव मानं कर्तव्यमिति सिद्धान्तः । तथा हि पूर्वमीमांसा—"वाससि मानोपावहरणे प्रकृतौ सोमस्य वचनात्" (जै० १०।६। सू० ७६) इति।

स्थितं वाससि मानं वाससा चोपावहरणमिति द्वादशाहादावहर्गणे स्मिुपावहरणार्थं प्रत्यहं वासोभेदः स्यादुत नेति विचारे प्रमाणाभावान्नेति पूर्वः पक्षः ।

अर्थाद्वाससो भेदः स्यात्, हविर्धाने शकटेऽवस्थितः सोमः प्रत्यहं भेदेनाभिषवार्थं यावानेकस्याह्नः पर्याप्तस्तावान्सोमो वाससोपावहर्तव्यः । अवशिष्टश्च शकट एव वाससोपनद्धोऽवतिष्ठते । तस्मादर्थादहर्भेदे वासोन्तरमुपावहरणार्थमुत्पादयितव्यमिति (जै० १०।६। अ० २१ ) सिद्धान्तः। तच्चोपावहरणकाले एवोत्पादनीयं न तु मानकाले इत्यपि ( १०।६। अ० २२ ) सिद्धान्तितं पूर्वतन्त्रे ।

शाध्वर्यवपद्धतिः।

"ॐ प्रजाभ्यस्त्वा यध्नामि" ( ४।२५ )।

अङ्गुल्या मध्ये विवृणोति प्रजास्त्वानु प्राणन्त्विति।

"ॐ प्रजास्त्वानु प्राणन्तु प्रजास्त्वमनु प्राणिहि" ( ४।२५ )। दं विक्रयिणे प्रयच्छति(१)।

पञ्चकृत्वः सोमं पणते। अध्वर्युराह—सोमविक्रयिन् क्रय्यस्ते सोमा राजा३ (२) इति।

क्रय्य इत्याह सोमविक्रयी।

अध्वर्युः—तं वै ते क्रीणानीति।

क्रीणीहीत्याह सोमविक्रयी।

अध्वर्युः—कलया ते क्रीणानीति प्रथमं पणनम्।

भूयो वा अतः सोमो राजाऽर्हतीत्याह सोमविक्रयी।

अध्वर्युः—भूय एवातः सोमो राजार्हति महाँस्त्वेव गोर्महिमा गौवैं प्रतिधुक्तस्यै शृतं तस्यै शरस्तस्यै दधि तस्यै मस्तु तस्या आतञ्चनं तस्यै नवनीतं तस्यै घृतं तस्या आमिक्षा तस्यै वाजिनम्(३)।

शफेन ते(४)क्रीणानीति द्वितीयं पणनम्।

---

( १ ) "अनुदात्तं प्रश्नान्ताभिपूजितयोः" ( पा० ८।२।१०० )रिति प्लुतिः। सौत्रामणीयागे "क्रय्यास्ते सुरासोमा ३" इति प्रश्नः। ( का० श्रौ० १९।१।१८ )।

( २ ) अस्ति साधस्कः। तत्रेदं समामनन्ति "सोमक्रयणश्चिवत्सः साण्डः" ( तां० ब्रा० १६।१३।१) (का० श्रौ० २२।३।३९) इति। अस्ति तु प्रकृतावप्येकहायनीक्रयार्थो गौः, तत्रेदमाम्नायते, इयं गौस्तया ते क्रीणानि तस्यै शृतं, तस्यै शरस्तस्यै दधि तस्यै मस्तु तस्या आतञ्चनं तस्यै नवनीतं तस्या आमिक्षा तस्यै वाजिनमिति। ( आ० श्रौ० १०।२५।१ ) तदिह साधस्के चोदकप्राप्तम्। तत्र सन्देहः किं गोशब्दस्थाने ऊहं कृत्वाऽवशिष्टानां पदानामविकार उत सर्वेषामूह इति। यद्यप्येकहायन्यवस्थायां न विद्यन्ते शृतादयस्तथापि भावित्वेनापि तावत्सम्भवद्भिः स्वगुणैरेकहायन्येव प्रकाश्यते दृष्टार्थत्वात्। त्रिवत्से त्वभावात् 'तस्मै शृत'मित्येवं पुल्लिङ्गतया पठनीयमिति पूर्वः पक्षः। धर्माङ्गभूतायामेकहायन्यवस्थायां तावन्न सन्त्येव, भावित्वमपि नैकान्तिकं मरणसम्भवात्। अतो यथाकथञ्चित्प्ररोचनार्थं कीर्त्यन्ते। तावच्च साण्डेऽपि सम्भवति साण्डादपि या गौर्निष्पद्यते तस्या एतेऽप्याप्यमानाः साण्डादेवाप्ता भवन्तीति। तस्मान्नास्त्यूह ( जै० ९।१। अ० १४ ) इति सिद्धान्तः।

( ३ ) ज्योतिष्टोमेऽत्र याच्ञाक्रयणमाम्नातं "द्वादशाहं दीक्षितो भृतिं वन्वीते" ( आ० श्रौ० १०।१८।४ )ति याच्ञा। "अरुणया पिङ्गाक्ष्या क्रीणाती" (तै० सं० ६।१।६) ति क्रयः। तत्र सन्देहः। किं यस्य न विद्येत दीक्षणाद्द्रव्यं स्मृतिस्तेन चनितव्या, यस्य च न विद्यते सोमस्तेन क्रेतव्यः। उतोभयथापि सति चासतीति।

तत्र द्रव्यार्थं याच्ञाक्रयणमविद्यमानद्रव्यस्य स्यात्। द्रव्यवतस्त्वनर्थकं तस्मात्तस्य याच्ञादावधिकार इति प्राप्ते—स्यादेवं यदि द्रव्यमात्रप्रयुक्तं स्यात्। अपर्वप्रय

आध्वर्यवपद्धतिः।

पुनः सोमविक्रयी(१) भूयो वा अतः सोमो राजार्हतीत्याह।

अध्वर्युः--भूय एवेत्यादि।

पदा ते क्रीणानीति तृतीयं पणनम्।

पुन'र्भूयो वा अतः सोमो राजार्हती'त्याह सोमविक्रयी।

अध्वर्युः—'भूय एवातः सोमो राजार्हति महाँस्त्वेव गोर्महिमा गौर्वै प्रतिधुक् तस्यै शृतं तस्यै शरस्तस्यै मस्तु तस्या आतञ्चनं तस्यै नवनीतं तस्यै घृतं तस्या आमिक्षा तस्यै वाजिनम्।

अर्द्धेन ते क्रीणानीति चतुर्थं पणनम्।

पुन 'र्भूयो वा अतः सोमो राजार्हती'त्याह सोमविक्रयी।

अध्वर्युः--'भूय एवातः सोमो राजार्हति महाँस्त्वेव गोर्महिमा गौर्वै प्रतिधुक् तस्यै शृतं तस्यै शरस्तस्यै मस्तु तस्या आतञ्चनं तस्यै नवनीतं तस्यै घृतं तस्या आमिक्षा तस्य वाजिनम्।

गवा ते क्रीणामीति पञ्चमं पणनम्।

चतुर्षु क्रीणानीति दन्त्यः, पञ्चमे क्रीणामीत्योष्ठ्यः(२)।

ततः क्रीतः सोमो राजा चयाꣳसि प्रब्रूहीत्याह सोमविक्रयी।

---

र्थं त्विदम्। अतोऽनेन विनाऽपूर्वमेव वैगुण्यान्नोत्पद्यते। तस्मान्नित्यं याच्ञाक्रयणमिति (पू० मी० ६।८। अ० ७) सिद्धान्तः।

एवं "अग्नीदग्नीन्विहर" (श० ब्रा० ४।२।४।११। का० श्रौ० ९।७।४।) इति प्रैषार्थं पूर्वमेवाऽऽग्नीध्रेण वृद्धेऽपि स प्रैषः कार्यः। वाजपेये सत्यपि वस्त्रान्तरे "दर्भमयं परि (धापय) दधाति" (तै० ब्रा० १।३।७।१) इति विहितमनुष्ठेयम्। पशौ "यत्पशुर्मायुमकृत" (तै० सं० ३।१।४) इति विहितः संज्ञसहोमो मारणवेलायामकृतेऽपि पशुना शब्दे कृते कर्त्तव्यः।

(१) अस्ति सोमविक्रयी तत्र सन्देहः। स किमध्वर्य्वादीनामन्यतम, उतैभ्योऽन्य इति। तेषां सङ्कीर्तनात्तेषामन्यतम इति पूर्वः पक्षः। विक्रयस्याक्रत्वर्थत्वात् कृत्स्नक्रयणार्थमुपात्ता ऋत्विजो न तं कुर्युः। तस्मादन्यो विक्रयी, इति सिद्धान्तः। तदुक्तं जैमिनि—कात्यायनाभ्याम्। "विक्रयी त्वन्यः कर्मणाऽचोदितत्वात्" (३।७।३१)। "विक्रयी त्वन्यः शूद्रसंयोगात्" (६।७।४) इति।

(२) वैश्यराजन्ययोः सोमयागे न्यग्रोधस्य सोमवत्क्रयणमाम्नातम् "क्रयणप्रभृत्यनुसोममावृता समानमासादनं प्रागभिषवात्" (का० श्रौ० १०।९।२९) इति। तस्मिन्पक्षे-विशेषः। सोमनिधानानन्तरं उपरवदेशे न्यग्रोधस्य निधानम्। सोमक्रयण्यनुमन्त्रणे (४।२०। पूर्वं ४९ पत्रे) स्वस्ति सोमन्यग्रोधसखा पुनरेहीति। (पूर्वं ४७ पत्रे ११ पङ्क्तौ) सोमन्यग्रोधोपनहने आहर। सोमन्यग्रोधपर्याणहने आहर। उष्णीषावाहरेति। अभिषेचनीयदशपेययो (का० श्रौ० १५।३।३३) स्तु बहुवचनेन सोमोपनहनान्याहर। सोमपर्याणहनान्याहरोष्णीषानाहरेति। तथा एष त (शु० य० सं० ४।२४) इति वाचने 'एष वां गायत्रो भाग इति मे सोमन्यग्रोधा-

आध्वर्यवपद्धतिः।

अध्वर्युराह—चन्द्रं ते वस्त्रं ते छागा ते धेनुस्ते मिथुनौ ते गावौ तिस्रस्तेऽन्याः(१)।

शुक्रं त्वेति हिरण्यमालभ्य वाचयति यजमानम्। हिरण्यमालभस्व "ॐ शुक्रन्त्वा शुक्रेण क्रीणामि चन्द्रञ्चन्द्रेणामृतममृतेने"ति ब्रूहि यजमानो हिरण्यमालभ्य—

"ॐ शुक्रन्त्वा शुक्रेण क्रीणामि चन्द्रञ्चन्द्रेणामृतममृतेन" (४।२६)।

सग्मेत इति सोमविक्रयिणर्ठ० हिरण्येनाभिकम्पयति।

"ॐ सग्मे ते गोः" (४।२६)।

अस्मे त इति यजमानसहितं निदधाति हिरण्यम्।

"ॐ अस्मे ते चन्द्राणि" (४।२६)।

सोमविक्रय्येतदादत्ते हिरण्यम्।

अध्वर्युरजां प्रत्यङ्मुखीमालभ्य वाचयति यजमानं तपसस्तनूरिति। अजामालभस्व "ॐ तपसस्तनूरसि प्रजापतेर्वर्णः परमेण पशुना क्रीयसे सहस्रपोषम्पुषेयम्" इति ब्रूहि। यजमानोऽजामालभ्य—

"ॐ तपसस्तनूरसि प्रजापतेर्वर्णः परमेण पशुना क्रीयसे(२) सहस्रपोषम्पुषेयम्"।(४।२६)।

अध्वर्युः सोमविक्रयिणे सव्येनाजां प्रयच्छन्मित्रो न इति।

---

न्यां भूतादेष वां श्रैष्टुभो भाग इति मे सोमन्यग्रोधाभ्यां भूतादेष वां जागतो भाग इति मे सोमन्यग्रोधाभ्यां भूताच्छन्दोनामानाᳩसाम्राज्यङ्गच्छेति मे सोमन्यग्रोधाभ्यां ब्रूतादिति। उभयोरालम्भनम्। आस्माकी स्यः शुक्रन्ने गृह्य इति। सोमोपनहनमास्तीर्य न्यग्रोधोपनहनस्यास्तरणम्। सोममानानन्तरं तद्वदेव मन्त्रेण मानं उष्णीषेण च न्यनमङ्गुल्या मध्ये विवरणं च, उभयोः सोमविक्रयिणे समर्पणम्। 'सोमविक्रयिन् क्रय्यौ ते सोमन्यग्रोधौ राजानौ' इति प्रश्नः। 'क्रय्यावि'ति प्रतिवचनम्। तौ वै ते क्रीणानीति। भूयो वा अतः सोमन्यग्रोधौ राजानावर्हतः। भूय एवातः सोमन्यग्रोधौ राजानावर्हतो महास्त्वेनेत्यध्वर्युः। क्रीतौ सोमन्यग्रोधौ राजानौ वयाᳩसि प्रब्रूहीति।

(१) शाखान्तरे "एकहायन्या अनया क्रीणाति, हिरण्येन क्रीणाति, स्वशाखायां च "स आह ।चन्द्रन्ते वस्त्रं ते छागा ते धेनुस्ते मिथुनौ ते गावौ तिस्रस्ते ऽन्या" (श० ब्रा० ३।३।३।४) इत्यादिना दश क्रयद्रव्याणि विहितानि। तेषां विकल्पः समुच्चयो वेति विचारः। तत्र व्रीहियवन्यायेन (जै० १२।३।८) कार्यत्वाद्विकल्प इति पूर्वपक्षे-बहुभिर्द्रव्यैर्विक्रेतुरानतेः सौलभ्यात् "दशभिः क्रीणाति "तं वै दशभिरेव क्रीणीयाद्दशभि" (श० ब्रा०।३।३।३।१८) रिति सङ्ख्योक्तेश्च समुच्चय इति पूर्वतन्त्र (१२।४।३) सिद्धान्तः। तथा हि कात्यायनः—"चोदनागुणेषु च प्रकल्प्त्युपपत्त्याभ्याम्" (१।८।२२) इति।

(२) न्यग्रोधे चास्य मन्त्रस्योहः "परमेण पशुना क्रीयेथे इति। शुक्रन्त्वेति (४।२६) मन्त्रे 'शुक्रौ वां शुक्रेण क्रीणामि चन्द्रौ चन्द्रेणामृतावमृतेने'ति।

शाध्वर्यवपद्धतिः।

"ॐ मि(१)त्रो न एहि सुमित्रधाः" (४।२७)।

तूष्णीं दक्षिणेन सोमवाहनं सोम आनत उपतिष्ठति वा यजमानः।

अध्वर्युर्दीक्षितोरौ दक्षिणे आयुधा(२) वासो निदधातीन्द्रस्योरुमिति।

"ॐ इन्द्रस्योरुमाविश दक्षिणमुशन्नुशन्तᳪस्योनः स्योनम्"(४।२७)।

यजमानः स्वानभ्राजेति (हारमरं) (३)जपति सोमविक्रयिणमीक्षमाणः।

"ॐ स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानवे ते वᳪसो-मक्रयणास्तान्रक्षध्वं मा वो दभन्(४)(४।२७)।

अथोष्णीषे दीक्षितः शिरः स्थगयेत् पत्नी च। सोमविक्रयिहस्ता-

---

(१) ध्यपोहे चोद्यः। 'मित्रो न एहि सुमित्रधा'इति। उपगायेत्वाग्निमित्राद्-स्याविपरिणाम इति कर्कः।

(२) प्रत्युप्त प्रतिमोचोऽर्थेऽयुत्याध्येत्यर्थः। प्रतिपूर्वक ऊह वितर्के (भ्वा० आ० ६८८) इत्येषोऽत्र नयनार्थः। "वपान्तमुरुं प्रत्यूहन्त्योरुमाविशेति दक्षिणमित्युत्ताना-सादयती" (४।१।४।१८)ति मानवे। ध्यपोहे चोद्यः। 'इन्द्रस्योरुमाविश दक्षिणमु-शन्नुशन्तं स्योनः स्योन' मिति। उभयोरुपलाभाजनम्।

(३) यजमानो जपतीति कर्कः। अध्वर्युरिति याज्ञिकाः।

(४) अत्र मन्त्राह्वानमन्त्राणां स्वरश्चिन्त्यते। मन्त्रा हि यथा विकृष्टास्तथोदात्ता-नुदात्तस्वरित (ब्रा० भा० ११।५८) लक्षणैस्त्रिभिः स्वरैः पठ्यन्ते प्रथितक्रम तथैव सह चतुर्भिः स्वरैः। तत्र कर्मसु किं पैक्ष्यर्थेस्वरस्वर्थयोः साधुत्वे विकल्पो वा अथोभयत्राने-कश्रुत्या (प्रयोग) प्रयोग इति संशयः। अत्र त्रयः पक्षाः प्रस्फुरन्ति। प्रयोगवचन-स्य सर्वाङ्गोपसंहारित्वात् स्वरसाकाङ्क्षत्वस्याभेन (पू० मी० ५।४।५) वैस्वर्यादीनां साधुत्व इत्येकः पूर्वः पक्षः। गोत्सुपाय (जै० १।५।७) मन्त्रेष्वर्थाभिधानप्रकाशनस्य-मात्रार्थत्वादेकेनैव तत्सिद्धे-(अध्ययननिवृत्तिलक्षणस्य प्रयोजनस्यैकत्वात्) विकल्प इति द्वितीयः पक्षः। एतौ द्वौ पक्षौ युक्तौ "तानो यज्ञकर्मणी" ति स्मृत्यनुमितश्रुत्यनात् ऐकश्रुत्यमिति सिद्धान्तः।

ननु सर्वं क्रियार्थं स्वराध्ययनम्। अर्थावगमार्थं तु स्वराध्ययनं स्वरविशेषाधीन-त्वादर्थविशेषाणां "मद्धुलोह्ये मद्रुत्या पूर्वपदमि" (पा० ६।५।१) स्मारितवत्वाच्च-त्वाशालेन प्रयोग इति जैमिनेः सिद्धान्तः (१।२।८)। तथा च कात्यायनः—"मन्त्रे स्वरक्रियाध्याहारमातत्वविशेषात्। भाषिकस्वरो ब्राह्मणमन्त्रोपदेशात्। तानो वा नित्य-त्वादि"(का० श्रौ० सू० १।८।१६-१८)ति।

कर्मणि प्रावचनस्वरेणैव मन्त्रोच्चारणं कर्तव्यं, ब्राह्मणोत्पन्नमन्त्राणां तु भाषिकस्व-रेणैवोच्चारणं कर्तव्यमिति (जै० १।५।३। सू० २०।५५) सिद्धान्तः।

अथ चैकश्रुति (तान) विधिर्जपन्यासादिव्यतिरिक्तविषयः। "यज्ञकर्मण्यजपन्यूङ्ख-साम (१।२।३४) स्वि"ति पाणिनिस्मृतेः। जपादौ तु यथाध्ययनं चाद्वारवर्णेन चैस्व-र्येण वा प्रयोगः। तथैव कात्यायनः—"एकश्रुति दूरात्सम्बुद्धौ यज्ञकर्मणि सुब्रह्मण्या-साम-जप-न्यूङ्ख-याजमानवर्जमि" (१।८।१९)ति। एकश्रुतिर्नाम "उदात्तानुदात्त-स्वरितानां परः सन्निकर्षः एकश्रुत्य" (१।२) मित्याश्वलायनश्रौतसूत्रादुदात्तानुदात्त-

आध्वर्यवपद्धतिः ।

हिरण्यवं० सहस्राँश्चिय तत्र पृषता वरत्राकाण्डेनाहन्ति (१)वा ॥८॥

अत्र(२)वा दण्डदानम् ।

यजमानं गृहीतसोमं परिमाग्न इति वाचयत्यध्वर्युः ।

"ॐ परिमाग्ने दुश्चरिताद्बाधस्वा मा सुचरिते भज" इति ब्रूहि ।

यजमानः—

"ॐपरि माग्ने दुश्चरिताद्बाधस्वा मा सुचरिते भज"(४।२८) ।

उत्तरे च कर्मणी यजमानकर्तृके । यजमानः उदायुषेत्युत्थानं शीर्ष्णि सोमं कृत्वा पाणिमन्तर्धाय—

"ॐ उदायुषा स्वायुषोदस्थाममृताँऽ२ अनु" (४।२८) ।

प्रतिपन्थामित्यनोऽभ्येति(३) क्रयस्थानाद्दक्षिणतस्तिष्ठच्छकटं समक्तिं धौतं प्रउगाच्चोद्धते फलके ।

"ॐ प्रति पन्थामपद्महि स्वस्तिगामनेहसम् । येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु" (४।२९) ।

ब्रह्मा सोमे क्रीते प्राङ्तीत्य पूर्वेणानः परीत्यापरेण वा दक्षिणाऽनुगच्छत्या निधानाद्दक्षिणेनामाश्रितः ।

अध्वर्युः कृष्णाजिनमस्मिन्नास्तृणात्यदित्या स्त्वगिति ।

"ॐ अदित्यास्त्वगसि" ।

यजमानाद्गृहीत्वा तस्मिन्सोमं निदधात्यदित्यै सद(४) इति ।

---

स्वरितस्वराणामभावः । सुब्रह्मण्या-न्यूङ्खादीनां स्वरूपाणि लाट्यायना (१।३।२-१।४।३१) श्वलायन (उ० १।११) श्रौतसूत्रेष्ववगन्तव्यानीति ।

(१) अथवा नाहन्ति शाखान्तरात् । अत्राहापस्तम्बः-"यदि सोमविक्रयी प्रति विब्रूयात् पृषतेन वरत्राकाण्डेनावक्षायं नाशयेयुः । लकुटैर्घ्नन्तीत्येके । नित्यवदेके वधं समामनन्ति" (१०।२७।६-८)ति 'सोमविक्रयिणे किञ्चिद्दद्यादिति' (२।१।५।१२) मानवे।

(२) अस्मिन्नवसरे मैत्रावरुणाय दीक्षितदण्डस्य प्रदानं कर्तव्यं विकल्पेन "क्रीते वे" (का० श्रौ० ६।४।६।) इत्युक्तत्वात् । अथवा अग्नीषोमीये एव "अग्निर्ह दैवीना" (का० श्रौ० ६।४।३) मित्येतस्मादनन्तरम् ।

(३) एतच्चानः सोमक्रयार्थमागच्छद्भिः सह नेयम् । तथा च मानवे-"सउदिच्छेणानसा राजानमच्छ यन्ति" (२।१।३।४८) आपस्तम्बसूत्रेऽपि-"अपि पन्थामगन्महीत्युद्धृतपूर्वफलकेनानसा परिश्रितेन छदिष्मता प्राञ्चः सोममच्छ यन्ति । शीर्ष्णा गिरौ क्रीतं हरन्त्यपरेणोत्तरेण वा राजानं प्राञ्चीषमुदञ्चीषं वा नह्युगं शकट" (१०।२४।२-४) मिति । न्यग्रोधस्य संस्कारपक्षे तस्याप्यादानं शिरसि करणं च भवति ।

(४) न्यग्रोधपक्षे तस्यापि सहैव स्थापनं, 'आदित्यै सद आसीदेतमि'त्यूहश्च ।

अभिषेचनीये च "सोमं क्रीत्वा द्वैधमुपनह्य पर्यूह्य" (श० ब्रा० ५।४।५।१५) (का० श्रौ० १५।४।३) इत्याम्नातत्वात्सोमविक्रयिणः सकाशाद्धिरण्यदानानन्तरं सोमस्य

आध्वर्यवपद्धतिः ।

"ॐ अदित्यै सद्ऽआसीद" ( ४।३० ) ।

अस्तभ्नाद्यामिति सोममालभ्य वाचयति यजमानम् । (१) सोममालभस्व ।

"ॐअस्तभ्नाद्यां वृषभोऽअन्तरिक्षममिमीत व्वरिमाणम्पृथिव्याः ।

आसीद्द्विश्वा भुवनानि सम्म्राड् विश्वेत्तानि व्वरुणस्य व्व्रतानि" ( ४।३० ) इति ब्रूहि ।

यजमानः—सोममालभ्य पठेत् ।

"ॐ अस्तभ्नाद्यां व्वृषभोऽअन्तरिक्षममिमीत व्वरिमाणम्पृथिव्याः ।

आसीद्द्विश्वा भुवनानि सम्म्राड् विश्वेत्तानि व्वरुणस्य व्व्रतानि" ( ४।३० ) ।

वनेषु व्यन्तरिक्षमिति सोमपर्याणहनेन परितत्य(२) ।

"ॐ व्वनेषु व्यन्तरिक्षन्ततान व्वाजमर्वत्सु पयऽउस्रियासु ।

हृत्सुक्रतुं व्वरुणो व्विक्ष्वग्निन्दिवि सूर्य्यमदधात्सोममद्रौ" (४।३१) ।

कृष्णाजिनं रथस्य पुरस्तादासजति सूर्यस्य चक्षुरित्यासनयोरन्यतरदेकं चेद्ग्रीवा अवकृत्य ।

"ॐ सूर्यस्य चक्षुरारोहाग्नेरक्ष्णः कनीनकम् ।

यत्रैतशेभिरीयसे भ्राजमानो विपश्चिता" ( ४।३२ ) ।

अनड्वाहौ(३)युनक्त्युस्रावेतमिति । युगपत्तद्वचनत्वाद्वेदे मन्त्रावृत्तिः सान्निपातित्वात् ।

"ॐ उस्रावेतन्धूर्षाहौ युज्येथामनश्रूऽअवीरहणौ ब्रह्मचोदनौ ।

स्वस्ति यजमानस्य गृहान् गच्छतम्" ( ४।३३ ) ।

ईषान्तरे भूमिष्ठः सुब्रह्मण्यः पलाशशाखया प्राजति ।

अध्वर्युः पश्चात्परीत्याऽपालम्बं(४) गृहीत्वा सोमाय क्रीतायानुवाचयति ।

---

वस्त्रद्वये पृथक् पृथक् बन्धनं न्यग्रोधस्य च, यजमानः सर्वांञ्छिरसि कृत्वा गच्छति, सर्वेषामासादनं, 'अदित्यै सद आसीदेते' त्यूहश्च ।

( १ ) न्यग्रोधे च 'सोमन्यग्रोधावालभस्वे'ति प्रैषः ।

'अस्तभ्नीतां द्यां वृषभावन्तरिक्षममिमातां वरिमाणं पृथिव्याः । आसीदतं विश्वा भुवनानि सम्राजौ विश्वेत्ता' नीत्याद्यूहः ।

अभिषेचनीये च 'सोमन्यग्रोधानालभस्वे' ति प्रैषः । 'अस्तभ्ना द्यां वृषभाऽअन्तरिक्षममिमत वरिमाणं पृथिव्याः। आसीदत विश्वा भुवनानि सम्राजो विश्वे' त्यादि ।

( २ ) अग्रानसो वाससा वेष्टनमिति केचित् । तथा च मानवे-'वनेषु व्यन्तरिक्षमित्यनो वाससा पर्यागह्नती' ( २।१।४।२३ ) ति ।

( ३ ) अत्र पशुवेकत्वाधिकरणन्यायेन (पू० मी० ४।१।५) द्वित्वस्य विवक्षितत्वं द्रष्टव्यम् ।

( ४ ) अत्र विप्रतिपत्तिः । अपालम्बशब्देन पश्चादावद्धा रज्जुरभिधीयते यया

आध्वर्य्यवपद्धतिः ।

"ॐ सोमाय क्रीतायाऽनु ब्रूहि"(१)सोमाय पर्युह्यमाणायेति वा ।

हौत्रपद्धतिः ।

अथ सोमक्रयः । क्रीत्वा राजानमाधाय शकटे, ततः शकटस्य पश्चाद-न्तरेण वर्त्मनी तिष्ठन्ननूच्य अध्वर्युणा सोमाय पर्युह्यमाणायानुब्रूही(२)त्युक्ते होताऽऽचम्य ।

ॐ भद्रादभिश्रेयः प्रेहि बृहस्पतिः पुर एता ते अस्तु ।

अथेममस्यवर आपृथिव्या आ रे शत्रून्कृणुहि सर्ववीरां(३) ३ म् ।

भद्रादभिश्रेयः प्रेहि बृहस्पतिः पुर एता ते अस्तु ।

अथेममस्य वर आपृथिव्या आ रे शत्रून् कृणुहि सर्ववीरोम् ।

भद्रादभिश्रेयः प्रेहि बृहस्पतिः पुर एताते अस्तु ।

अस्यास्तृतीये वचनेऽर्द्धर्चे विरमेत्(४) तत अनुसंयन्नन्तरेण वर्त्म-नी तिष्ठन्ननूच्य ।

अथेममस्य वर आ पृथिव्या आ रे शत्रून्कृणुहि सर्ववीरो ३ म्(५)

---

अवतारे अनः प्रवर्तमानं विधीयते इति कर्कः । पश्चाद्भागे वर्द्धं लम्बायमानं दारु अपा-लम्बशब्देनोच्यते येनोर्ध्वप्रदेशे प्रचलतः शकटस्य स्तम्भनेन पर्यावर्तनं वार्यते इति हरि-स्वामिनो याज्ञिकाश्च ।

(१) न्यग्रोधश्वेतसोमन्यग्रोधाभ्यामनुब्रूहि । पर्युह्यमाणाभ्यामिति वा ।

अभिषेचनीये च सोमन्यग्रोधेभ्यः पर्युह्यमाणेभ्य इति वा । वाजपेये सोमेन सह सुरा-द्रव्याणां निष्पन्नसुराया वा क्रयणं भवति । तथा हि कात्यायनः–"सोमात् क्रीयमाणात् सहितं दक्षिणतः सीसेन परिस्रुतः क्रयणं केशवा (१४।१।१४) दि"ति ।

(२) शाखान्तरात् 'सोमाय क्रीतायानुब्रूही' ति वा प्रेषितो होताऽयम्य सोम-वहनार्थशकटस्य पश्चात् शकटद्वयसङ्कर्षणसमुत्पादितवर्त्मप्रवाहिकाद्वयमध्ये यदुच्चं स्थलं तत्र तिष्ठन् भद्रादभिश्रेय इति त्रिराह ।

अत्राश्वलायने–'अनसः पश्चात् त्रिपदमात्रेऽन्तरेण वर्त्मनो तिष्ठे' दिति विशेषः । तथा च सूत्रम् । "तं प्रवक्ष्यत्सु पश्चादनसस्त्रिपदमात्रेऽन्तरेण वर्त्मनी अवस्थाये" (पत्र १६९) ति ।

(३) सौत्रमन्त्रोऽयम् (आश्व० श्रौ० १६९ पत्रे । शां० श्रौ० ९१ पत्रे च) ।

(४) यावदध्वर्य्यवो न गच्छति, गच्छत्सु तेषु तिष्ठन्नेव अर्धर्चमुक्त्वा चक्रवर्त्मनी अन्तरेणानुगच्छन्ननुगन्तराः—पदृचोऽन्याह ।

(५) अत्र याजुर्वैष्टिकपाशुक-सौमिकमाश्वशाङ्खायनीयहौत्र प्रकृतिकाग्निष्टोमे सा-मिधेन्याद्यैष्टिकपाशुकानुवचनेषु "उत्तमस्य छन्दोमानस्योर्द्धमादिव्यञ्जनात्स्थान ओं-कारः प्लुतस्त्रिमात्रः शुद्धः" (शां० श्रौ० १।१।१९) "स सर्वेषामृगणानां धर्मो ये क्रमसं-योगेन चोद्यन्त" (शां० श्रौ० १।१।२४) इत्यनेन ऋग्गणस्यान्त्यवसानेषु पारिभाषिक-शाङ्खायनसूत्रे विहितः प्राकृतः शुद्धः प्रणव इति चेन्न, पारिभाषिकत्वेन प्राकृतत्वाच्चास्य । कातीयसूत्रे 'महाव्याहृतिरोम्पूर्वाः सामिधेनीः प्रणवेनार्धर्चशः संदध्यादि'.( हौ० सूत्र०

हौत्रपद्धतिः।

इ(१)मां धियं शिक्षमाणस्य देव क्रतुं दक्षं वरुण संशिशाधि।
ययाति विश्वा दुरिता तरेम सुतर्माणमधि नावं रुहेमो ३
वने(२)षु व्यन्तरिक्षं ततान वाजमर्वत्सु पय उस्रियासु।
हृत्सु क्रतुं वरुणो अप्स्वग्निं दिवि सूर्यमदधात्सोममद्रौ ३
(३)सोम यास्ते मयोभुव ऽऊतयः सन्ति दाशुषे। ताभिर्नोऽविता भवो ३
इमं यज्ञमिदं वचो जुजुषाण ऽउपागहि। सोम त्वं नो वृधे भवो ३
सोम गीर्भिष्ट्वा वयं वर्धयामो वचोविदः। सुमृळीको न ऽआविशो ३
गयस्फानोऽअमीवहा वसुवित्पुष्टिवर्द्धनः"।
मन्त्रार्धर्च विरमेत्।

ततः(४) शालामग्रेण शकटमवस्थाप्य प्रपादयन्ति राजानम्। येन(५) प्रजेयुस्तेनानुसमियात्।
"सुमित्रः सोम नोभवो ३
या ते (६)धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम्"॥
इत्यनुप्रपद्य विरमेत्। अग्नेणाहवनीयं दक्षिणा तिष्ठन्-
"गयस्फानः प्रतरणः सुवीरोऽवीरहा प्र चरा सोम दुर्यो ३
(७)आ गन्देव ऋतुभिर्वर्धतु क्षयं दधातु नः सविता सुप्रजामिषं।
स नः क्षपाभिरहभिश्च जिन्वतु प्रजावन्तं रयिमस्मे समिन्वतो ३

---

११ ) ति प्रकृतौ मकारान्तस्यैवोक्तत्वात् 'प्रकृतिवद्विकृतिरि'ति न्यायेन पारिभाषिका आगुवषट्कारप्रणवाद्याः प्राकृतधर्माः कातीयोक्ता एव। सोमक्रयादिसौमिकानुवचनेषु तु "शुद्ध एव प्रणवः स्याच्छस्त्रानुवचनयोर्मध्य इति ह स्माह कौषीतकिस्तथा संहितं भवति मकारान्तो वसानार्थः" इति शस्त्रानुवचनयोः प्रणवस्य सौमिके पुनर्विधानाद्विहोपाह्वानाशासानवच्छस्त्रानुवचन ऋक्मन्ततो शुद्ध एव प्रणवः। शाङ्खायनसूत्रेऽपि "शोंसावो ३ इत्याहावः शस्त्रादौ प्रातःसवने तेनाहूयोपांशु तूष्णीं शंसम्" ( ७।१।१ ) "सोऽध्वरा करति जातवेदो ३ प्र वो देवायेत्याज्य" ( ७।१।३ ) मित्यत्र पुनर्विधानेन सौमिकत्वाच्च प्रशास्त्रादीनामपि होत्राशंसित्वेन होतृविकारत्वात्तद्याज्यास्वप्यागुवषट्कारादिकं कातीयधर्मेण होतृवदेव, वषट्कारादीनां प्राकृतत्वादिति।

(१) ऋ० ८।४२।३। (२) ऋ० ५।८५।२। (३) ऋ० १।९१।९—१२॥

(४) शालां पूर्वेणाध्वर्यवः शकटमवस्थाप्य प्रपादयन्ति=प्रवेशयन्ति शालायां सोमम्। दत्तेयं ( श० ब्रा० ३।४।१।१६। का० श्रौ० १५।४।३। ) तु महागारं नयन्ति। तत्रापि कथं नाम होतान्वियादित्याध्वर्यवस्य शालाग्रेणेत्यादेरुद्देशः। शाङ्खायने विशेषः—शालाया अग्रेणोदङ्मुखे शकटे स्थापिते तस्य दक्षिणपार्श्वेन गत्वा अग्रतो राजानमभिमुखो होताऽवतिष्ठति आ प्रपादनात्। तथा च सूत्रम्। 'अवस्थितेऽनसि दक्षिणात्पश्चादभिक्रम्य राजानमभिमुखोऽवतिष्ठत' ( १६९ पृ० ) इति।

( ५ ) येनाध्वर्यादयो प्रजेयुर्यद्याहवनीयं पूर्वेण वापरेण वा तेनानुसमियाद्धोता।

( ६ ) ऋ० १।९१।१९। ( ७ ) ऋ० ४।५३।७।

आध्वर्यवपद्धतिः।

दीक्षितश्चान्वारभते(१) सोमम्।
त्रिवृत्कायां प्राङ् यात्वा दक्षिणाऽऽवर्त्य शालां गच्छति।
अध्वर्युर्भद्रो म इति वाचयति यजमानम्॥

हौत्रपद्धतिः।

आगन्देव ऋतुभिर्वर्द्धतु क्षयं दधातु नः सविता सुप्रजामिषं।
स नः क्षपाभिरहभिश्च जिन्वतु प्रजावन्तं रयिमस्मे समिन्वतो३
आगन्देव ऋतुभिर्वर्द्धतु क्षयं तद्धातु नः सविता सुप्रजामिषं।
स नः क्षपाभिरहभिश्च जिन्वतु प्रजावन्तं रयिमस्मे समिन्वतोऽम्।

---

(१) ब्रह्मा च प्राङ् यात्वाऽनः पूर्वणापरेण वा गत्वाऽदक्षिणदिगाश्रितः पृष्ठतोऽनुगच्छत्यासोमनिधानादिति रामवाजपेयिनः। तथा हि कात्यायनः—"हिरण्यवत्स्याᳪहुतायां दक्षिणानुगच्छत्याक्रयात्। क्रीते प्राङ्त्तीत्य पूर्वेणानःपरीत्य परेण वा दक्षिणतोऽनुगच्छत्याक्रयात्" (११।१।३-४) इति। अत्र शाङ्खायनकल्पः—दक्षिणतो न्यायं ब्रह्मकर्म (४।६।११)।

कर्मणः क्रियमाणस्य दक्षिणतः स्थितेन ब्रह्मत्वमनुष्ठीयमानं न्यायवद् भवति। कुतः। सामर्थ्यात्। अथवा न्यायशब्दः प्राये वर्तते। दक्षिणतोन्यायं ब्रह्मकर्म बाहुल्यमेव। तथा च श्रुतिदर्शनानि। "तेन दक्षिणतो ब्रह्मासीत्तस्य दक्षिणतो वर्षीयानुदीचीनप्रवणो यज्ञः सर्तस्य" इति।

शतपथे च "ते होचुः। को नो दक्षिणत आसिष्यतेऽस्याऽभयेऽनाष्ट्रा उत्तरतो यज्ञमुपचरिष्याम" (४. ६. ६. १.) इति। अतश्च सोमेऽप्यय न्यायस्तुल्यत्वात्।

अभियुक्ततरैरन्यरक्ता ये ब्रह्मसंचराः।
न्यायतो वचनाच्चापि श्लोकैस्तान्निबोधत॥ १॥
व्रजेदाहवनीयं तु पूर्वेणाप्यपरेण वा।
इष्टिपश्वोरयं प्रोक्तः संचरो वरणात्सदा॥ २॥
दर्शे च पौर्णमासे च वरणात्प्राङ् न विद्यते।
नचैवोत्सर्जनादूर्ध्वं ब्रह्मकर्म पशौ तथा॥ ३॥
न साक्ष्यं पुरुषार्थेषु यज्ञमित्यधिकारतः।
भासः संध्यावाग्यमने शयने न प्रबोधने॥ ४॥
न विष्णुक्रमवात्सप्रे न कण्डूयनमेहने।
समिद्वनीवाहभृतौ नैव लब्धप्रवाचने॥ ५॥
भस्मोद्वापे तथारब्धे प्रतिपत्तिक्रियासु च।
अग्निहोत्रे श्रुतो ब्रह्मा कुण्डपाय्येऽपि तत्तथा॥ ६॥
कर्मणः क्रियमाणस्य प्राय आसनसंचरौ।

आध्वर्यवपद्धतिः।

"ॐभद्रो मेऽसि प्रच्यवस्व भुवस्पते विश्वान्यभि धामानि।

मा त्वा परिपरिणो विदन्मा त्वा परिपन्थिनो विदन्मा त्वा वृकाऽघायवो विदन्।

श्येनो भूत्वा परापत यजमानस्य गृहान्गच्छ तन्नौ संस्कृतम्" इति ब्रूहि। यजमानः-

हौत्रपद्धतिः।

इति परिधाय उपस्पृश्योत्सृज्यते। इति सोमक्रयः।

मदन्तीभिरुदकार्थोऽत ऊर्ध्वमग्नीषोमप्रणयनात्।

---

दक्षिणान्यायतः सूत्रे अग्नीनां चाप्यवायतः॥ ७॥
हुते हिरण्यवद्धोमे अनुगच्छति दक्षिणः।
परीत्यानः क्रये वृत्त आ निधानात्तथा व्रजेत्॥ ८॥
प्रवर्ग्याभिष्टवे पश्चाद्दक्षिणाग्नेरुदङ्मुखः।
आसित्वा चानुमंयाने यायात्प्राग्दक्षिणेन तम्॥ ९॥
आसीतोदङ्मुखो नित्यं वेद्यमाद्दक्षिणाद् बहिः
वेदिमानप्रभृत्यान्तात्सवति साध्यस्य संभरे॥ १०॥
अग्निप्रणयनं साग्नावन्यत्र च यथोदितम्॥
प्रवर्ग्योत्सादने स्येति दक्षिणेनाविरोधतः॥ ११॥
आग्नीध्रे यदि घर्मः स्याद् दक्षिणेनाग्निमासनम्॥
खरात्पात्रात्तरेणेत्य आस्तावादेव संचरः॥ १२॥
अनुव्रज्य ततोघर्मं गत्वा तीर्थेन चासनम्॥
यत्रसंचर एष स्यात्प्रत्यग्गमनमिच्छतः॥ १३॥
अध्वरं दक्षिणेनैव शालाग्नीनपरेण तु।
मध्यन्दिने चेदाग्नीध्रे धर्मस्तत्रैव सञ्चरः॥ १४॥
प्रविश्य दक्षिणेनैव तत्रैवास्त उदङ्मुखः।
यत्रसञ्चरमास्थायानुयायात्स्वस्थः पुनः॥ १५॥
तेनैव शीघ्रमागत्य प्राग्घोमात्तत्र चासनम्।
प्राप्ते तेनैव निः सर्पद्घर्मोत्सादकर्मणि॥ १६॥
परिस्पन्दमनुव्रज्य प्रत्येयाच्च यथागतम्।
दक्षिणेनैव सदसो हविर्धाने च सञ्चरः॥ १७॥
उत्सादनं चेदग्नौ स्याद्व्यवायोऽत्र कारणम्।
प्रणयन्ति यदाग्निं च सोमश्चाध्वर्युवम्स्तदा॥ १८॥
हौतृवत्सञ्चरो ज्ञेयः स एवापरात्रिकः।
तत आदाय राजानमन्वेत्यग्निं परेच्छया॥ १९॥
हुते वैसर्जने होमे रिक्तको वा यथागतम्।
राजानमध्यस्ते तु हृत्वाग्नीध्रे सहासनम्॥ २०॥
एवमाहवनीयेऽपि यावद्वैसर्जनाहुतिः।

आध्वर्यवपद्धतिः ।

"ॐभद्रो मेऽसि प्रच्यवस्व भुवस्पते विश्वान्यभि धामानि ।

मा त्वा परिपरिणो विदन्मा त्वा परिपन्थिनो विदन्मा त्वा वृका अघायवो विदन् ।

श्येनो भूत्वा परापत यजमानस्य गृहान्गच्छ तन्नौ संस्कृतम्"(१) (४ । ३४) ।

अध्वर्युः-सुब्रह्मण्यां वाचयति (चाह्वयति) (२)सुब्रह्मण्यो ३ॐ सुब्रह्मण्यो ३ मिति त्रिरुक्त्वा सकृन्निगदं यावदहे सुत्या भवति तथाऽऽह ।

---

अपरेणैव वितानस्य प्रत्येत्य प्रविशेत्ततः ॥ २१ ॥
द्वारा सोमः ससोमो वा हविर्धानं तु पूर्वया ।
इच्छन्ति पश्चिमेनान्ये द्वारेणैव प्रवेशितुम् ॥ २२ ॥
ब्रह्मणोऽपि तथैवात्र सोमहस्तस्य सञ्चरः ।
मार्जालीयं तु पूर्वेण आगच्छेद्दिक्क्रो यदि ॥ २३ ॥
असौ दक्षिणस्यैव आस्ते दक्षिणतस्ततः ।
उत्थाय पश्चिमे यामे साध्यमध्वर्युकर्मणः ॥ २४ ॥
कृत्वा होतुस्ततः कुर्यात्प्रततः स्वासनास्थितः ।
ततः प्रदक्षिणं यज्ञं परीत्याभिषेक्षणे ॥ २५ ॥
प्रविशेत्पूर्वया द्वारा सर्पतामनु तद्वतः ।
सदःप्रवेशस्सूत्रोक्तः सञ्चरश्च विसंस्थिते ॥ २६ ॥
बहिः संज्ञस्य सदसि पवमानस्य चेत् क्रिया ।
पूर्वेणैव प्रशास्तारं ब्रह्मणो गतिरागतिः ॥ २७ ॥
मानसे ब्रह्मवद्ये च चक्रारोहण एव च ॥
यज्ञसञ्चर एष स्यात्पर्यत्येवाभिषेचने ॥ २८ ॥
कुर्वता न्यायवचनं व्यवायं प्रतिषेधता ।
उक्तमेव सुयज्ञेन तदेवेदमुदाहृतम् ॥ २९ ॥

( १ ) न्यग्रोधे विशेषः । भद्रौ मे स्थः प्रच्यवेथां भुवस्पती विश्वान्यभिधामानि। मा वां परिपरिणो विदन्मा वां परिपन्थिनो विदन्मा वां वृका अघायवो विदन्। श्येनौ भूत्वा परापततं यजमानस्य गृहान् गच्छतं तन्नौ संस्कृतमिति । अभिषेचनीये च—भद्रा मे स्थः प्रच्यवध्वं भुवस्पतयो विश्वान्यभि धामानि। मा वः परि परिणो विदन्मा वः परिपन्थिनो विदन्मा वो वृका अघायवो विदन्। श्येना भूत्वा परा पतत यजमानस्य गृहान् गच्छत तन्नौ संस्कृतमिति ।

( २ ) अध्वर्युरेव वाचनानन्तरं सुब्रह्मण्यामाह्वयेत्, अध्वर्युवेदे एवं विधानात् प्रैषस्य चानुक्तत्वात् सुब्रह्मण्यस्यापि प्रकारान्तरेणाह्वानस्योक्तत्वाच्च सुब्रह्मण्यः पुनः स्वकीयां सुब्रह्मण्यां निगदवर्जितां त्रिः कृत्वः प्राचि प्रवर्तमानेऽनसि षट्कृत्वः प्रतीचीति ।

अध्वर्युः कथमाह्वयतीत्यपेक्षायामाह—सुब्रह्मण्यो ३ॐसुब्रह्मण्यो ३ मित्येवमग्रस्त्वं त्रिरुक्त्वा—वारत्रयमुच्चार्य शेषमिन्द्रागच्छेत्यादिनिगदं (श०ब्रा० ३।३।४।१८।१९) सकृदेकवारमुक्त्वा यावदहेऽतीते सुत्या भवति—अस्मात् क्रयणदिवसादारभ्य यावत्सु दिनेष्व-

आध्वर्यवपद्धतिः ।

तिक्रान्तेषु सुत्या भवति तथा आह । तद्यथा—त्र्युपसत्के त्र्यहे सुत्यामिति, षडुपसत्के षडहे सुत्यामिति, द्वादशोपसत्के द्वादशाहे सुत्यामिति "अथ सुब्रह्मण्यामाह्वयतो ( श्रा० ब्रा० ३।३।४।१७ )ति प्रकृत्य सर्वस्य श्रुतत्वात् । अत्र श्रुतौ "इत्यहे" सुत्यामितीति सा-भिनयं संख्यां प्रतिनिर्दिशति । इत्यहे एतावदहे—द्व्यहे त्र्यहे श्वः सुत्यामिति । एवमेतेषां सर्वसङ्ख्याविशेषशब्दानां परिग्रहार्थं इति शब्दः, यावदहे सुत्या भवतीति, तस्मात् वर्त-मानसुब्रह्मण्यादिवसादारभ्य यावदहेऽतीते सुत्या भवति तावदह इति वक्तव्यम् । यथा तावद्द्वादशोपसत्के द्वादशाहे सुत्यामिति क्रयकाले वाच्यं त्र्युपसत्के त्र्यह इति । कुत एतत् अतीतेनैव द्वादशाहादिना सुत्योरलक्षणीया न वर्तमानेन, कुत एतत् एकस्याः सुत्या-यास्त्र्यहादौ वर्तमाने असम्भवात् । अथान्त्येनाह्ना वर्तमानेन लक्ष्यत इत्युच्यते तथापि इह यावच्छब्दो विहन्यते, तथापि सति 'यावतिथे' इति स्यात् प्रयोगश्च तदैवं स्यात् 'तृतीये' इति । तस्माद्यावदहेऽतीते सुत्या भवति तावदह इति वाच्यमिति देव. ।

सुब्रह्मण्य एव सुब्रह्मण्यामाह्वयतीति हरिस्वामिनः । एतदपि समूल यतो मानव ( २। १।४।३० ) लौगाक्ष्यापस्तम्ब ( १०।१२।८।४ ) सूत्रेषु विधानात् ।

अत्र 'सुब्रह्मण्य सुब्रह्मण्यामाह्वयेती'त्येवं प्रयोग उक्तोऽस्ति । वाजसेये च शक्रागच्छ हरिव आगच्छेति।विश्वे ब्रह्माण आगच्छेति विशेषः । अग्निष्टुति च सुब्रह्मण्याग्नेयी ( का० श्रौ० २२।६।१२ ) भवति ।

अत्र मीमांसा—अस्त्यत्र ज्योतिष्टोमे देवताप्रकाशनार्थः सुब्रह्मण्यानिगदः "इन्द्रा-गच्छ हरिव आगच्छ मेधातिथेर्मेष वृषणश्वस्य मेने । गौरावस्कन्दिन्नहल्यायै जार कौ-शिक ब्राह्मण गौतम ब्रुवाण" (श० ब्रा० ३।३।४।१८) (सा० प० ब्रा० १।१।१२) (तै० आ० १।१२।३-४) (द्रा० श्रौ० १।३।८।१) (ला० श्रौ० १।३।१) इति । सोऽयं निगदो विकृताव-ग्निष्टुति चोदकेनातिदिष्टः । तत्र "आग्नेयी सुब्रह्मण्या भवति" (का०श्रौ० २२।६।१२) "अ-ग्निष्टुतस्त्वाग्नेयो निगदः" (ला० श्रौ० १।४।१ द्रा० श्रौ० १।४।३) इत्यादिवचनवशादिन्द्र-पदस्थानेऽग्निपदं निक्षिप्यते "अग्न आगच्छ" इति । निगदेऽस्मिन्यानीन्द्रपदस्य विशेषणा-नि 'हरिव' इत्यादि सम्बुध्यन्तपदानि तान्यप्यूहनीयानि न वेति संशयः । तानि उहित-व्यान्येव । कुतः इन्द्रे एव नियमेन समवेतस्यार्थस्याभिधानात । अग्नौ तस्याभावात् । स चार्थस्तत्सम्बुध्यन्तपदमनूद्य व्याचक्षाणेन ब्राह्मणेन स्पष्टीकृतः । तथा च श्रूयते 'हरिव आगच्छेति, पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी, ताभ्यां ह्येष सर्वं हरतीति । मेधातिथेर्मेषे-ति, मेधातिथिं काण्वायनिं मेषो भूत्वा जहार । वृषणश्वस्य मेन इति, वृषणश्वस्य मेनका नाम दुहिता बभूव, तामिन्द्रश्चकमे । गौरावस्कन्दिन्निति, गौरमृगो भूत्वा राजानं पिबति (प०ब्रा० १।१) (त०आ० १।१२ ३-४ सा०भा०) इति । एतस्यार्थस्य इन्द्रे एवान्वितस्या-भावसम्भवात्तत्परित्यागेनाग्नेरुचितानि कानिचिद्विशेषणान्यूहनीयानीति पूर्वः पक्षः ।

इन्द्रशब्दस्य कर्मसमवेतदेवताप्रकाशकत्वान्न स्वावकत्वमित्यस्ति तस्योदः । हरिव-दादिशब्दा ब्राह्मणव्याख्यातगुणाभिधानद्वारेणेन्द्रं स्तुवन्ति । स्तुतिश्च विद्यमानगुणवद-विद्यमानेनापि गुणेन कर्तुं शक्यते । तस्मात्— अग्निस्तुतसम्भवान्नास्त्यूह इति जैमिनेः ( १।१। सू० ४२-४४ ) सिद्धान्तः ।

तदेतन्न रोचयन्ते याज्ञिकाः, ऊहं कुर्वन्ति । गौतमीये मते—'अग्न आगच्छ रोहिता-श्व बृहद्भानो धूमकेतो जातवेदो विचर्षण आङ्गिरस ब्राह्मणाङ्गिरसब्रुवाण' ( द्रा० श्रौ०

आध्वर्यवपद्धतिः ।

ॐ सुब्रह्मण्योꣳ सुब्रह्मण्योꣳ सुब्रह्मण्यो ३ मिन्द्रागच्छ हरिव आगच्छ मेधातिथेर्मेष वृषणश्वस्य मेने । गौरावस्कन्दिन्नहल्यायै जार कौशिक ब्राह्मण गौतम ब्रुवाण । त्र्यहे सुत्यामागच्छ मघवन्देवा ब्राह्मण आगच्छताऽऽगच्छताऽऽगच्छत ।

औद्गात्रपद्धतिः ।

क्रीते सोमे सुब्रह्मण्यं प्रति अध्वर्युप्रैषानन्तरं पूर्वमवृतश्चेदिदानीं वृतः सन् सुब्रह्मण्यः सोमवहनमुत्तरेण गत्वा उत्तरामीषामाश्रित्य सपत्रां शमीशाखां पलाशशाखां वा दक्षिणहस्ते कृत्वा ईषयोर्मध्ये भूमावधितिष्ठेत ।

ततो वामेन हस्तेन रज्जुद्वयं गृहीत्वा शाखया दक्षिणमनड्वाहं प्रथमं प्रेरयेत् । पश्चादुत्तरम् ।

प्राङ्मुखे नीयमाने शकटे सुब्रह्मण्योमिति त्रिराह्वयेन्मध्यमस्वरेण । अस्य वचनस्यान्त्यमक्षरमुच्चम् । अन्यत्सर्वं नीचम् ।

प्रत्यङ्मुखे नीयमाने सुब्रह्मण्योमिति पट्कृत्व आह्वयेत् ॥ नात्र निगदः ।

पत्नीशालायाः पूर्वे प्रदेशे अनडुहि विमुक्ते शकटस्य छदिषि शाखामवगुह्य पश्चिमामीषामाश्रित्य प्रत्यवरोहेत् ।

---

१।४।६ ) ( ला० श्रौ० १।४।२ ) इत्यूहः । धानञ्जय्याचार्यमते—"अग्न आगच्छ रोहिताश्व आगच्छ भरद्वाजस्याज सहसः सूनो वारावस्कन्दिन्नुषसो जार" इति । ( ला० श्रौ० १।४।४ ) एवं उपहव्येषु ( का० २२।८।७ द्रा० श्रौ० २४।१।१ ) शक्रागच्छ विदथे ब्राह्मण आगच्छत" इत्याद्यूहः ।

ज्योतिष्टोमेऽग्रेऽस्त्युपसत्कालीनं सुब्रह्मण्याह्वानं ( का० श्रौ० ८।२।१२ ) तदहर्गणेषु भिद्यते तन्त्रं वेति संशये—प्रधानभेदाद्भेद इति पूर्वपक्षे-अकर्मकालत्वात्तु तन्त्रम् । नहीदं प्रधानकाले उपसत्काले तु सकृदनुष्ठितमेव सर्वेषामुपकरोतीति यूपन्यायेन ( ११।३।४ ) तन्त्रमिति सिद्धान्तः ।

तथाहि जैमिनिकात्यायनौ-'सुब्रह्मण्या तु तन्त्रं दीक्षावदन्यकालत्वात्' (११।३।२१) 'अहर्गणे सुब्रह्मण्यायाः सर्वोपलक्षणं प्रकृतिवत् । तन्त्रकालकर्मप्रत्यहमविधानात् ( १।७।६-७ ) इति ।

सुत्याकालिक आह्वाने तन्त्रमावापो वेति सन्देहे प्रथमसुत्याकाले एव कृतं सर्वसुत्यानामुपकारकम्, सत्यप्येकस्य सन्निधिविशेषे यूपाहुतिन्यायेन ( ११।२।७ ) सर्वेष्वहःसूपकरोतीति पूर्वः पक्षः । कर्मकालं ह्येतदस्य कर्मणः काले कृतं तदर्थमिति विशेषग्रहणात्तदपवर्गे तत्कृतस्य देवतासंस्कारस्यापवर्गादहरन्तरे पुनः कर्तव्यं तस्मान्न तन्त्रम् । किन्तु आह्वानं भिद्यत एवेति ( जै० ११।३।११ ) सिद्धान्तः ।

एष सुब्रह्मण्यानिगदः सुब्रह्मण्यनामसामवेदीयर्त्विजा गीयतेऽतः सुब्रह्मण्यसामेत्यप्युच्यते । वस्तुतो निगदो नाम यजुर्विशेष एवेति सिद्धान्तितो मीमांसायाम् । जै० द० २।१।३८-४५ सूत्राणि द्रष्टव्यानि ।

आध्वर्य्यवपद्धतिः।

शालां पूर्वेण प्रतिप्रस्थाताऽग्नीषोमीयं(१) पशुमादाय तिष्ठति कृष्णसारङ्गं मेध्यमभावे लोहितसारङ्गम्।

अध्वर्युर्नमो मित्रस्येत्येनमालभ्य वाचयति यजमानम्। अग्नीषोमीयं पशुमालभस्व।

"ॐ नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतꣳ सपर्य्यत।

दूरे दृशे देवजाताय केतवे दिवस्पुत्राय सूर्य्याय शꣳसत" (४।३५) इति ब्रूहि।

यजमानः पशुमालभ्य—

"ॐ नमो मित्रस्य वरुणस्य चक्षसे महो देवाय तदृतꣳ सपर्य्यत

दूरे दृशे देवजाताय केतवे दिवस्पुत्राय सूर्य्याय शꣳसत" (४।३५)।

चरति पशौ वाचनमेव। आहवनीयाच्चोल्मुकमाहृत्यैके(२) वाचयन्ति तदपि सति पशौ न तु चरति।

शालायाः समीपेऽन उपस्थाप्योत्तम्भनेनोपस्तभ्नाति वरुणस्योत्तम्भनमिति।

"ॐ वरुणस्योत्तम्भनमसि" (४।३६)।

युगपच्छम्ये चोद्गृह्णाति वरुणस्य स्कम्भसर्जनी स्थ इति। सकृन्मन्त्रः।

सकृन्मन्त्रं समुच्चार्य शम्ययोः क्रमतः सुधीः।

औद्गात्रपद्धति।

अथ यजमानो दक्षिणामनड्वाहं सुब्रह्मण्याय दद्यात्। सुब्रह्मण्यो मन्त्रेण प्रतिगृह्य यथार्थं गच्छेत्।

---

(१) 'अथ प्रतिप्रस्थाताऽग्रेण शालामग्नीषोमीयेण पशुना प्रत्युपतिष्ठत' (श० ब्रा० ३।३।४।२१) इति प्रकृत्य सर्वस्य श्रुतत्वात्। अग्नीषोमीयेणेत्यत्र 'इत्थं भूतलक्षणे' (पा० २।३।२१) इति तृतीया। तेन युक्तः प्रत्युपतिष्ठते। न कश्चिदग्नीषोमीयः पशुरस्ति न च यागमन्तरेणाग्नीषोमीयः शक्यते कर्तुमपि इत्यत एव वचनादग्नीषोमौ पशुना यष्टव्याविति गम्यते। स चायं यागोऽत्रैव क्रमे प्राप्तो वचनादौपवसथ्येऽह्न्युत्कृष्टः।

शाखान्तरादग्नीषोमीयस्य कर्णग्रहणम्। तथा हि मानवे—'अग्रेण प्राग्वंशं कर्णगृहीतमजमग्नीषोमीयं कल्माषं पीवानमनस्थापयति'(२।१।४।३३)ति।

(२) "तद्धैके आहवनीयादुल्मुकमाहरन्त्ययमग्निरयꣳ सोमस्ताभ्यां सह सद्भ्यां निष्क्रेष्यामह' (श० ब्रा० ३।३।४।२२) इत्यादि श्रुतत्वात्। अपरे त्वनाहृत्यैवोल्मुकं वाचयति। "तदु तथा न कुर्याद्यत्र वा एतौ क्व च तत्सहैते" (श० ३।३।४।२२), इति श्रुतेः। अस्यार्थः—केचिदुल्मुकं पशुस्थाने एवाहरन्ति किमर्थं अयमग्निरुल्मुकात्मकः, अयं सोमोऽनसि स्थितः ताभ्यामिति सप्तम्यर्थे द्विवचनं ताभ्यामग्नीषोमाभ्यां सह भूताभ्यां पशुनात्मानं निष्क्रेष्यामहे इति ब्रुवन्तः, यत्र वा एताविति सोमलतायामप्यग्निरन्तर्भूतोऽस्तीत्यभिप्रायः।

आध्वर्यवपद्धतिः।

उदुर्यूहणं प्रकुर्वन्ति नात्र भेदेऽस्ति कारणम् ॥

"ॐ वरुणस्य स्कम्भसर्जनी स्थः" ( ४ । ३६ )।

औदुम्बरीमासन्दीं नाभिदघ्नामरत्निमात्राङ्गीं मुञ्जरज्वोद्ग्रथितामा-हरन्ति चत्वारोऽध्वर्युस्यात्नेष्ठ्युन्नेतारः (१)।

अध्वर्युरभिमृशत्येनां वरुणस्य ऋतसदन्यसीति ।

"वरुणस्य ऋतसदन्यसि" ( ४ । ३६ )

कृष्णाजिनमस्यामास्तृणाति वरुणस्य ऋतसदनमसीति ।

"ॐ वरुणस्य ऋतसदनमसि" ( ४ । ३६ )।

तस्मिन्त्सोमं निदधाति वरुणस्य ऋतसदनमासीदेति ।

"ॐ वरुणस्य ऋतसदन(२)मासीद" ( ४ । ३६ )।

शालां प्रवेशयन्ति दीक्षितसञ्चरेण सोमम् ।

या त इति वाचयति यजमानम् ।

---

( १ ) अत्र ऋत्विग्विषये प्रासङ्गिकं किञ्चिदुच्यते । "आरम्भो वरणं यज्ञे इत्या-दिवचनाद्वरणेन सर्वेषामारब्धकर्मत्वात् तदनन्तरं सूतकादिपाते नैवाशौचम्। अत एव ब्रह्मपुराणे—

गृहीतमधुपर्कस्य यजमानाच्च ऋत्विजः ।
पश्चादाशौचपतितं न भवेदिति निश्चयः ॥ इति ।

अशौचाभावेऽपि सूतकादिनिमित्तस्नानं भवत्येव । तदुक्तं कारिकायाम्—

वृतानामृत्विजामत्र सत्रिणां ब्रह्मचारिणाम् ।
दीक्षिणीयादीक्षितानां यज्ञियं कर्म कुर्वताम् ॥
यावदेषामुपाधिः स्यात्तावन्नाशौचमत्र हि ।
स्नानं स्यादृत्विगादीनामाशौचे स्यात्स्वकर्मसु ॥ इति ।

इदमनशुचित्वं प्रारब्धकर्मविषयमेव, अन्यत्राशुचित्वं भवत्येव, तदाह विष्णुः—

"व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे ।
प्रारब्धे सूतकं नास्ति(न स्याद्)अनारब्धे तु सूतकम् ॥ इति ।

एवं पत्न्यां रजस्वलायां सूतकायां वा प्रारब्धं कर्म भवत्येव । यथाह त्रिकाण्डमण्डनः-

रजोदोषे समुत्पन्ने सूतके मृतकेऽपि वा ।
नित्यं नैमित्तिकं कुर्वीत काम्यं कर्म न किञ्चन ॥
आधानं पुनराधानं पशुः सौत्रामणी तथा ।
चातुर्मास्यानि सोमश्च तथैवाग्रयणक्रिया ॥
अकाम्यत्वेऽपि नैतासां सूतकादावनुष्ठितिः ।
प्रक्रान्तेष्वपि चैतेषु सूतकादिसमुद्भवे ॥
कर्तव्यान्येव चैतानि वारितान्यप्यशेषतः ( १।१४०–१४३ ) इति ।

( २ ) न्यग्रोधश्च'दासीदतमि'ति मन्त्र ऊहः । अभिषेचनीयेऽपीवः प्रभृति द्विवच नान्ता एवोह्याः, आसन्दभिमपनादेः पृथग् विधानात्।

आध्वर्य्यवपद्धतिः।

"ॐ या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम्। गयस्फानः प्रतरणः सुवीरोऽवीरहा प्रचरा सोम दुर्य्यान्" (४। ३७) इति ब्रूहि। यजमानः—

"ॐ (१)या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम्।

गयस्फानः प्रतरणः सुवीरोऽवीरहा प्रचरा सोम दुर्य्यान्" (४।३७)।

आहवनीयं दक्षिणेन स्थापयन्ति (२) उदपात्रमुपनिनयन्त्येके। अत्राध्वर्युर्यजमानो वा सोमꣳ॰ राजानं मधुपर्केणार्हयेत्। धुर्यद्वययुक्तमनः

---

(१) न्यग्रोधश्चेदूहः "या वान् धामानि हविषा यजन्ति ता वां विश्वा परिभूरस्तु यज्ञम्। गयस्फानौ प्रतरणौ सुवीरावबीरहणौ प्रचरतं सोमन्यग्रोधौ दुर्य्यानि"ति।

(२) अत्र प्रसङ्गाद् वैश्यराजन्ययोः सोमयागे न्यग्रोधस्य सोमवत्क्रयणादिसंस्कारपक्षे ऊहादि प्रयोगसौकर्य्यार्थं निरूप्यते—सोमनिधानानन्तरं उपरवदेशे न्यग्रोधस्य निधानम्। सोमक्रयण्यनुमन्त्रणे—स्वस्ति सोमन्यग्रोधसखा पुनरेहो( य० सं० ४।२० )ति। प्रैषे—सोमन्यग्रोधोपनहने आहर। सोमन्यग्रोधपर्य्याणहने आहर। उष्णीषावाहरेति। एष त (य० सं० ४।२४) इति वाचने—'एष वां गायत्रो भाग इति मे सोमन्यग्रोधाभ्यां ब्रूतादेष वां त्रैष्टुभो भाग इति मे सोमन्यग्रोधाभ्यां ब्रूतादेष वां जागतो भाग इति मे सोमन्यग्रोधाभ्यां ब्रूताच्छन्दोनामाना ꣳ साम्राज्यं गच्छेति मे सोमन्यग्रोधाभ्यां ब्रूतादि'ति। उभयारालम्भनं 'आस्माकौ स्थः शुक्रस्ते गृह्य' (य० सं० ४।२४) इति। सोमोपनहनमास्तीर्य्य न्यग्रोधोपनहनस्यास्तरणं, सोममानानन्तरं तद्वदेव मन्त्रेण मानं, उष्णीषेण बन्धनं, अङ्गुल्या मध्ये विवरणञ्च, उभयोः सोमावक्रयिणे समर्पणं, सोमविक्रयिन् क्रय्यौ ते सोमन्यग्रोधा राजानौ,'इति प्रश्नः। क्रय्याविति प्रतिवचनं, तौ वै ते क्रीणानीति। भूयो वा अतः सोमन्यग्रोधौ राजानावर्हतः भूय एवातः सोमन्यग्रोधौ राजानावर्हतो महांस्त्वेवेत्यध्वर्युः क्रीतौ सोमन्यग्रोधौ।राजानौ वयांसि प्रब्रूहीति। शुक्रौ वां शुक्रेण क्रीणामि चन्द्रौ चन्द्रेणामृतावमृतेने( ४।२६ )ति। अजामालम्भ्य वाचने—परमेण पशुना क्रीयेथे (४।२६) इति। सोमादानमन्त्रे—मित्रौ न एतꣳ॰ सुमित्रधा (४।२७) विति। उपमार्थत्वादत्र मित्रशब्दस्याविपरिणाम इति कर्कः। यजमानस्योरौ सोमनिधानमन्त्रे—इन्द्रस्योरुमाविशतं दक्षिणमुशन्तावुशन्त ꣳ स्योनौ स्योन (४।२७) मित्युभयोरूर्वाधानम्। 'उदायुषे'ति (४।२८) मन्त्रेण सोमन्यग्रोधयोरादानं शिरसि करणं च। कृष्णाजिनोपरि सोमनिधाने—न्यग्रोधस्यापि सहैव स्थापनं अदित्यै सद आसीदत( ४।३०)मित्यूहश्च। सोमालम्भप्रैषे-सोमन्यग्रोधावालभस्वेति प्रैषः, अस्तभ्नीतां द्यामित्यादि (पूर्वं ६८ पत्रे टि०) ऊहश्च। सोमक्रयानुवाचनप्रैषे-सोमन्यग्रोधाभ्यामनुब्रूहि पर्य्युह्यमाणाभ्यामिति वा। अभिषेचनीये-सोमन्यग्रोधेभ्यः पर्य्युह्यमाणेभ्य इति वा प्रैषः। भद्रो म (४।३४) इति वाचने भद्रौ मे स्थ (पूर्वं ६० पत्रे टि०)इत्यादि। सोमनिधानमन्त्रे ऋतसदनमासीदतमित्यूहः। या त (४।३७) इति वाचने—या वां धामानी (पृ० ६६ टि०) त्यादि।

आध्वर्यवपद्धतिः ।

सुब्रह्मण्याय तुभ्यमहं सम्प्रददे । इति तस्मै यजमानो दद्यात् । पर्कं या (१)धुर्यम् ।

इति सोमक्रयः । सूत्रे सप्तमोऽध्यायः ।

## ( अथातिथ्येष्टिः । )

अथातिथ्या । आतिथ्यं निर्वपति वैष्णवं नवकपालं सत्वरमिडान्तम् । (२)षडासनं, वाचस्पतिप्रैषः । प्रणीताप्रणयनम् । आहवनीयदक्षिणाग्न्योः परिस्तरणम् । पात्रासादनम् । शूर्पाग्निहोत्रहवण्यौ स्फ्यो (३)नव कपालानि, शम्या, कृष्णाजिनम्, ऊलूखलं, मुसलं, दृषदुपलम्, पात्री, पवित्रच्छेदनानि, पवित्रे, उपवेषः, आज्यस्थाल्युपसर्जनीपात्रम्, कुशमुष्टिर्वेदितृणम्, अभ्रियोर्कृषं पत्ते । स्रुचो, जुहूः, उपभृत्, ध्रुवा, सन्नहनाच्छादनानि, काश्मर्यमयाः परिधयः, पेक्षव्यौ विधृत्यावाज्यं, पुरोडाशपात्री, होतृषदनम्, शृतावदानमौषधं, प्राशित्रहरणे(४) ।

---

( १ ) दक्षिणमनड्वाहं सुब्रह्मण्याय दद्यात् । उभाविति शाट्यायनकं विज्ञायते कर्मसंयोगात् ( ला० श्रौ० १।२।२३-२५ ) इति । तथा च—

"यस्मिन् कर्मणि यद्द्रव्यं यस्य सन्निहितं भवेत् ।
तत्तस्यैव प्रदातव्यं होतुर्गोत्रपटो यथा" । इति ।

( २ ) चतुरासनमिति देवः ।

( ३ ) नवकपालेषु चतुर्थकपालोपधानानन्तरमवशिष्टानि पञ्च विभज्य त्रीणि दक्षिणतः द्वे उत्तरतः ।

समन्त्रकं सक्रमं नवकपालोपधानचित्रम् ।




( ४ ) इडान्तर्धानरूप्पूर्णपात्रकर्मापवर्गाणामभावः । अन्वाहार्यस्य चाभावः । अग्न्यन्वाधान-व्रतग्रहण-व्रतविमोचनानामभावः सूत्रोक्तः । तथा च सूत्रम्—

आध्वर्यवपद्धतिः।

'अग्न्यन्वाधान—व्रतोपायना—रण्यभोजन—दान—ब्रह्मवरणादीनि दीक्षणीयाप्रभृति प्रागुदवसानीयायाः सोमे कृतत्वादि' ( का० श्रौ० ८।१।४ )ति।

सोमे दीक्षणीयाप्रभृति=दीक्षणीयात आरभ्य उदवसानीयायाः प्राक् सोमान्तस्तन्त्रभूतास्विष्टिषु पशुषु चाग्न्यन्वाधानादीनि ब्रह्मवरणान्तानि कर्माणि न भवन्ति। कुतः कृतत्वात्=सौमिकैरेवैतेषामर्थस्य साधितत्वात्। तथया येषां तावदग्निधारणार्थमग्न्यन्वाधानं तेषां सोमार्थेनैव विहितानामग्नीनां धृतत्वाद्दीक्षणीयादिषु तेनैव धारणेन प्रसङ्गसिद्धकार्यत्वान्न पुनर्धारणं कर्तव्यम्। ( जै० १२।१।१० )।

ननु चा क्रतुसमाप्तेः पुनः पुनर्धारयितव्य एवाग्निः, सत्यं तथापि येनाग्न्यन्वाधानं कार्यं तद्विहितस्याग्नेराद्यो यः समिन्धनव्यापारो धारणार्थस्तद्रूपं न हि तत्प्रकृतौ पुनः पुनः कृतं तस्मादत्रापि धार्यमाणस्य धारणाय पुनर्न कर्तव्यम्।

येषां ( कर्कादीनां मा० २।१।७ ) मते देवतापरिग्रहार्थं तेषां दीक्षणीयया देवतानां परिगृहीतत्वात्प्रायणीयादिषु तन्निवर्तते। दीक्षणीयायां तु दीक्षणीयादेवतापरिग्रहार्थं भवति। अस्मिन्पक्षे तदानीं दीक्षणीयाया अनिष्पन्नत्वेन तत्कार्यस्य देवतापरिग्रहरूपस्य कृतत्वाभावात् दीक्षणीयाप्रभृतीति तु भूयस्त्वादुक्तिः। कथं पुनर्दीक्षणीयायाः देवतापरिग्रहार्थत्वम्। "अपः प्रणीयाग्नावैष्णवमेकादशकपालं पुरोडाशं निर्वपती"ति प्रकृत्य "अग्निर्वै यज्ञस्यावरार्ध्यो विष्णुः परार्ध्यस्तत्सर्वाश्चैवैतद्देवताः परिगृह्य सर्वं च यज्ञं परिगृह्य दीक्षा इति तस्मादाग्नावैष्णव एकादशकपाल" ( श० ब्रा० ३।१।३।१ ) इत्यादिनाग्नावैष्णवस्य देवतापरिग्रहार्थता गम्यते। यद्यपि "दीक्षा सोमस्ये" ( तै० सा० ३।९ गो० ब्रा० उ० २।९ ) ति वचनात्प्रधानार्था दीक्षणीया प्रधानदेवता एव परिगृह्णाति तथापि वैश्वदेवग्रहे ( श० ब्रा० ४।४।१।८-९ ) सर्वदेवता समवायात्तत्परिग्रहं कुर्वती दीक्षणीया प्रसङ्गादङ्गकर्मदेवता अपि गृह्णाती ( जै० १२।१।१२ ) ति।

एवं व्रतोपायनमपि कर्माङ्गभूतसत्यवदनादिनियमस्याङ्गीकरणं तद्दीक्षणीयायां गृहीतस्याविसृष्टत्वात् सोमार्थेनैव सत्यवदनब्रह्मचर्यादिनियमस्याङ्गीकृतत्वाच्च निवर्तते ( जै० १२।१।११ )।

तदपि दीक्षणीयायां भवत्येव। उद्वादनप्रैषा ( अ० प० २७।६ पूर्वं ) दूर्ध्वं दीक्षितत्वे सञ्जाते सत्यवदनादिनियमस्याप्रवृत्तेः। तस्मादपि दीक्षितमाहुः "सत्यमेव वदेदि" ( श० ब्रा० १४।१।१।३३ )ति दण्डान्ते दीक्षितो भवति। अत एव व्रतग्रहणप्रतिषेधाद्दीक्षणीयायां गृहीतस्य विसर्गोऽपि ततः प्राङ् न कर्तव्यः।

आरण्यभोजनमपि प्रायणीयादिषु चोदकप्राप्तमपि व्रतार्थत्वात्प्रधानार्थस्य प्रत्यक्षश्रुतस्य पयोव्रतस्यावर्जनीयत्वात्सौमिकेनैव पयोव्रतादिना वृत्तिसिद्धेर्निवर्तते। तथा चोक्तं जैमिनिना—

"अन्यविधानादारण्यभोजनं न स्यादुभयं हि वृत्त्यर्थमि"ति ( १२।१।३० )।

अतः "स वा आरण्यमेवाश्नीयात्" ( श० ब्रा० १।१।१।१० ) 'वृक्षारण्यौषधीनामश्नीयादि' ( का० श्रौ० २।१।१४ )ति यत्प्रत्यहं सायमरण्याशनं प्राप्नोति तदनेन निषिध्यते।

अन्वाहार्यं दक्षिणादानमपि प्रकृताधानत्यर्थं सा चानतिः सौमिकेनैव वरणेन सिद्धेति दीक्षणीयादिषु तदपि निवर्तते। तथा हि जैमिनिः-"भृतत्वाच्च परिक्रयः। (१२।१।३२)इति'

आध्वर्यवपद्धतिः।

उपकल्पनीयानि—इध्मा, आश्ववालप्रस्तरोपसन्नद्धं, बर्हिः, षडवत्तं, द्वे मदन्तीपात्रे, शकलं, कुशतरुणे अधरारणिरुत्तरारणिश्चेति मन्थनचतुष्टयं, व्रतपात्रं, समिद्द्वयम्, उदकं, हिरण्यं, सुब्रह्मण्यार्थं पत्रं चेति। अध्वर्युर्गार्हपत्यस्य पश्चादित्यादि।

---

प्रवरणं चाप्रवृत्तप्रवर्तनार्थं तच्च सौमिकेनैव वरणेन ( अ० प० ८ पत्रे ) सिद्धमिति दीक्षणीयादिषु तदपि निवर्तते। उदवसनीयायां तु सर्वमग्न्यन्वाधानादिकं भवति। अग्न्यन्तरत्वादग्न्यन्वाधानं उन्मुक्तदीक्षितत्वाद्विसृष्टव्रतत्वाच्च व्रतोपायनं दानं च विहितत्वा "च्चतस्रो वै दक्षिणा हिरण्यं गौर्वासोऽश्वे" ( श० ब्रा० ४।३।४।७ ) ति आनत्यन्तरविधानाच्च प्रवरणं, अतः प्रागुदवसानीयाया इत्युक्तम्।

अत्र प्रसङ्गादिदं विचार्यते—सोमयागमध्यपातिनीष्विष्टिषु ऋत्विक्कर्तृका इडाप्राशित्राविभक्षाः निवर्त्यन्ते उत नेति। प्रकृतौ "अन्वाहार्यो दक्षिणा"(श०ब्रा० १।२।३।६) इत्युक्तत्वात् ऋत्विग्भक्षाणां परिक्रयार्थतया ते भवन्ति। अत्र तु "चतस्रो वै दक्षिणा हिरण्यं गौर्वासोऽश्व" ( श० ब्रा० ४।३।४।७ ) इत्यादिनाङ्गप्रधानानां पृथग्दक्षिणाम्नानान्निवर्त्स्यन्निति पूर्वः पक्षः।

ज्योतिष्टोमे शेषप्रतिपत्त्यर्था भक्षाः न त्वानत्यर्था इति दशम ( जै० १०।२।१ ) एव चानत्यर्थत्वं भक्षाणां निराकृतम्। तस्मान्नैते परिक्रियार्था किन्तु संस्कारार्थाः। अतस्तदर्थं कर्तव्या एवेति पूर्वमीमांसा ( १२।१।१७ ) सिद्धान्तः।

दर्शपूर्णमासयोर्होतुर्वरणमाम्नात "मग्निर्दैवो दैव्यो होता देवान्यक्षद् विद्वांश्चिकित्वान् मनुष्वद् भरतव (का० श्रौ० ३।२।७) दि"ति। तत्किमानत्यर्थत्वात्सौमिकेनैव वरणेन प्रसङ्गादानतिसिद्धेर्दीक्षणीयादिषु न कर्तव्यमुतादृष्टार्थत्वात्कर्तव्यमिति सन्देहे वरणस्यानत्यर्थत्वान्न कर्तव्यमिति पूर्वः पक्षः। न हि वरणमानत्यर्थं किन्तु धर्मार्थम्। दर्शपूर्णमासेष्टावपि धर्मार्थमेव वरणम्। वरणात्प्रागपि सामिधेनीषु होतुः प्रवृत्तत्वात्। न हि प्रवृत्तस्य पुनरानतिः कर्तव्या। तस्मात्—प्रकृताविवात्रापि धर्मार्थमेव वरणं कार्यम्। न त्वानत्यर्थेन सौमिकवरणेनास्य प्रसङ्गसिद्धिरिति पूर्वमीमांसा (१२।१८।१) सिद्धान्तः।

अत्रातिथ्यादौ यजमानकर्तृकाः इडाभक्षणादयः कर्तव्या न वेति संशये "व्रतं ह्येवास्यातोऽशनं भवती" ( श० ब्रा० ३।१।२।१ )ति श्रुत्या द्रव्यान्तरभक्षणस्य अर्थतः प्रसिद्धत्वात् "पयोव्रतं ब्राह्मणस्य" ( तै० आ० २।८ ) इत्यादिना पय आदेर्वृत्त्यर्थं विधानाच्च, इडाभक्षणादयो निवर्तन्त इति पूर्वः पक्षः।

सत्यं यदि वृत्त्यर्थास्ते तु शेषभक्षप्रतिपत्त्यर्थाः। "यजमानपञ्चमा इडां भक्षयन्ती" ति शेषस्य द्वितीयानिर्देशात्। इडाप्राशित्रभक्षाणां प्रतिपत्त्यर्थत्वं षष्ठे "होमाभिषवभक्षणं च तद्वत्" ( ४।२४ ) इत्यत्र निरूपितम्। तस्मान्न निवर्तन्त इति सिद्धान्तः।

तथा हि जैमिनिकात्यायनौ—

'शेषभक्षास्तथेति चेन्नान्यार्थत्वाद् ( १२।१।३१ ) यजमानभागश्च भक्षप्रतिषेधात् न कुर्मगुणत्वादि' ( ८।१।६–७ )ति।

ते च शेषभक्षा अङ्गुलिविसर्गानन्तरं न ततः प्राक्। तदुक्तं कात्यायनाचार्यैः—"वृत्त्यनिवृत्तिः। हविःशेषभक्षा" ( ८।१।८–९ ) इति।

आध्वर्यवपद्धतिः ।

पत्न्यन्वारब्धस्तूर्णमेकविमुक्ते वा निर्वपेदग्नेस्तनूरिति पञ्चकृत्वः प्रतिमन्त्रम्। विलालम्भे "देवस्या( १।८ )सी"त्यूहः । ग्रहणे—

"ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्यामग्नेस्तनूरसि विष्णवे त्वा जुष्टं गृह्णामि ।

ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्या ॅं सोमस्य तनूरसि विष्णवे त्वा जुष्टं गृह्णामि ।

ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्यामतिथेरातिथ्यमसि विष्णवे त्वा जुष्टं गृह्णामि ।

ॐ श्येनाय त्वा सोमभृते विष्णवे त्वा गृह्णामि ।

ॐ अग्नये त्वा रायस्पोषदे विष्णवे त्वा गृह्णामि"। (५।१)

चरमयोर्न सावित्रजुष्टशब्दौ प्रधानदेवतापदमुपांशु सर्वत्र। 'भूताय त्वे' ( १।११ ) त्यादि ।

प्रोक्षणे-'विष्णवे त्वा जुष्टं प्रोक्षामि' ( १।१३ ) ।

मुसलावधाने-'स इदं देवाये'ति ( १।५ ) ।

दृषदयावापे-'धिनुहि देवमि'ति(१) (१।२०) ।

आज्याधिश्रयणमग्नीधः ।

अग्नीत् (२)उपसर्जनीरधिश्रयति मदन्तीश्च व्रतवदुभयत्राध्वर्युः । यजमानपत्न्योरामुष्टिविसर्गादुदकार्थस्ततः । पक्षे पत्नीसन्नहनम् ( अयोक्त्रायाः )। चतुर्गृहीतान्याज्यानि । काश्मर्यमयाः परिधयः, (३)आश्ववालः प्रस्तरः, पैक्षव्यौ विधृत्यौ बर्हिश्च (४)एतदेवाग्नीषो-

---

( १ ) अत्र साग्निचित्ये सोमयागे "सोमनिर्वपनाद्याऽऽतिथ्याहविष्कृतः कृत्वाऽऽहवनीयपरिश्रितोऽभिमन्त्रयते 'चितः स्थे' (शु० स० १२।४६) त्री" ( का० श्रौ १७।३।९ ) त्यारभ्य ( का० १।३।१६ ) क्रियाः कार्या ।

( २ ) अत्र कठसूत्रे विशेषः—गार्हपत्ये वधानां दीक्षितस्योदकार्थी दक्षिणाग्नौ पत्न्या इति । प्राप्तमप्युपसर्जन्यधिश्रयणं मदन्त्यधिश्रयणं मदन्त्यधिश्रयणस्यावसरविधानार्थं पुनरिहोच्यते ।

( ३ ) यद्यप्यत्राश्वस्य वाला इत्यश्ववाला प्रतीयन्ते पैक्षव्यौ विधृती इत्यत्र इक्ष्ववयवभूते प्रतीयेते तथाप्यत्र शाखान्तरीयाद्वाक्यशेषात् काशमयः प्रस्तरः काशमूलमयौ च विधृत्यौ गृह्येते इति मीमांसायां प्रथमाध्यायतृतीयपादे साधितम् ।

अत्राहुर्माधवाचार्याः—बर्हिः प्रस्तरयोरन्तराले तिर्यक् प्रसार्यमाणौ दर्भौ विधृती ते इक्षुपत्ररूपे स्याताामिति । धूर्तस्वामिनोऽपि पैक्षव्यौ इक्षुपर्णे इत्याहुः स्वभाष्ये ।

( ४ ) "यदातिथ्यायां बर्हिस्तदुपसदाम्, तदग्नीषोमीयस्य च" अत्रेदं सन्दिह्यते किमिदमाच्छिद्य विधानं, उत निर्दिष्टकोपदेशः, अथवा धर्मातिदेश, उत बर्हिः साधारण्यविधिरिति । न तावदाद्यः पक्षः । आतिथ्येष्टौ विहितं यद्बर्हिस्तद्यदि-

आध्वर्यवपद्धतिः ।

मीयोपसत्स्वपि चतुष्टयम् । इध्मप्रोक्षणा( २।१ )दि । नोल्मुकोदूहनम् । परिधिपरिधानम् ( २।३ ) । स्पृश्यास्पृश्ययोराधानम् ( २।४ ) ।

---

तस्या इष्टेराच्छिद्योपसत्स्वग्नीषोमीये च विधीयेत तदानीमातिथ्यायां विधानमनर्थकं स्यात् । न द्वितीयः, यदि आतिथ्यायामुपयुक्तमुपसदादिषु विधीयेत तदा विनियुक्तविनियोगरूपो विरोधः स्यात् । तस्मादातिथ्यार्थबर्हिषो ये धर्मा आच्छालादयस्ते धर्मा उपसदादिषु भवन्तीत्यतिदेशपरमेतद्वाक्यमिति तृतीयः पक्षः सोऽपि नोपपद्यते बर्हिशब्दस्य धर्मातिदेशपरत्वे लक्षणा प्रसज्येत । श्रुत्या तु बर्हिष आतिथ्योपसदग्नीषोमीयेष्वेकत्वं प्रतिभाति । अतः साधारण्यमत्र विधेयम् । आतिथ्यार्थं यद्बर्हिरुपादीयते तन्न केवलमातिथ्यार्थं किन्तूपसदर्थमग्नीषोमीयार्थं चोपादेयमिति वाक्यस्यार्थः । एतद्वाक्योत्तरकालं चाच्छालादयो धर्माः पठ्यमानाः साधारण्यं प्रतिपद्यन्ते सत्यप्यातिथ्याप्रकरणे बर्हिषः साधारणत्वात् । तस्मादातिथ्योपसदग्नीषोमीयाख्योऽन्यस्य बर्हिषस्तद्धर्माणां च प्रयोजका इति पूर्वतन्त्र ( ४।२।१३ ) सिद्धान्तः ।

नन्वपूर्वत्वादुपसदां बर्हिषो भावस्तस्मिन्सति कथं धर्मोपदेशो निरिष्टकोपदेश आच्छिद्यविधिर्बर्हिः साधारण्यं वा सर्वेषां तत्स्वरूपप्राप्त्यपेक्षत्वात्, तेन वाक्यमेवैतत् "यदातिथ्यायां बर्हि" रित्यनुपपन्नमिति । उच्यते—

पूर्वाधारोऽत्र विद्यते "तस्मादन्यतरमेवाघारमाघारयति यच्छुवेणे ( श० ब्रा० ३।४।४।१ )"ति । बर्हिश्चाङ्गप्रधानार्थं तस्मादुपसदङ्गतया प्राप्त्यभावेऽपि तदङ्गभूतपूर्वाघाराङ्गतया प्राप्नोत्येव बर्हिरिति ।

एवं साधारण्ये सिद्धे तत्संस्काराः प्रोक्षणादयः किं प्रतिकर्मावर्तनीया उतातिथ्याकालकृता एवोपसत्स्वग्नीषोमीये च प्रसज्यन्त इति सन्देहे मध्यपाताभावान्न प्रसङ्गो नापि तन्त्रमातिथ्याकालत्वेन विशेषग्रहणादिति प्राप्ते—उच्यते । सत्यं न तन्त्रता प्रसङ्गस्तु भवति यद्यपि ह्यातिथ्याप्रयोगमध्ये तत्प्रयुक्ताः संस्काराः क्रियन्ते तथापि तेषां बर्हिर्द्वारत्वात्तस्य च सर्वार्थत्वादन्यप्रयुक्तैरपि संस्कारैः संस्कृतस्य यावत्स्वप्रयोजनमनपवर्गान्न भूयः संस्कारैः कार्यम् ।

अथवा तन्त्रमध्यपाताभावेऽपि बर्हिर्द्वारा ये संस्कारास्ते यदर्थं बर्हिरुपात्तं तदर्था विज्ञायमाना बर्हिषः साधारणत्वात्तेऽपि सकृदेव कर्तव्या इत्यवगते सति नान्तरीयकमातिथ्याकालेऽनुष्ठानम् । उपसदादेस्तदानीमप्राप्तत्वात् । न चैतावता आतिथ्यापवर्गेऽपवृज्यन्ते बर्हिषोऽनपवृक्तत्वात्तदर्थत्वाच्च तेषां तस्मान्न भेदेन कर्तव्या इति न्यायतः ( पू० मी० १२।१।११ ) प्राप्नोति तथाप्यग्नीषोमीये पुनर्वचनसामर्थ्याद्बर्हिषः समर्पणं पुरस्तात्प्रस्थ्यासादनं 'बर्हिरसी' ( य०सं० २।१)त्येतत्प्रोक्षणं मूलावसेकश्च भवत्येव । तथा च वचनम्—"प्रोक्षणीरध्वर्युरादत्त" ( श० ब्रा० ३।६।३।१४ ) इत्यादि । अत एव वचनाभावादुपसत्सु च पुनः संस्कारा न भवन्तीत्येवेति युक्तम् ।

सदेव बर्हिर्यदातिथ्यार्थं प्राग्वंशे स्तीर्णं तत आनीयापरेणोत्तरवेदिमग्नीषोमीयार्थं नास्तीर्यते तदा किं "ऊर्णम्रदसन्त्वा स्तृणामी" ( य० सं० २।२ ) ति स्तरणमन्त्रः पूर्वकृत एव प्रसज्यत उतावर्तनीय इति विचारे । पूर्ववद्बर्हिः साधारण्यात्प्रसङ्गप्राप्तिरिति पूर्वः पक्षः ।

"बर्हिषा वेदिं स्तृणाती"ति द्वितीयानिर्दिष्टत्वात्प्रयोजनत्वाच्च वेदिदेशसंस्का-

आध्वर्यवपद्धतिः।

प्राणदाने—विष्णुं गच्छ (का० श्रौ० २।८।१४-१५)। हविरासादा-मालम्भान्ते(१) (२६)।

## ( अथाग्निमन्थनम् । )

अग्निमन्थनमाहोमात्करोति(१) अग्नेर्जनित्रमिति शकलमादाय।

"ॐ अग्नेर्जनित्रमसि" (५।२)।

तूष्णीं वेद्यां करोत्युदगग्रम्। वृषणाविति कुशतरुणे प्रागग्रे तस्मिन्।

"ॐ वृषणौ स्थः" (५।२)।

उर्वश्यसीत्यधरारणिं (२)तयोः।

---

रार्थं स्तरणं, न तु बर्हिरर्थं स्तरणम्। भिन्नौ चेद् प्राग्वंशोत्तरवेदिसमीपदेशौ तेन तदर्थं स्तरणं तदङ्गं च मन्त्रोऽन्यावर्तते। असत्यामावृत्तौ वेदिवैगुण्यादग्नीषोमीयहविषामासादनं विगुणं स्यात्। तस्मान्मन्त्रावृत्तिरिति (पू० मी० १२।१।२०) सिद्धान्तः।

आतिथ्यादेशे संस्कृतं बर्हिः संनद्धाग्नीषोमीयदेशे यदा नीयते तदा संनहने हरणे च शाखान्तरे "इन्द्राण्यै सन्नहनं" 'बृहस्पते मूर्ध्ना हरामि" (तै० सं० १।१।२) इति यौ मन्त्रौ तौ आवर्तनीयौ न वेति सन्देहे—स्तरणमत्राप्रत्यधिकरण (पू० मी० १२।१।२०) न्यायेनावर्तनीयाविति प्राप्ते—प्रकृतौ ल्वनदेशादानयने कार्ये तौ मन्त्रौ दृष्टौ, न तु गार्हपत्यादाहवनीयं प्रत्यानयने। अतोऽत्रापि प्राग्वंशादुत्तरवेदिं प्रत्यानयने तौ मन्त्रौ न चोदकप्राप्नुतस्तस्मान्नावर्तनीयाविति (जै० १२।१।२१) सिद्धान्तः।

(१) एतदग्निमन्थनं "आसाद्य हवी ᳪ ष्यग्निं मन्थति" (श० ब्रा० ३।४।१।१९) इति श्रुतावत्र विहितं, तच्च कात्यायनाचार्येण चातुर्मास्येषु वैश्वदेवपर्व (का० श्रौ० ५।१।२१-२५।१-६) ण्युपनिबद्धं पुनरिहातिदिष्टम्। अतस्तद्वदेव शकलादानादि होमान्तमिहानुष्ठेयम्। "सोऽग्निमन्थनं॰ शकलमादत्त" (श० ब्रा० ३।४।१।२०।) इत्यादि होमान्तानां (श० ब्रा० ३।४।१।२६) सर्वेषां धर्माणामत्रैव श्रुतत्वात्।

(२) अरणिलक्षणं चोक्तं यज्ञपार्श्वे सङ्ग्रहकारिकायाम्—

अश्वत्थो यः शमीगर्भः प्रशस्तोर्वीसमुद्भवः।
तस्य या प्राङ्मुखी शाखा उदीची चोर्ध्वगापि वा ॥ १ ॥
अरणिस्तन्मयी ज्ञेया तन्मय्येवोत्तरारणिः।
सारवद्दारवञ्चात्रमोविली च प्रशस्यते ॥ २ ॥
संसक्तमूलोयः शम्याः स शमीगर्भ उच्यते।
अलाभे त्वशमीगर्भादाहरेदविलम्बितः ॥ ३ ॥
चतुर्विंशाङ्गुला दीर्घा विस्तारेण षडङ्गुला।
चतुरङ्गुलमुत्सेधा अरणिर्याज्ञिकैः स्मृता ॥ ४ ॥
मूलादष्टाङ्गुलं त्यक्त्वा अग्राच्च द्वादशाङ्गुलम्।
अन्तरं देवयोनिः स्यात्तत्र मथ्यो हुताशनः ॥ ५ ॥

आध्वर्यवपद्धतिः।

"ॐ उर्वशस्यसि" ( ५।२ )

आयुरसीत्युत्तरयाऽऽज्यस्थालीं संस्पृश्य।

"ॐ आयुरसि" ( ५।२ )

पुरूरवा इत्यभिनिधानं तथा।

"ॐ पुरूरवा असि" ( ५।२ )।

---

मूर्धाक्षिकर्णवक्त्राणि कन्धरा चापि पञ्चमी।
अङ्गुष्ठमात्राण्येतानि द्व्यङ्गुष्ठं वक्ष उच्यते ॥ ६ ॥
अङ्गुष्ठमात्रं हृदयमङ्गुष्ठमुदरं तथा।
एकाङ्गुष्ठा कटिर्ज्ञेया द्वौ बस्तिर्द्वौ च गुह्यकौ ॥ ७ ॥
ऊरुजङ्घे च पादौ च चतुस्त्र्येकैर्यथाक्रमम्।
अरण्यवयवा ह्येते याज्ञिकैः परिकीर्तिताः ॥ ८ ॥
यत्तद्‍गुह्यमिति प्रोक्तं देवयोनिः स उच्यते।
तस्यां यो जायते वह्निः स कल्याणकृदुच्यते ॥ ९ ॥
प्रथमे मन्थने ह्येष नियमो नेतरेषु च।
अष्टाङ्गुलः प्रमन्थः स्याच्चात्रं स्याद्‍द्वादशाङ्गुलम् ॥ १० ॥
ओविली द्वादशैव स्यादेतन्मन्थनयन्त्रकम्।
गोवालैः शणसंमिश्रैस्त्रिवृद्‍वृत्तमनंशुकम् ॥ ११ ॥
व्यामप्रमाणं नेत्रं स्यात्तेन मथ्यो हुताशनः।
चात्रबुध्ने प्रमन्थाग्रं गाढं कृत्वा विचक्षणः ॥ १२ ॥
( बहुदिने मंथनेन प्रमंथनाशे तत्रैवोक्तम्। )
उत्तराया अभावाद्धि ग्राह्यो मन्थोऽधरारणेः ॥ १३ ॥
आख्यातं कैश्चिदेवं तच्चिर्मूलत्वादुपेक्ष्यते।
( मानप्रकारो यज्ञपार्श्वे— )
शिरश्चक्षुः कर्णमास्यं प्रथमेंशे प्रकीर्तितम् ॥ १४ ॥
द्वितीये कन्धरा वक्षस्तृतीये ह्युदरं स्मृतम्।
चतुर्थे चैव योनिः स्यादूरु द्वन्द्वं च पञ्चमे ॥ १५ ॥
षष्ठे जङ्घे तथा पादौ पूर्वां चारणिरङ्गतः।
यदि मन्थेच्छिरस्यग्निं शिरो रोगैः प्रमीयते ॥ १६ ॥
यजमानस्तथा कण्ठे ह्रासे चैव विशेषतः।
मन्थेद्यो यजमानस्तु पक्षहीनो भवेद्‍ध्रुवम् ॥ १७ ॥
यो मन्थत्युदरे कर्ता क्षुधया म्रियते तु सः।
देवयोन्यां तु यो मन्थेद्‍ देवसिद्धिः प्रजायते ॥ १८ ॥
मन्थेद्‍हृद्ये यस्तु राक्षसकर्म तस्य तत्।
जङ्घायां यातुधानेभ्यः पादयोः स्यात्पिशाचके ॥१९ ॥
प्रथमे मन्थने ज्ञेयं द्वितीयादौ न शोधयेत्।
अष्टाङ्गुलः प्रमन्थः स्याद्दीर्घो द्व्यङ्गुलविस्तृतः ॥ २० ॥

आध्वर्यवपद्धतिः।

अग्नये मथ्यमानायानुवाचयति ।

ॐअग्नये मथ्यमानायाऽनुब्रू३हि । प्रथमायां त्रिरनूक्तायां मन्थति गायत्रेणेति प्रतिमन्त्रं त्रिः प्रदक्षिणम्" (५।२।२)

"ॐगायत्रेण त्वा छन्दसा मन्थामि,
ॐत्रैष्टुभेन त्वा छन्दसा मन्थामि,
ॐजागतेन त्वा छन्दसा मन्थामि" (५।२)।

जाते जातयेति ।

हौत्रपद्धतिः।

## अथातिथ्येष्टिः।

(१)अग्निमन्थनम्।

आचम्य तीर्थेन प्रविश्य (२)पश्चाद्वेदेरवस्थाय "अग्नये मथ्यमानायाऽनुब्रू३ही"त्युक्ते—

"ॐअभि त्वा देव सवितरीशानं वार्याणां। सदावन्भागमीमहो३
अभि त्वा देव सवितरीशानं वार्याणां। सदावन्भागमीमहो३
अभि त्वा देव सवितरीशानं वार्याणां। सदावन्भागमीमहो३(३)
मही द्यौः पृथिवी च न इमं यज्ञ मिमिक्षतां। पिपृतां नो भरीममो३ (४)

---

उत्सेधो द्व्यङ्गुलन्तस्य त्वैशानपूर्वं ऊर्ध्वगः।
एवमष्टादश प्रोक्ताः प्रमन्थ्या ह्युत्तरारणेः ॥ २१ ॥
पादौ तस्याः स्मृतं मूलमग्रन्तु शिर उच्यते।
अध्वर्युः प्राङ्मुखो मन्थेत्प्रत्यग् दिक्चरणा हि सा ॥ २२ ॥
ओविली यजमानेन धृत्वा गाढं च मन्थयेत्।
मथ्नीयात्प्रथमं पत्नी यद्वा कश्चिद्दृढो द्विजः ॥ २३ ॥
मूलादष्टाङ्गुलं त्यक्त्वा अग्राच्च द्वादशाङ्गुलम्।
अन्तरा देवयोनिः स्यात्तत्र मथ्यो हुताशनः ॥ २४ ॥
नान्यवृक्षेण मथ्नीयान्न कुर्याद्योनिसङ्करम्।
छेदिता स्फटिता चैव सुषिरा ग्रन्थिमस्तका ॥ २५ ॥
चतुर्विधाऽरणिस्त्याज्या श्रेयस्कामैर्द्विजातिभिः।
कण्डिता हरते पुत्रान् स्फाटिता शोकमावहेत् ॥ २६ ॥
ग्रन्थिमूर्द्धा हरेत्पत्नीं सुषिरा पतिमारिणी ॥ इति।

(१) 'आसन्ने हविष्यातिथ्येऽभि मन्थति' (कौ० ब्रा० ८।१) "आसाद्य हवींष्यग्निं मन्थती" (श० ब्रा० ३।४।१।१९)इत्यादिश्रुतेर्हविरासादनानन्तरमग्निमन्थनम्।

(२) शां० श्रौ० ३।१३।१६ (३) ऋ० १।२४।३ (४) ऋ० १।२२।१३

आध्वर्यवपद्धतिः ।

ॐअग्नये जातायाऽनुब्रूहि ।

प्रह्रियमाणायेति प्रास्यन् ।

ॐ अग्नये(१) प्रह्रियमाणायानुब्रूहि ।

भवतन्न इति प्रास्यति ।

"ॐभवतन्नः समनसौ सचेतसावरेपसौ । मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिञ्जातवेदसौ शिवौ भवत मद्य नः" (५।३) ।

अग्नावग्निरिति जुहोति स्थाल्याः स्रुवेण ।

"ॐअग्नावग्निश्चरति प्रविष्ट ऋषीणाम्पुत्रो अभिशस्तिपावा ।

हौत्रपद्धतिः।

त्वामग्ने पुष्करादध्यथर्वा निरमन्थत । मूर्ध्नो विश्वस्य वाघतो३(२).

तमुत्वा दध्यङ्ङृषिः पुत्र ईंधे अथर्वणः । वृत्रहणं पुरन्दरो(३)

(४)तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम्" ।

(५)अग्नावस्येव । 'जातायानुब्रूहीत्युक्ते । "धनञ्जयं रणे रणे३

उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाजनि।धनं जयो रणे रणे३(६)

आ यं हस्तेन खादिनं शिशुं जातं न बिभ्रति"(७)

प्रह्रियमाणायानुब्रूहीत्युक्ते—

"विशामग्निं स्वध्वरो३(८)

प्र देवं देववीतये भरता वसुवित्तमं । (९) (आज्याहुतौ हूयमानायां) आ स्वे योनौ निषीदतो३

आ जातं जातवेदसि प्रियं शिशीतातिथिं । स्योन आ गृहपतो३(१०)

अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड्जुह्वास्यो३(११)

---

(१) सचयने सोमयागे "ऽग्निभ्यः प्रह्रियमाणेभ्योऽनुब्रूही" (शा० ब्रा० ७।३।२।६) ति प्रैषः ।

(२) ऋ० ६।१६।१३। (३) ऋ० ६।१६।१४ । (४) ऋ० ६।१६।१५ ।

(५) पञ्चम्या अर्धर्चं उपरमेत् । अजायमाने रक्षोघ्नीमन्वाह । अग्नी रक्षांसि सेधति शुक्रशोचिरमर्त्यः । शुचिः पावक ईड्यो३ (ऋ० ७।१५।१०) अग्नी रक्षांसि सेधति शुक्रशोचिरमर्त्यः । इति याजुषहौत्रे विशेषः । (६) ऋ० १।७४।३

(७) सप्तम्या अर्धर्चं उपरमेत् । आश्वलायनानां तु "अजायमाने स्वेतस्मिन्नेवावसानेऽग्ने हंसि न्यत्रिण (ऋ० ७।१५।१०) मिति समाप्नुयात् पुनः पुनराजन्मन" (आश्व० श्रौ० १४पत्रे) इति विशेषः ।

(८) ऋ० ६।१६।४० ।

(९) कुण्डलिकान्तर्गतः पाठः ख, ग, पुस्तके नास्ति ।

(१०) ऋ० ६।१६।४१-४२ । (११) ऋ० १।१२।६ ।

आध्वर्यवपद्धतिः।

स नः स्योनः सुयजा यजेह देवेभ्यो हव्यठं० सदमप्रयुच्छन्त्स्वाहा" (५।४)। इदमग्निभ्याम्।

हौत्रपद्धतिः।

. "त्वं ह्यग्ने अग्निना विप्रो विप्रेण सन्त्सता। सखा सख्या समिध्यसो३। (१)

तं मर्जयन्त सुक्रतुं पुरोयावानमाजिषु। स्वेषु क्षयेषु वाजिनो३
तं मर्जयन्त सुक्रतुं पुरो यावानमाजिषु। स्वेषु क्षयेषु वाजिनो३
तं मर्जयन्त सुक्रतुं पुरो यावानमाजिषु। स्वेषु क्षयेषु वाजिनो३म्"(२)।

इत्यग्निमन्थनम्।

पुनराचम्य। कं प्रपद्यादि सप्तदश (३)सामिधेन्यः। उपांशु हविः।

आवाहने-"आवह देवान्यजमानाय अग्निमग्न आ३वह सोममा३वह (उपांशु-)विष्णुं (उच्चैः) आ३वह देवा"नित्यादि समानम्।

उत्तमे प्रयाजे "भूर्भुवर्ये४ यजामहे स्वाहाग्निं स्वाहा सोमं स्वाहा (उपांशु-) विष्णुं (उच्चैः-) स्वाहा देवा" इत्यादिप्रकृतिवत्।

वार्त्रघ्नावाज्यभागौ।

---

(१) ऋ० ८।४३।१४।

(२) ऋ० ८।८४।८। अत्र याजुषप्रकृतिकानां आश्वलायनानां च 'यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्। ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवा.' (ऋ० १०।९०।१६) इति परिधानीया उक्तास्ति। सा च शांखायनानां पाशुक मन्थने श्रूयते। तथाहि श्रुतिः "एतया त्वत्र च चातुर्मास्येषु चाथ यत्र पशुरालभ्यते तदेतां पराचीमनूच्य यज्ञेन यज्ञमयजन्त देवा इति त्रिष्टुभा परिदधाती" (कौ०ब्रा० ८।२)ति। अत एव 'यज्ञेन यज्ञमिति न भवति पशङ्गत्वाभावादि'ति क्रतुरत्नमाला।

(३) अत्र प्राकृतीः 'प्र वो वाजा अभिद्यवो' (१)इति त्रिरनूच्य (२-३) 'अग्न आ-याहि(४), तन्त्वा समिद्भिः (५), स नः पृथुश्रवा (६), ईडेन्यो नमः (७), वृषो अग्निः (८), वृषण त्वा (९), अग्निन्दूतं (१०), समिध्यमानोऽध्वरे'(११), इति पठित्वा समि-ध्यमानवतीसमिद्धवत्योरन्तराले पृथुपाजौ धाय्ये प्रक्षेप्तव्ये। ते च—

'पृथुपाजा अमर्त्यो घृतनिर्णिक् स्वाहुतः। अग्निर्यज्ञस्य हव्यवो (ऋ० ३।२७।५) (१२) तं सबाधो यतः स्रुच इत्था धिया यज्ञवन्तः। आचक्रुरग्निमूतये' (ऋ०३।२७।६) इति। एवं च त्रयोदश सम्पद्यन्ते। ततः 'समिद्धोऽअग्न (१४), आजुहोता दुवस्यत(१५), आजुहोता दुवस्यत (१६) आजुहोता दुवस्यत' (१७), इति प्राकृतीः। एवं सप्तदश सा-मिधेन्यः।

आध्वर्यवपद्धतिः ।

## होतृषदनकरणादि (१)सप्तदशेनः यज्ञेऽत्यचयवाधानम् ।

(१) अत्र प्रसङ्गात्किञ्चित्सामिधेनीविचारः प्रस्तूयते । नन्वत्र सामिधेनीविचारस्य कः प्रसङ्ग इति चेत् उच्यते । एवं भगवतः कात्यायनाचार्यस्य तार्तीयं वचनम्, किमिति, "यावत्सामिधेनी वेदेदमहं तावतिथेन यज्ञेणे"(२।१)ति । अस्यार्थः—यत्परिमाणमासां सामिधेनीनां ताः यावत्यस्ता अस्मिन् कर्मणि यस्य तथावत्सामिधेनी कर्म यस्तद्वेद जानाति स तावतिथेन यज्ञेणेति । तत्परिमाणमेषां ते तावन्तस्तावतां पूरणस्तावतिथस्तेन तावतिथेन । अत्र "यत्तदेतेभ्यः परिमाणे वतुप्" ( पा० ५।२।३९ । ) एभ्यो वतुप् परिमाणे । "आ सर्वनाम्नः" (पा० ६।३।९१) सर्वनाम्न आकारोऽन्तादेशः स्याद्दग्दृशवतुषु । "तस्य पूरणे डट्" (पा० ५।२।४८ ) षष्ठ्यन्तात् । "वतोरिथुक्" । (पा० ५। २।५३) वतोरिथुगागमः स्यात् डटि परतः । इति चतुर्भिः सूत्रैस्तावतिथ इति रूपसिद्धिः । अत्रेदमहमित्युक्तं सामिधेनीनां सङ्ख्यापूरणवाचकप्रत्ययान्तेन यज्ञेणावबाध इति प्रयोगः । पञ्चदशानां पूरणः पञ्चदशस्तेन एवं सप्तदशेनेत्यादि तावतां पूरणेन यज्ञेणेति प्रयुक्तत्वात् । प्रकृतौ पञ्चदशसामिधेन्यः अत्र तु सामिधेनीविवृद्धिः "सप्तदश सामिधेनीरन्वाहे" ( कौ० ब्रा० ८।२ ) ति श्रुतेः ।

तत्र विचारः—किं प्राकृतीभ्य एकादशभ्योऽधिकानामागम उत प्रथमोत्तमयोरेवाभ्यासेन सङ्ख्यापूरणमुत यावदुक्तं त्रिरभ्यासं प्रथमोत्तमयोः कृत्वावशिष्टानामागम इति संशये "बहिष्पवमाने तु ऋगागमः सामैकत्वा" ( जै० द० १०।५। २६ ) दिति न्यायेन सङ्ख्यासामञ्जस्यादेकादशभ्यः प्राकृतीभ्योऽतिरिक्तानां सर्वासामागम इति प्रथमः पूर्वः पक्षः ।

प्रकृतावेकादशभिः पठिताभिः पञ्चदशसङ्ख्याया अपूर्वावृगन्तरागमेन तत्पूरणं न कृतं किन्तु तत्पूरणायाभ्यासो विहितः । "त्रिरेव प्रथमां त्रिरुत्तमामन्वाहान्नुब्रूयाग्दि" ( श० ब्रा० १।३।५।१३ ) ( श० ब्रा० ११।२।७।७–८ ) ति । अतः सामिधेनीविवृद्धावभ्यासेन सङ्ख्यापूरणं युक्तम् । अभ्यासपक्षेऽपि यावत्कृत्वोऽभ्यासे सति सप्तदशैकविंशत्यादि संख्याः पूर्यन्ते तावत्कृत्वः प्रथमोत्तमे अभ्यसनीये इति मध्यमः पक्षः ।

न हि त्रित्वं पूरणार्थं विहितं, प्रथमाया द्विरभ्यासेनापि पञ्चदशसंख्यायाः पूरणात् । अतो विवक्षितं त्रित्वम् । तथासति तदबाधाय प्रथमोत्तमे त्रिरभ्यस्यावशिष्टानामृचामागमेन सङ्ख्या पूरणीयेति ( मी० १०।५।८ ) सिद्धान्तः ।

सामिधेनीविवृद्धिश्रुतावागमे कर्तव्ये सत्यागम्यमानानामृचां 'किमन्ते निवेशोऽथवा समिध्यमानवती समिद्धवती, चान्तरा उत या धाय्याशब्दोक्तास्तास्तयोर्मध्येऽन्यास्त्वागन्तवोऽन्ते इति संशयः । 'अन्ते तु बादरायणस्तेषां प्रधानशब्दत्वा' (जै० ५।२।१९) दिति न्यायात्सर्वाः प्राकृतीनामन्ते स्युरिति प्रथमः पक्षः ।

"इयं वै समिध्यमानवत्यसौ समिद्धवती यदन्तरा तद्धाय्या" इति धाय्यानामाकाशत्वेन स्तवनं द्यावापृथिवीसंस्तुतयोः समिध्यमानसमिद्धवत्योर्मध्ये तासां निधानमनुमापयति सर्वाश्चागन्तवो निधीयमानतया धाय्या इति सर्वासां तन्मध्ये निवेश इति द्वितीयः पक्षः ।

न निधीयमानमात्रवचनो धाय्याशब्दः स्तुतिशस्त्राद्यर्थतया निधीयमानास्वपि त-

आध्वर्यवपद्धतिः ।

(१) न,समित्परिशेषणम् ।

उत्तमे प्रयाजे-"इदमग्नये सोमाय विष्णवे देवेभ्य आज्यपेभ्य" इत्यादि ।

उपांशु प्रधानयागः । विष्णवेऽनु ब्रू३(२)हि । विष्णुं यज ।

---

ब्दाभावात् । अतो यत्रैव धाय्याशब्दप्रयोगो वेदे दृष्ट "पृथुपाजवत्यौ धाय्ये" इत्यादिस्ता एव धाय्या न त्वागन्तुमात्रमतस्तासामेव तन्मध्येऽभ्यासो त्वागन्तूनामन्त एव निवेश इति ( जै० ९।३।३ ) सिद्धान्तः ।

शतपथेऽपि सप्तदशसामिधेनीपक्षे "पृथुपाजा" ( ऋ० ३।२८।९ ) तं सबाध ( ऋ० ३।२८।३ ) इति धाय्याख्ययोः ऋचोः स्थानं पूर्वोत्तरपक्षाभ्यां दर्शितम् । तथा हि—'वह्नेके पुरस्ताद्धाय्ये दधत्यन्नं धाय्ये मुखत इदमन्नाद्यं दध्म इति वदन्तस्तदु तथा न कुर्यादनवक्लृप्ता ह त्वस्यैषा भवति यः पुरस्ताद्धाय्ये दधाति दशमी वा हि तद्वैकादशी वा सम्पद्यते तस्यो है वैषावक्लृप्ता भवति यस्ये तामन्दमीमन्नाहुस्तस्मादुपरिष्टादेव धाय्ये दध्यादि' ( श० मा० १।४।१।३७ )ति । आपस्तम्बोऽप्यसूत्रयत् "समिध्यमानवतीं समिद्धवतीं चान्तरेण पृथुपाजवत्यौ धाय्ये दधाती"ति । तथा चाश्वलायनः—"तृतीयस्यां सामिधेन्यावावपते प्रागुपोत्तमायाः पृथुपाजा अमर्त्य इति द्वे धाय्ये इत्युक्त एते प्रतीयात्" ( ९० पत्रे ) इति ।

एवं च मैत्रावरुण्या ( श० ब्रा० ९।१।१।६ का० श्रौ० १९।१०।२४ ) यामधाय्याशब्दिकाया "अग्ने त्री ते वाजिने" (ऋ० ३।२०।२) स्येतस्याः त्रिष्टुभोऽन्ते निवेशाधिष्ट्वा परिदधातीत्यादिदर्शनमुपपन्नं भवति । तस्मादधाय्याशब्दिकानामन्त एव निवेशः ।

( १ ) इदमातिथ्यं इडान्तं भवति "इडान्तं भवती" ( श० ब्रा० ३।४।१।२६ )ति श्रुतत्वात् । अत्र च पूर्ववेडया इडान्ततेति प्राक् (अग्निष्टोमपद्धतिटिप्पण्यां ४३ पत्रे ) निरूपितम् । अत्रेडाच्छाहरीतिविधानम् । अतोऽनुयाजाभावात् तिसृष्वपि स्रुक्षु चतुर्गृहीतान्येवाज्यानि, नोल्मुकोद्वहनं, न समित्परिशेषणम्, चतुर्थे प्रयाजे सर्वस्यौपभृते समानयनमिति प्रकृतितो विशेषः ।

( २ ) इयमिष्टिर्नीचैस्तरां वागन्तेन वा ( का० श्रौ० ७।२-२८ ) । वागन्तपक्षेऽपि "दीक्षणीया-प्रायणीया-ऽऽतिथ्यादेवता." ( का० श्रौ० ४।९।१९ ) इति सूत्राद्देवतापदमुपांशु इति रामवाजपेयिनः । मन्द्रतरमातिथ्यायामिति पक्षे देवतापदमात्रमुपांशु, प्रागग्नीषोमीयादुपांशुपक्षे सर्वमुपांशु भवतीति देवयाज्ञिकाः ।

अत्र'यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयान्मन्द्रं प्रायणीयायां मन्द्रतरमातिथ्यायामुपांशूपसत्सूच्चैः प्रवर्ग्येण' इति श्रुतः स्वरविशेषः किं ज्योतिष्टोमापूर्वप्रयुक्त उत दीक्षणीया पूर्वप्रयुक्त इति विचारः । तत्र ध्वनेरुच्चावचीभावः ,परमापूर्वप्रयुक्तः तस्य फलवत्त्वादिति पूर्वः पक्षः । परमापूर्वजननद्वारेण फलसम्बन्धादवान्तरापूर्वेऽपि समानं फलवत्त्वम् । समाने च फलवत्त्वे सन्निकृष्टलक्षणया निर्णयः । तथा हि दीक्षणीया प्रायणीयातिथ्यादिशब्दा अङ्गकर्मवाचिनः । न च मन्द्रत्वादिधर्माणां कर्मस्वरूपं प्रयोजकम्, अपूर्वप्रयुक्ते निर्णीतत्वात् । ततो दीक्षणीयादिशब्दैरपूर्वं लक्षणीयम् । तत्र वाक्यगतमवान्तरापूर्वं सन्निकृष्टम् तद्द्वारकं परमापूर्वं विप्रकृष्टम् । तस्मादवान्तरापूर्वप्रयुक्ता एते धर्मा इति पूर्वमीमांसा ( ९।१।२ ) सिद्धान्तः ।

आध्वर्यवपद्धतिः ।

निधनवषट्कारसमकालं यागः ( त्यागः ) इदं विष्णवे ।

औद्गात्रपद्धतिः ।

आतिथ्यायां प्रस्तोता पूर्ववत्पत्नीशालां प्रविश्य गार्हपत्यस्य पश्चादुपविश्य प्रधानयागकाले प्रेष्ठं व इति (१)गायत्र्यौशनं साम(२)तृचे गायेत् ।

औशनस्य उशनाऋषिः गायत्रीछन्दः अग्निर्देवता आतिथ्यायां गाने विनियोगः ।

प्रेष्ठंवाः । अता२ ३यिथीम् । स्तौपेमित्रम् । इवप्रा२ ३याम् । अग्नायिरा ३था३म् । नोवा २३ हा ३४३ यिदा २३४ यो ६ हायि ॥

कविमिवा । प्रशꣳसा २३याम् । यां देवासः । इति द्वा २३यिता । निमार्तो ३ये३ । पूवा २३ हा ३४३यि । दा २३४ धो ६ हायि ॥

तुवं यवायि । ष्ठदाश२३पाः । नृꣳपाहिश्ट । शृहीगा२३यिराः । रक्षातो३का३म् । ऊता२३हा २४३यि । त्मा२३४नो ६हायि(३) ॥

हौत्रपद्धतिः ।

(४)'अग्निर्वृत्राणि, त्वं सोमासि सत्पतिरि'ति ।

---

( १ ) "आतिथ्यायां गायत्रीसामौशनम्" ( द्रा० श्रौ० २।२।२४ ) इत्युक्तेः ।

( २ ) प्रेष्ठं व इति तृचात्मकं सूक्तम् ।

प्रेष्ठं वो अतिथि स्तुषे मित्रमिव प्रियम् । अग्नेरथन्नवेद्यम् । १ ॥

कविमिव प्रसꣳस्यं यन्देवास इति द्विता निमर्त्येष्वादधुः । २ ॥

त्वं यविष्ठदाशुषो नृꣳ.पाहि शृणुहीगिरः । रक्षा तोक मुतमत्ना । ३ ॥

( ३ ) उ० आ० ९, १, १८, १-३ ऊ० गा० ५, १, ११, ॥

( ४ ) ॐअग्नयेऽनुब्रूहीत्युक्ते 'अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया । समिद्धः शुक्र आहुतोम् ( ऋ० ६।१६।३४ ) ।

सोमायानुब्रूहीत्युक्ते "त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा । त्वं भद्रो असि क्रतो३म्" ( ऋ० १।९१।५ ) इति पुरोऽनुवाक्यां ब्रूयात् ।

आश्वलायनानां 'समिधाग्निं दुवस्यत ( ऋ० ८।४४।१ ) ऽऽप्यायस्व समेतु त ( १।३१।४ ) इत्यतिथिमन्त्वावाज्यभागौ भवतः । शाङ्खायनानान्तु 'अतिथिमन्तौ हैके कुर्वन्ति वार्त्रघ्नौ त्वेव स्थिता ( कौ० ब्रा० ८।२।)विग्ति श्रुतेर्वार्त्रघ्नावेव भवतः ।

आध्वर्यवपद्धतिः ।

स्विष्टकृदन्ते न सञ्चराभ्युक्षणम् ।

प्राशित्रादि(१) पवित्रप्रतिपत्त्यन्ते—

हौत्रपद्धतिः ।

ततः प्रधानयागे— ( उपांशु- ) विष्णवे ( उच्चैः— ) अनुब्रूहीत्युक्ते—

( उपांशु- ) विष्णोर्नु कं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजांसि ।

यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः(२) (उच्चैः—) ओ३म् ॥

( उपांशु- ) विष्णुं ( उच्चैः- ) यज । भूर्भुवर्येऽयजामहे (उपांशु-) विष्णुं प्रतद्विष्णुस्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः ।

यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा४ (३)

( उच्चैः ) वौ४षट् ओजः सहः सह ओजः स्वः ।

अत्र (४)प्रस्तोत्रा निधनेन सह वषट्कुर्यात् ।

अग्नये स्विष्टकृतेऽनुब्रूहीत्युक्ते—

होतारं चित्ररथमध्वरस्य यज्ञस्य यज्ञस्य केतुं रुशन्तं । प्रत्यर्द्धिं देवस्य देवस्य मन्हा श्रिया त्वग्निमतिथिं जनानो३म्(५) ।

अग्निं स्विष्टकृतं यजेत्युक्ते—

भूर्भुवर्येऽयजामहेऽग्निं स्विष्टकृतमयाडग्निरग्नेः प्रिया धामान्ययाट् सोमस्य प्रिया धामान्ययाट् ( उपांशु- ) विष्णोः ( उच्चैः—)प्रिया धामान्ययाड्देवाना'मित्यादि 'जुषतोहविर्यस्त्वा स्वश्वः सुहिरण्यो अग्न उपयाति वसुमता रथेन ।

तस्य त्राता भवसि तस्य सखा यस्त आतिथ्यमानुषग्जुजोष(६)

---

( १ ) अत्रायं पदार्थक्रम -प्राशित्रभागः । इडावदानम् । मञ्जयजमानषड्वत्तभागाः । पञ्चेवरधन्वादिचतुर्धाकरणम् । प्रस्तर-परिधि-त्रिवृति-बर्हि रामुरमदग्नीषोमीयार्थे रक्षणम् । पवित्रप्रतिपत्तिरिति ।

( २ ) इयं पुरोऽनुवाक्या ( ऋ० १।१५४।१ )।।

( ३ ) इयं याज्या ( ऋ० १।१५४।२ ) ।

( ४ ) प्रस्तावनिधनयोर्वषट्कारयोः समकालो यथास्यात्तथा वषट्कारः कर्तव्यः । "प्रणवो यज येऽयजामहो वषट्कारः सम्प्रेषाश्चोच्चैरुपांशु हविःषु" ( शां० श्रौ० १।१।३६ ) इति कल्पवचनादुपांशु हविःषु सर्वत्र प्रणवादीनामुच्चैस्त्वं, परिसङ्ख्यानादन्यदुपांशु ।

( ५ ) ऋ० १०।१।५ । ( ६ ) ऋ० ४।४।१० ।

आध्वर्यवपद्धतिः ।

## ( तानूनप्त्रोपक्रमः । )

अध्वर्युः स्रुवेण ध्रौवं प्रतप्रदाने गृह्णा(१)त्यापतय इति सकृत्सशेषम् ।

"आपतये त्वा परिपतये गृह्णामि तनूनप्त्रे शाक्वराय शक्वन ओजिष्ठाय (५।५) ।

एवं प्रतिप्रस्थातृनेष्टारौ सशेषम् । उन्नेता ध्रुवयैव निःशेषं सर्वेषां द्विश्च स्थाल्याः स्रुवेण तूष्णीं संग्रहणमिति केचित् । नेति कर्कः ।

तानूनप्त्रमेतद्दक्षिणस्यां वेदिश्रोणौ निधाया(२)वमृशन्त्यृत्विजो(३) हिरण्यहस्ता वरणक्रमेण यजमानध्यानाधृष्टमिति ।

हौत्रपद्धतिः ।

श्रौषट् ओजःसहः सह ओजः स्वः ।

उदकोपस्पर्शः ।

तत इडोपह्वानम् । उपहूतं गृहदित्यादि तस्मिन्नुपहूत इति पूर्ववत् ।

भक्षः । मार्जनम् । इडान्तातिथ्येष्टिः ।

---

(१) प्रतिपुरुषं चैतद्ध्रौवाज्यग्रहणत्रयं सर्वैर्ब्रह्मादिभिः पुरुषैर्वरणक्रमेण कर्तव्यमित्यर्थः । सर्वैः कुतः "आज्यानि गृह्णाना" (श०ब्रा०३।४।२।९) इति श्रुतेः । आज्यानीति गृह्णाना इति चाज्येषु च ग्रहणकर्तृषु च बहुत्वश्रवणात् । अतो ब्रह्मादिभिः सर्वैः वरणक्रमे"णापतय" (५।५) इति मन्त्रेण ध्रौवस्य प्रतपात्रे ग्रहणं कर्तव्यम् । तूष्णीमेव स्थाल्याः द्विः स्रुवेणेति । यजमानोऽपि गृह्णातीति हरिस्वाम्यभिप्राय. "अथैत आज्यान्येव गृह्णाना" (श०ब्रा०३।४।२।९) इत्यत्रैते ऋत्विग्यजमाना इति व्याख्यातवान् ।

ध्रौवमाज्यं प्रतप्रदानपात्रे प्रथमं ततो द्विराज्यस्थाल्याः स्रुवेण, प्रतिपुरुषं गृह्णीयुरित्येतच्छाखान्तरात् । तानूनप्त्रं गृह्णाति कांस्ये चमसे,वा" (२।२।१।१) इति मानवश्रौतसूत्रे ।

(२) एतदाज्यं सर्वे ऋत्विग्यजमानाः सम्भूयावमृशन्तीति हरिस्वामिनः । तथा च मानवे-"युगपत्समवमृश्यानाधृष्टमसीति जपन्ती" (२।२।१।४) ति ।

(३) अत्र सोमयागे ब्रह्मादयश्चमसाध्वर्यवश्च बहवः कर्तारः समधिगताः ते सर्व किमृत्विक् शब्दवाच्या उत केचिदेवेति संशयः । कुर्वतस्त ऋत्विकशब्दस्य प्रवृत्तिनिमित्तभूतौ यजनम् । तच्च ब्रह्मादिष्विव चमसाध्वर्युष्वप्यस्ति । तस्मात्सर्वे ऋत्विक्शब्दवाच्या इति पूर्वःपक्षः । नैवम् । सौम्यस्याध्वरस्य यज्ञक्रतोः सप्तदशर्त्विज" इति सङ्ख्याश्रुतिविरोधात् । तस्मात् योगमनतिक्रम्य शास्त्रीयरूढिमप्याश्रित्य केचिदेव ऋत्विक्शब्दवाच्या इति पूर्वतन्त्र (३।७।१३) सिद्धान्तः ।

सप्तदश ऋत्विज इति समाम्नानम् । कतमे ते सप्तदश इति विचारे अज्ञानादनियम इति पूर्वपक्षः । "ऋत्विग्दक्षिणादानप्रकरणे "अग्नीधे हिरण्यं ददाति (श०ब्रा०४।३।४।२०) "अथ ब्रह्मणे, अथोद्गात्रेऽथ होत्रेऽथाऽध्वर्युभ्यां, अथ प्रस्तोत्रेऽथ मैत्रावरुणाय ब्राह्मणा-

आध्वर्यवपद्धतिः ।

"ॐ अनाधृष्टमस्यनाधृष्यन्देवानामोजोऽनभिशस्त्यभिशस्तिपाऽअनभिशस्त्येन्यमञ्जसा सत्यमुपगेषᳬस्विते मा धाः" ( ५।५ ) ।

अतः परं परस्परमद्रोहस्तेभ्या न(१) सतानूनप्त्रिणे द्रोग्धव्यमिति श्रुतेः" ( श० ब्रा० ३।४।२।६ । ) इति ।

ततः पल्यङ्कय निदधात्यपिधायामृन्मयेन ।

अध्वर्युरपराह्णे व्रतमिश्रं(२)दीक्षिताय व्रतं प्रयच्छति ।

यद्वपु गृहपतये(३) ।

## ( अवान्तरदीक्षा । )

अथावान्तरदीक्षा । यजमानः अग्ने व्रतपा इत्याहवनीये समिधमाधाय "ॐ अग्ने व्रतपास्त्वे व्रतपा या तव तनूरियᳬ सा मयि या मम तनूरेषा सा त्वयि ।

---

च्छᳬसिनेऽथ पोत्रेऽथ नेष्ट्रेऽथाच्छावाकायाग्नीध्रेऽथ ग्रावस्तुतेऽथ सुब्रह्मण्याय प्रतिहर्त्रे उन्नाय ददाती"ति (श० ब्रा० ४।३।४।२२) श्रुतौ ब्रह्मादीनां षोडशानां कीर्तनाद्दीक्षा श्रुतौ ( श० ब्रा० १२।१।१।१—१० ) नाम कीर्तनाच्च तेषामृत्विक्त्वमिति ( पू० मी० ३।७।१७ ) सिद्धान्तः ।

अत्र स्वशाखायां "षोडशर्त्विजो वृणीत" ( का० श्रौ० ७।१।७ ) इत्यत्र चमसाध्वर्यूणामृत्विग्गणत्वाभावज्ञापनार्थे षोडशग्रहणम् । अतश्चर्त्विक्सम्बन्धिमधुपर्के ( पा० गृ० सू० १।३।४ ) तानूनप्त्र (श० ब्रा० ३।४।२।९) क्रतुदक्षिणादान (श० ब्रा० ४।३।४।२०–२२ का० श्रौ० १०।२।२१। शु० य० सं० ७।४६ ) दधिधानाभक्षणादिकं (श० ब्रा० ४।४।३।११ का० श्रौ० १०।८।६। य० सं० ८।१२) चमसाध्वर्यूणां न भवति । अथवा शाखान्तरीय ( बौ० श्रौ० २।२।३ ) ( आप० श्रौ० १०।१।१० ) (आश्व० गृ० १।२०।६) सदस्यक्रुदासार्थं षोडशग्रहणम् । "तस्मान्न सप्तदशमृत्विजं कुर्वीत नेदतिरेचयानीति" (श० ब्रा० १०।४।१।१९ ) स्वशाखायां निषेधात् ।

( १ ) सतानूनप्त्रिणि प्रेते त्रिरात्रमनध्याय कार्यः । तथोक्तं पारस्कराचार्यैः—"सतानूनप्त्रिणि सब्रह्मचारिणि च त्रिरात्र"( पा० गृ० २।११।८ )मिति ।

( २ ) व्रतस्य पुरुषार्थत्वात्तत्करणे यद्यसामर्थ्यं भवति तथापि तानूनप्त्रं दीयत एव प्रत्यर्थपुरुषसंस्कारकत्वात् । तददाने च कर्तोर्वैगुण्यापत्तेः ।

तानूनप्त्रस्य व्रतमिश्रस्य यजमानप्रदानार्थत्वाद्भावधिषितस्याज्यस्यात्राह्मणयोः क्षत्रियवैश्ययोर्भक्षप्रतिषेधा ( श०ब्रा० २।३।१।३९ ) चयाः सोमे तानूनप्त्राभाव इति सम्प्रदायकाराः ।

"पयु दक्षिणावता दीक्षेत यजमानायैव व्रत"मित्यादि ( श० ब्रा० ३।४।२।१६ ) श्रुतेर्दीक्षिताय प्रयच्छतीत्युक्तम् ।

( ३ ) "अथ यास्तद्देवाः प्रियास्तनूः प्रियाणि धामानि सार्धᳬ समवद्दिरे तदिन्द्रे संन्यदधते" ( श० ब्रा० ३।४।२।१६ ) इत्यादिवाक्यशेषात्तानूनप्त्रस्य दीक्षितसंस्कारार्थत्वं प्रतीयते । तेन नाशदोषादौ कालादृति ( श० ब्रा० १२।६।१।१–२८य० सं० ८।६४–६१ ।

शाध्वर्यवपद्धतिः।

सह नौ व्रतपते व्रतान्यनु मे दीक्षान्दीक्षापतिर्मन्यतामनु तपस्तपस्पतिः (५।९)।

मदन्तीरुपस्पृश्य गाढतरं मुष्टिमेखलं कुरुते।

पत्नी च गार्हपत्ये(१) तूष्णीं समिधमाधाय मदन्तीरुपस्पृश्य गाढतरं मुष्टिमेखलं कुरुते। इत्यवान्तरदीक्षा(२)।

औद्गात्रपद्धतिः।

( उपांशुः कल्पः )

( तानूनप्त्रप्रकरणः। )

अथ क्रयेऽह्नि तानूनप्त्राभिमर्शनात्पूर्वं स्वयमुद्गाता स्वगृहात्प्रयसमुदीचीं दिशं गच्छेत्।

"देवा देवमेतु सोमः सोममेत्वृतस्य पथे"ति(३)।

अर्द्धाधिकं मार्गं गत्वा जपेत्। "विहाय दोषकृत्यमि"ति(४)।

देवयजनस्यासाधारणं मार्गं प्राप्य जपेत्।

"यज्ञानामसि।स्तुतिः सोमसरणी सोमं गमेयमि"ति(५)।

( प्राचीनावीती ) पत्नीशालावेदेरुत्तरमन्तमाक्रम्य दक्षिणमन्तमीक्षमाणः "पितरो भूः पितरो भूः पितरो भूः" (६)इति जपेत्।

अथ यजमानः 'प्रतिहर्तारं त्वां वृण' इति वृणीते पूर्वमवृतश्चेत्।

उद्गातारस्तानूनप्त्रमाज्यमवमृश्य जपेयुः। "हविरसि वैश्वानरमना·

हौत्रपद्धतिः।

( तानूनप्त्राज्यग्रहणम्। )

अथ तानूनप्त्राज्यग्रहणम्। "ॐ आपतये त्वा परिपतये गृह्णामि तनूनप्त्रे शाक्वराय शक्वन ओजिष्ठाय"।

इति मन्त्रेणाज्यं गृहीत्वा सर्वे ऋत्विजः यजमानश्च मदन्तीभिरुपस्पृश्य तत—

"ॐ अनाधृष्टमस्यनाधृष्यन्देवानामोजोऽनभिशस्तिपाः। अनभिशस्तेन्यमञ्जसा सत्यमुपगेषं सुविते मा धाः"

---

का० श्रौ० २५।६।११) माऽइयमेवं (का० श्रौ० २५।१।६) च कृत्वा पुनर्व्रतमुत्थाय पूर्ववदेव व्रतपात्रे ग्रहणाभिमर्शनादिना संहृत्य देयम्। अन्यथा संस्कारलोपाद्वैगुण्यं स्यादिति।

(१) सर्वेषु नानागार्हपत्यपक्षे (का० श्रौ० १२।१।१६) स्वस्वगार्हपत्ये पत्न्यः समिदाधानं कुर्वन्ति, एकगार्हपत्ये तु तस्मिन्नेव।

(२) अनेकयजमानके कर्मणि सर्वेषां पत्नीयजमानानामवान्तरदीक्षा भवति क्रमेण।

(३) तां० १।१।२।

(४) तां० १।१।३।  (५) तां० १।१।४।  (६) तां० १।१।५।

आध्वर्यवपद्धतिः।

( यजमानपष्ठानाम्ब्रह्मादिऋत्विजां सोमालम्भादिकम् )

आधर्त्विजां यजमानस्य प्रतिप्रस्थातुः फर्कमतेनाग्नीध्रस्य वा पाणिप्रक्षालनम्। हिरण्यबन्धनम्।

(१)यजमानषष्ठाः (मदन्तीरुपस्पृश्य) सोममाप्याययन्त्यंश० शुरंश० शुरिति। मदन्त्युपस्पर्शनम्। सामविस्रंस०सनम्।

आज्यमालभ्योपस्पृशेद्पः सोममालिम्समानस्तथा विपर्यस्य। सर्वत्र

औद्गात्रपद्धतिः।

धृष्टमनाधृष्यन्देवानामोजोऽनभिशस्त्यभिशस्तिपाअनभिशस्तेन्यमञ्जसा सत्यमुपगेषᳪ स्वुचिते माधाः"।

( सोमाप्यायनम्। )

उद्गातारोऽप उपस्पृश्य सोमं हिरण्येनान्तर्द्धायाभिमृशेयुः।

"ॐ अंश०शुरंश०शुष्टे देव सोमाप्यायतामिन्द्रायैकधनविदे।

आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्व।

होत्रपद्धतिः।

इति मन्त्रेण सहिरण्यं ध्रौवमाज्यं पात्रीस्थं बर्हिष्यासन्नं तानूनप्त्रं समवमृश्य पुनर्मदन्तीरुपस्पृश्य—

( सोमाप्यायनम्। )

ततः पूर्वेणाहवनीयं परीत्य दक्षिणेन राजानं(२)परीत्य प्राङ्मुखस्तिष्ठन् राजानमाप्याययन्ते।

---

(१) "त वं यद्भूत्वाप्याययन्तो' (श० ब्रा० ३।४।३।१७)ति श्रुतौ के पुनस्ते षट्? ये केचिदिति प्राप्ते—"षड्वा ऋतवः ऋतव एवैतद्भूत्वाऽऽप्याययन्तो"(श० ब्रा० ३।४।३।१७)ति वाक्यशेषाद्धेतुसस्तुनास्त "वसन्त आग्नीध्रः, ग्रीष्माऽध्वर्युर्वर्षा उद्गाता शरद् ब्रह्मा हेमन्तो होता" (श० ब्रा० ११।१।७।३२) इत्येते पञ्चर्त्विजः शाखान्तराच्च षष्ठो यजमानो भवति।

"अथ मदन्तीरुपस्पृश्य राजानमाप्याययन्ती" (श० ब्रा० ३।४।३।११)ति श्रुतेर्यावन्त सोममाप्याययन्ति ते सर्वे प्रथमं मदन्तीः स्पृष्ट्वा ततः सोमं स्पृशेयुः' तथा "त आप्याययन्ती" (श० ब्रा० ३।४।३।१८)ति श्रुतत्वात्। "निदांस्य राजानं सहिरण्यैः पाणिभिराप्याययन्तो' (११।११।११) त्यापस्तम्बः। अतो मदन्त्युपस्पर्शनानन्तरमिकायां हिरण्यबन्धनं कर्तव्यं ततः सोमाप्यायनं निदांस्य सोममिति। एवमन्येषु सूत्रेष्वपि पठितमस्ति।

अनेकयजमानके त्वेक एवाप्यायते परार्थत्वात्। आप्यायनं चात्रालम्भनमात्रं न सोमप्रक्षेपः नियतपरिमाणत्वात्।

(२) अत्र (सर्वत्र वा) राजासन्दीमप्रेणैव मार्गः। तथा च बौधायनः—"मा राजानं चाहवनीयं चान्तरेण कश्चन सञ्चारी" दिति।

आध्वर्यवपद्धतिः ।

सोमालम्भनमात्रेणैतदाप्यायनम्(१) ।

"ॐ अꣳशुरꣳशुष्टे देव सोमाप्यायतामिन्द्रायैकधनविदे ।

आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्व ।

आप्याययास्मान्त्सखीन्त्सन्न्या मेधया स्वस्ति ते देव सोम सुत्यामशीय"(२) (५।७) ।

औद्गात्रपद्धतिः ।

आप्याययास्मान्त्सखीन्त्सन्न्या मेधया स्वस्ति ते देव सोम सुत्यामुदृचमशीये"ति ।

( सोमपरिचरणम् । )

न साक्षात्स्पर्शः। पुनरप उपस्पृश्य उद्गातारः प्रस्तरस्योपरि दक्षिणान् पाणीनुत्तानान्कृत्वा सव्याग्रीवैः कृत्वा निह्नुवीरन् । 'एष्टा रायः प्रेष्टा-

हौत्रपद्धतिः ।

"ॐ अंशुरंशुष्टे देव सोमाप्यायतामिन्द्रायैकधनविदे । आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्वाप्याययास्मान्त्सखीन्त्सन्न्या मेधया स्वस्ति ते देव सोम सुत्यामुदृचमशीय" इत्याप्यायनम् ।

ततः "ॐ यमादित्या अंशुमाप्याययन्ति यमक्षितिमक्षितयः पिबन्ति । तेन नो राजा वरुणो बृहस्पतिराप्याययन्तु भुवनस्य गोपाः" । इत्युरांस्यभिमृशेयुः । अप उपस्पृश्य—

---

(१) जप-नुमन्त्रणा-भिमन्त्रणा-प्यायनो-पस्थानलक्षणानि—

जपमुच्चारणं विद्यात्कृत्स्नमपि सद्भवेत् ।

अर्थतः कार्यलाभश्चेदर्थ एव क्रतोर्भवेत् ॥

मन्त्रमुच्चारयन्नेव मन्त्रार्थस्थेन संस्मरेत् ।

येषिणं सन्मना भूत्वा स्यादेतदनुमन्त्रणम् ॥

एतदेवाभिमन्त्रस्य लक्षणं चेक्षणाधिकम् ।

अद्भिः संस्पर्शमाधिक्यात्तदेवाप्यायनं स्मृतम् ॥

उपस्थानं तदेव स्यात्प्रणतिस्थानसंयुत"मिति ।

(२) अग्निष्टुदादिषु (तां० ब्रा०।१७।७।६ का० श्रौ० २२।४।३१) प्वास्य मन्त्रस्य विपरिणामः—"अꣳशुरꣳशुष्टे देव सोमाप्यायतामग्नय एकधनविदे । आ तुभ्यमग्निः प्यायतामा त्वमग्नये प्यायस्वे"ति । इन्द्रस्तुति (का० श्रौ० २२।६।३) यथाश्रुत एव । सूर्यस्तुति "सूर्यायैकधनविदे । आ तुभ्यं सूर्यः प्यायतामा त्वं सूर्याय प्यायस्वे"ति । वैश्वदेवस्तुति "विश्वेभ्यो देवेभ्य एकधनविद्भ्यः। आ तुभ्य विश्वेदेवाः प्यायन्तामा त्वं विश्वेभ्यो देवेभ्यः प्यायस्वे"ति ।

सुत्यानेकत्वे "सुत्ये अशीय सुत्या अशीयै"त्येवमूह इति शाङ्खायनभाष्ये(शां०श्रौ० ६।८।३।२३२ पत्रे ) ।

आध्वर्यवपद्धतिः ।

## ( निह्नवविधिः । )

उदकोपस्पर्शः(१) । प्रत्येत्य प्रस्तरे निह्नुवत उत्तानहस्ता दक्षिणोत्ताना वेष्टा राय इति ।

"ॐ एष्टा रायः प्रेषे भगाय ऋतमृतवादिभ्यो नमो द्यावापृथिवीभ्याम्" ( ५।७ ) ।

अथ यजमानः स्वसञ्चरेण उत्तरतः प्रत्येत्य पूर्वेणाहवनीयं दक्षिणं गत्वा सोममाप्याय्य प्रत्येत्य अपः स्पृष्ट्वा प्रस्तरे निह्नवं कृत्वा स्वसञ्चरेण स्वस्थानं गच्छेत् ।

एवमेव ब्रह्मणोऽप्याहवनीयं परेण सञ्चर इति पक्षे, पूर्वेणेति पक्षे—पूर्वेणैवोत्तरतो गत्वा प्रत्येत्याप्याय्य पुनः प्रत्येत्य निह्नवं कृत्वा तथैव स्वस्थानं गच्छेत् ।

इतरेषां पूर्वेणाग्निं दक्षिणतो गत्वाप्याय्य प्रत्येत्य निह्नवः ।

(२)व्यूहनपरिव्ययने कृत्वैके तानूनप्त्रादि कुर्वन्ति ।

औद्गात्रपद्धति ।

यामानि प्रेषे भगायर्तमृतवादिभ्यो नमो दिवे नमः पृथिव्या इति। निह्नवं नाम द्यावापृथिव्योर्नमस्कारः ।

हौत्रपद्धतिः ।

## ( निह्नवविधिः । )

ततः दक्षिणोत्तानान्पाणीन्प्रस्तरे निधाय निह्नुवते(३) सव्योत्तानानपराह्वे ।

"ॐ एष्टा रायः प्रेषे भगाय ऋतमृतवादिभ्यो नमो द्यावापृथिवीभ्याम्" । इति । आप्यायनप्रभृत्युपद्युपसदि संस्थितायाम् ।

---

न्यग्रोधश्चेद्वा तस्याप्याप्यायनमात्रं तूष्णीं तस्यानिन्द्रार्थत्वेन मन्त्रस्याप्राप्तेः अथवा फलचमसस्य यजमानचमससाध्ययागसाधन ( जै०३।५।४७-५१) त्वात्सोपेन्द्रार्थो भवति सोमवत् अस्मिन्पक्षे-"आर्ठ० शुर्ठ०शुर्वी देवी सोमन्यग्रोधावाप्यायतामा शुनाभ्यामिन्द्रः प्यायतामा शुनामिन्द्राय प्यायेथाम्। आप्यायतमस्मान्त्सखीन्त्सन्या मेधया स्वस्ति ते देवी सोमन्यग्रोधौ सुत्या" मित्यूहो भवति । युक्तोऽयं पक्षः ।

( १ ) शाखान्तरात् । तथाहि मानवे—"यत्राज्येभ्योऽधि राजानमुपचरेयुः प्रक्षालयेरन् पाणीन् राज्ञो वाऽप्याज्यानी"( २।२।१।१० )ति ।

( २ ) आतिथ्याया इडान्तत्वेऽपि व्यूहनपरिव्ययनादीनि संस्कारकर्माणि प्रवर्तन्त एव संस्कारत्वात् । प्रतिपत्तिकर्माण्यपि प्रणीताविमोक—राक्षसभागादीनि प्रवर्तन्त एव ।

( ३ ) राजानं दक्षिणेन परीत्याहवनीयं पूर्वेणागत्य वेद्यामासन्ने प्रस्तरे वामहस्तं

आध्वर्यवपद्धतिः ।

ब्रह्मोद्गातृहोत्रध्वर्युप्रतिप्रस्थातृयजमानाः क्रमेणेति सम्प्रदायः । अ-ग्नीत्पञ्चम इति कर्कः ।

## ( आतिथ्यापरिसमापनम् । )

तत आतिथ्या(परि)समापनम् । भागपरिहरणम् । अग्निसम्मार्गप्रै-षाग्निसम्मार्गौ ।

व्यूहने—विष्णोरुक्रमितिम० ( २।१५ ) विष्णुस्तमपनुदन्तु (२।१५) । अभ्युदय जुहा परिध्यञ्जनम् । सूक्तवाकप्रैषः(१) ।

## ( प्रस्तराञ्जनादिकम् । )

समुल्लुप्य (२)प्रस्तरमहृत्वा विधृत्यौ परिधींश्चादायाह 'अग्नीन्म-दन्त्यापा३' इति 'मदन्तीर्' इत्यग्नीत् ।

अध्वर्युर्मदन्तामिति नीचैर्हृत्वा ताभिरेहीति ध्रुवमध्याहवनीयं प्रस्त-रपरिधिविधृतीर्हृत्वा अग्नीदानीताभिः मदन्तीभिरभ्युक्ष्याग्नीध्र प्रयच्छति निधानाय (३)स सुगुप्ते स्थापयति ।

अध्वर्योश्चक्षुष्पा इत्यात्मालम्भः ( आत्मसंस्कारत्वात् )। उदकोप-

---

न्युब्जे दक्षिणं चोत्तानं कृत्वा ब्रह्मादयो निह्नुवते । ब्रह्मयजमानौ दक्षिणस्थितावेव न सो-माप्यायननिह्नवौ कुरुतः किन्तु पश्चात्सञ्चरमागत्याहवनीयं पूर्वेण परीत्य सोमाप्यायनस-स्थात्तथैव प्रत्यागत्य प्रस्तरे निह्नवं कृत्वा ततो यथागतं गत्वा स्वस्थाने उपविशतः ।

( १ ) प्रस्तरप्रक्षेपाभावान्न तत्प्रैषः । सूक्तवाकोऽप्यत्र न मीमांसायां तृतीयद्वितीये विचारितत्वादिति रामवाजपेयनः ।

( २ ) प्रस्तरं समुद्गृह्य "सञ्जानाथा" ( शु॰ य॰ सं॰ २।१६) मित्यनेन प्रकृति-वदादाय जुह्वादिषु प्रकृतिवदे (२।१६) वाक्त्वा परिधींश्च चकाराद्विधृती चादाय तूष्णीमे-व सर्वान् परिधीन् विधृती च हस्तेन गृहीत्वा" अग्नीन्मदन्त्यापा३,"इत्यग्नीधं ब्रूयात् ।

अत्र "अनुदात्तं प्रश्नान्ताभिपूजितयोः" ( पा॰ ८।२।१०० )रिति प्लुतिः ।

( ३ ) ततोऽग्नीदेव प्रेषितस्तत्प्रस्तरादित्रिकं सुगुप्ते स्थाने स्थापयेद्यत्नेन । अ-ग्नीषोमीयपर्यन्तं तस्य प्रयोजनत्वात् । "ताभिरेहीत्युपर्युपर्यग्निमतिहरति स यज्ञानुप्रह-रत्येतेन ह्यत ऊर्ध्वान्यहानि प्रचरिष्यन्भवत्यथ यदुपर्युपर्यग्निमतिहरति तदेवास्यानु-प्रहृतभाजनं भवति तमग्नीधे प्रयच्छति तमग्नीन्निदधाती" ( श॰ ब्रा॰ ३।४।३।२२ ) त्यादि श्रुतेः ।

शाखान्तरे "यदातिथ्यायां बर्हिस्तृणाति तदुपसत्सु तदग्नीषोमीयस्यचे" ति बर्हिः साधारण्येन प्रस्तरसाधारण्यमनुवदति "तदेवास्यानुप्रहृतभाजनं भवती"त्यनन्तरेणा-नुप्रहरणमनुगृह्य प्रशनार्थानां प्रतिरचितस्तावच्छिन्नेऽपि भवत्येवेति दर्शयति । तं प्रस्तरमग्नीधे प्रयच्छति तं प्रस्तरमग्नीन्निदधात्युपसदर्थम् ।

आथर्वणसूत्रे—आग्नीध्रस्ता कुशैर्दाम्यति ता उपसत्स्वप सोममाप्याययन्तीति ।

आध्वर्यवपद्धतिः ।

स्पर्शः । सर्ंस्रवाहुतिः । धुरि निधानम् । पिष्टलेपाहुतिः । वेदविमोकः । पत्ने योक्त्रस्य । आवेदेस्तरणम् । न बर्हिर्होमः ( स्तृतैव वेदिः स्यात् ) । प्रणीताविमोकः । राक्षसभागः । भागावेक्षणप्राशने । (१)इत्यातिथ्या ।

## ( सुब्रह्मण्याह्वानादिकम् । )

ततः सुब्रह्मण्याह्वानम् । अध्वर्युः शालायाः पूर्वद्वारे उपविश्य सुब्रह्मण्यां च (२)प्रेष्यति सुब्रह्मण्ये सुब्रह्मण्यामाह्वयेति ।

सुब्रह्मण्यः पूर्वद्वारस्य दक्षिणद्वारबाहोः पुरस्तादन्तर्वेदिदेशे तिष्ठन्नाह्वयति, तं पत्नीयजमानावन्वारभेयाताम् ।

औद्गात्रपद्धतिः ।

## ( सुब्रह्मण्याह्वानम् । )

अथ सुब्रह्मण्याह्वानम् । तत्राध्वर्युप्रैषानन्तरं सुब्रह्मण्यः पत्नीशालायाः पूर्वद्वारस्य दक्षिणस्थूणायाः पुरस्तात्सौमिकवेद्यन्तःप्रदेशे प्राङ्मुखस्तिष्ठन् यजमानेन पत्न्या चान्वारब्धो मध्यमस्वरेण सुब्रह्मण्याह्वानं कुर्यात् । ब्रह्मा च दक्षिणतस्तिष्ठेत् । सुब्रह्मण्य आह—सुब्रह्मण्योमिति महाश्रीसाम्नः आदित्य ऋषिः सम्पात् छन्दः इन्द्रो देवता 'ब्रह्म च वा इदमग्रे सुब्रह्म चास्ता'मिति विधायकब्राह्मणं ज्योतिष्टोमे विनियोगः ।

---

(१) दीक्षणीया-प्रायणीया-तिथ्या-ग्नीषोमीयादीनिष्टिपशुयागान्सोमयागं च प्रकृत्याम्नायते—"स्वर्गकामो ज्योतिष्टोमेन यजेते"(आ०श्रौ०१०।२।१)ति। तत्र चिन्त्यते किं सर्वयागानां फलसम्बन्धेन प्राधान्यमुत सोमयागस्यैवेतरेषां तदङ्गत्वमिति। तत्र आग्नेयादिषु यागेष्विव दर्शपूर्णमासनामवज्ज्योतिष्टोमनाम्नः सोमपक्षपाते हेत्वभावेन राजसूयनामवत्प्रकृतसर्वयागसाधारणत्वात्, सोमसमानानां दीक्षणीयानिष्ट्याग्नीषोमीयानामप्यस्ति मुख्यत्वमिति पूर्वः पक्षः। सोमयागपक्षपाते हेतुसद्भावात्र दीक्षणीयादीनां मुख्यत्वम्। "ज्योतींषि स्तोमा यस्य यज्ञस्य सोऽयं ज्योतिष्टोम" इति तद्व्युत्पत्तिः। अत एव ब्राह्मणम् "त्रिवृत्पञ्चदशः, सप्तदश, एकविंशः, एतानि वाव तानि ज्योतींषि य एतस्य स्तोमाः" ( तै० ब्रा० १।१।११ ) इति। स्तोमानां ज्योतिष्ट्वं यज्ञप्रकाशकत्वम्। न चेष्टयः पशवो वा त्रिवृदादिस्तोमयुक्ताः प्रतिभासन्ते। तस्मात्-ज्योतिष्टोमनाम्ना सोमयागानामेव फलसम्बन्धावगमादफला इष्टिपशवो न मुख्या इति सोमयागानामेव प्राधान्यमितरेषामङ्गत्वमिति ( पू० मी० ४।४।१२ ) राद्धान्तः।

तथा च कात्यायनः "तदङ्गमितरत्तत्सन्निध्यादारम्भकरणाभ्यां यज्ञत्वप्रफलयुक्तत्वाद्यदङ्ग" ( १।२।३-४ ) मिति।

(२) अत्र सुब्रह्मण्याप्रैषः आगन्तुत्वात् "प्राकृतं च विकृता" ( का० श्रौ० १।१।४ ) विति न्यायात्। एतच्च सुब्रह्मण्याह्वानं शालायाः पुरस्तादन्तर्वेदिदेशे पत्नीयजमानयोरन्वारब्धयोर्भवतीति छन्दोगसूत्रे लाट्यायनः १, ३, १, ।

आध्वर्यवपद्धतिः।

( यजमानस्य मन्त्रवाचनम् । )

आह्वानानन्तरं यजमानं मन्त्रान्वाचयति ते च यथा

"सासि सुब्रह्मण्ये तस्यास्ते पृथिवी पादः ।
सासि सुब्रह्मण्ये तस्यास्तेऽन्तरिक्षं पादः ।
सासि सुब्रह्मण्ये तस्यास्ते द्यौः पादः ।
सासि सुब्रह्मण्ये तस्यास्ते दिशः पादः ।
परोरजास्ते पञ्चमः पादः ।
सा न इषमूर्जं धुक्ष्व । वीर्यमन्नाद्यं धेहि" ।

"सुब्रह्मण्योपह्वयस्वेति" दम्पती उक्त्वा यथागतं गच्छेताम् । इति सुब्रह्मण्याह्वानं सर्वत्र ।

औद्गात्रपद्धतिः।

सुब्रह्मण्योम्। सुब्रह्मण्योम्। सुब्रह्मण्योमिन्द्रागच्छ, हरिव आगच्छ, मेधातिथेर्मेष, वृषणश्वस्य मेने ।
गौरावस्कन्दिने(,न्न)हल्यायै जार, कौशिकब्राह्मण, गौतम ब्रुवाण ।
त्र्यहे सुत्यामागच्छ मघवन्, देवा ब्रह्माण आगच्छतागच्छतागच्छत॥५॥

( यजमानस्य मन्त्रवाचनम् । ).

एवं निराहूय यजमानं वाचयति । सासि सुब्रह्मण्ये तस्यास्ते पृथिवी पाद इति ब्रूहि । सासि सुब्रह्मण्ये तस्यास्तेऽन्तरिक्षं पाद इति ब्रूहि सासि सुब्रह्मण्ये तस्यास्ते द्यौः पाद इति ब्रूहि । सासि सुब्रह्मण्ये तस्यास्ते दिशः पाद इति ब्रूहि । परोरजस्ते पञ्चमः पाद इति ब्रूहि । सा न इषमूर्जंधुक्ष्वेति ब्रूहि । वीर्यमन्नाद्यं धेहीति ब्रूहीति ब्रूहि । एवं सप्तमन्त्रानि यजमानं वाचयित्वा अप उपस्पृशेत् । ततो यजमानः 'सुब्रह्मण्योपह्वयस्वे'त्युक्त 'उपहूत' इत्यनुज्ञां दद्यात् । पत्न्यपि 'सुब्रह्मण्योपह्वयस्वे'त्युक्त 'उपहूते'त्यनुज्ञां दद्यात् । एतस्मिन् काले यजमानः सुब्रह्मण्याय नारिकेलाद्युपहारं दद्यात् ।

( सुब्रह्मण्यायाः स्वरनिरूपणम् । )

अथ सुब्रह्मण्यायाः स्वर उच्यते । वचनान्येकादश सुब्रह्मण्यायास्तत्रप्रथमद्वितीये चतुरक्षरे पञ्चमषष्ठे सप्तमश्चेति दशमैकादशे(दश) नवेति पद-शेषाणि-तस्याः स्वरे नियम उच्चस्यादेशो नीचमनादिष्टं प्रथमस्य वचनस्यान्त्यमुच्चं द्वितीयेऽन्त्यवर्ज्जं तृतीयान्त्यवर्ज्जं तृतीये चतुर्थान्तं

आध्वर्यवपद्धतिः।

## ( प्रवर्ग्यप्रयोगः। )

प्रवर्ग्योपसदावतः। तत्र प्रवर्ग्यो विकल्पेन (१) प्रथमयज्ञे। करणपदे इत्थं

(१) "न प्रथमयज्ञ" (का०श्रौ० २६।७।५३) इत्युक्तत्वात्प्रथमयज्ञोऽप्रवर्ग्यः। प्रथमयज्ञशब्देन प्रथमाहार उच्यते। तेनायमर्थः-अप्रवर्ग्यं प्रथमाहारे उपसदेव वा भवति वा तत्रापि प्रवर्ग्यः। "ग्रीवा वै यज्ञस्योपसदः शिरः प्रवर्ग्यस्तस्माद्यदि प्रवर्ग्यवान् भवति प्रवर्ग्येण प्रचर्योपसद्भि प्रचरन्ती" (श० ब्रा० ३।४।४।१) त्यादिश्रुतेः। "तस्माद्यदि प्रवर्ग्यवान्"-प्रवर्ग्यार्हः क्रतुः स्यादिति। द्वितीयादिप्रयोगेऽवकाशस्य भवति। ततः प्रवर्ग्येण प्रचर्योपसत्स्वरं उपसद्भिश्चरन्ति। यदि त्वप्रवर्ग्यार्हः क्रतुः स्यात्प्रथमाहारो वा, अनवकाशस्य वा, ततः पाठक्रमादेवातिथ्यानन्तरमुपसद्भिश्चरन्तीति लभ्यते, किमर्थं पुनरिदमुच्यते "प्रवर्ग्येण प्रचर्योपसद्भिः प्रचरन्ती" (श० ब्रा० ३।४।४।१) ति। उत्पत्त्यर्थं तावन्न भवति "तस्मादुपसद्भिर्यजेत" (श० ब्रा० ३।४।४।८) इत्यस्योत्पत्तिवाक्यस्योत्पत्तिवाक्यत्वात्। नापि क्रमार्थं "स यदैतदातिथ्येन प्रचरत्यथ प्रवर्ग्येण चरिष्यन्पुरोपसद" (श० ब्रा० १४।१।३।१) इति क्रमस्य सिद्धत्वात्। एवं तर्ह्यनारभ्याधीतस्य प्रवर्ग्यस्य ज्योतिष्टोमप्रकरणेऽयं पुनः पाठः कथं नाम प्रकरणेन ज्योतिष्टोमाङ्गं विज्ञायेतेति।

ननु च'स यदैतदातिथ्येने'त्यनेनैव वाक्येनान्तः क्रत्वनुष्ठाने सिद्धे क्रमाज्ज्योतिष्टोमाङ्गं भविष्यति नायं पुनः पाठेन। नैतदेवम्। असति ह्यस्मिन्पुनः पाठे सहस्रदक्षिणादिष्वेव क्रतुषु विशेषविहितः सन् प्रवर्ग्यः पुरोपसदः क्रियते न ज्योतिष्टोमे, एतस्मात्तु केवलज्योतिष्टोमप्रकरणे पुनः पाठादुपपन्नः प्रकृतेरप्यङ्गभावः। "प्रवर्ग्योपसदावत" (का० श्रौ० ८।२।१४) इति सूत्रस्याप्येतदेव प्रयोजनं "उपसदा चरिष्यंश्चरिष्यन्नित्यने"नैवावभरविधानसिद्धेः प्रथमाहारश्च विकल्पेनाग्निष्टोमस्य भवति विकल्पेनातिरात्रस्यापि। तत्राप्यग्निष्टोमस्य प्रथमाहारपक्षे प्रवर्ग्यस्य विकल्पः। 'तैत्तिरीयादीना'"मग्निष्टोमे प्रवृणक्ती" (आप०श्रौ०१५।१२।१०)ति पुनर्विधानमस्ति तद्यदि तावद् द्वितीयादिप्रयोगविषयं कल्प्यते ततः प्रतिषेधामात्रात्पूर्ववचनेनैव सिद्धेर्विधानानर्थक्यं भवति तस्मादाद्यप्रयोगविषयमेवैतत्प्रतिषिद्धप्रतिप्रसवार्थं तेनाग्निष्टोमप्रथमप्रयोगे विकल्प. स च व्यवस्थितो वचनान्तरवशात्। तथा हि श्रूयते "कामं तु योऽनूचानः श्रोत्रियः स्यात्तस्य प्रवृञ्ज्यादि" (गो० ब्रा० उ० २।६) (कौ० ब्रा० ८।३) (आप० श्रौ० ११।२।१०) ति। तेनाग्निष्टोमप्रथमप्रयोगेऽनूचानस्य नित्यं प्रयोगः। अन्येषां नित्यमप्रयोगः। अतिरात्रप्रथमाहारे तु सर्वेषामप्रयोग एव प्रतिप्रसवाभावात्। विहितश्चातिरात्रस्यापि पाक्षिकः प्रथमाहारः शाखान्तरे। "तस्मात्प्रथमं यजमानोऽतिरात्रेण यजेते" (आप० श्रौ० १०।२।४) ति। केचित्त्वतिरात्रे निषेधः प्रतिप्रसवाभावादग्निष्टोमे विधिरित्येवं विकल्पमाहुः। शाङ्खायनेऽपि—"अप्रवर्ग्यः प्रथमयज्ञो विकल्पः श्रोत्रियस्ये" (५।१।६।१—२)ति। यथा—"सहस्रे प्रवृञ्ज्यात्, सर्ववेदसे प्रवृञ्ज्यात्, विश्वजिति सर्वपृष्ठे प्रवृञ्ज्यात्, वाजपेये राजसूये प्रवृञ्ज्यात्, सत्रे प्रवृञ्ज्यात्सर्वं वै सत्त्र्ं सर्वमेष एतान्यस्य प्रवर्जनान्यतो नान्यत्रे" (श० ब्रा० १४।२।२।४७) ति श्रूयते। अंशुग्रहे प्येवंविधैव श्रुतिरस्ति "स वा एष न सर्वस्यैव गृहीतव्यः, सहस्रे गृहीतव्य" (श० ब्रा० ४।६।१।१४-१५) इत्यादि। तत्र हि सूत्रितम्—"सत्र-सहस्र-सर्ववेदस-वाजपेय-राजसूय-विश्वजित्-सर्वपृष्ठेषु ग्रहणमवकाशवत्" (का० श्रौ० १२।५।१३) इति। एवमत्रापि [वक्ष्य स्वत्र] सहस्रादिषु

आध्वर्यवपद्धतिः ।

प्रयोगः । उपसदा चरिष्यंश्चरिष्यन्प्रवर्ग्येण चरति समवसर्ये(१)ऽपिहितद्वारे प्रवर्ग्यचरणम् । पत्न्यदर्शनमननुक्तिश्च यावदुक्तम् । शान्तिकरणमाद्यन्तयोः । तत्र ऋचं वाचमित्यध्यायपाठः ।

औद्गात्रपद्धतिः ।

भृति घचनादाद्युच्चे द्वे प्रागुद्दशमाद्दशमे चतुर्थपञ्चमषष्ठानि प्रथमतृतीये पञ्चसप्तमे चैकादशे घचनानामादावन्ते च निरुक्तमागच्छतेत्येतावन्ते तत्रान्त्यस्य पूर्वयोरेकोमायित्वा प्रोचमुखी भवतीति ।

( अथ प्रवर्ग्यः । )

अथ प्रवर्ग्यकर्मोच्यते । तत्र प्रस्तोता अध्वर्युणा प्रेषितः पूर्ववत्पश्चाद्गार्हपत्यस्योपविश्य प्रवर्ग्यसामानि गायेत् ।

हौत्रपद्धतिः ।

( अथ घर्मः )

अप्रवर्ग्यः प्रथमयज्ञो विकल्पः श्रोत्रियस्य । ततो होताध्वर्युवेदोक्तं ( य० सं० ३६।१-२४ ) ऋचं वाचमित्यध्यायं शान्त्यर्थे पठति ।

---

प्रवृञ्ज्यादवकाशयज्ञेदिति । सेनायमर्थः—अवकाशयज्ञे यजमानस्तदा सत्रादिषु प्रवर्ग्यं कुर्यात्प्रथमेति । यो अनन्तयारिकाहस्तैवमाहुः—अवकाशस्य प्रथमाग्ने प्रथमप्रयोगवर्जिते प्रवर्ग्यः अनवकाशस्य पुनः सत्र-सहस्रादावेव मान्यक्तावित्ति । आपस्तम्बः—"अग्निष्टोमे प्रवृणक्ति, नोक्थ्ये प्रवृञ्ज्यात्, विश्वजिति सर्वपृष्ठे प्रवृणक्ती" ( १५।१२।१०-१२ ) ति । तथा च प्रवर्ग्येण प्रचर्योपसदा चरत्येतद्वा विपरीतं न प्रथमयज्ञे प्रवृञ्ज्यात्प्रवृञ्ज्याद्दुर्ब्राह्मणस्य ब्रह्मवर्चसकामस्येत्येके । योऽनूचानः श्रोत्रियस्तस्य प्रवृञ्ज्यादि"ति बह्वृचब्राह्मणम् ( कौ० ब्रा० ८।३)"मिति । प्रथमयज्ञेऽतिरात्रप्रतिषेधः "अग्निष्टोमे प्रवृणक्ती"ति श्रुतेः । दुर्ब्राह्मणस्तु—

वेदो वेदिश्च विच्छिन्नावुभौ यस्य त्रिपूरुषम् ।
दुर्ब्राह्मणः स विज्ञेयः पुनर्भूतनयोऽपि च ॥
न सोमं पीतवान्यस्य पिता वापि पितामहः ।
दुर्ब्राह्मणं समाचष्टे कर्कः शाखान्तरश्रुतेः ॥
पक्षमङ्गीकरोत्येतं मन्त्रब्राह्मणभाष्यकृत् ।

( त्रि० सं० १।१३४-१३६ ) इति । अनूचानः प्रवचने साङ्गेऽधीती ( अ० को० २।७।१० ) ति कोशः ।

अत्र मीमांसा—न प्रवृञ्ज्यादाद्ययज्ञे क्रता सोऽनुष्ठितावुत ।

प्रतिषेधः क्रतौ युक्त उक्तामस्याऽव्यवस्थता ।
प्रवृणक्त्युपसद्भ्यः प्रागिति वाक्यात्क्रतौ विधेः ॥
आद्यप्रयोगे प्राथम्यान्निषेधः क्वचिदेव सः ।

(न्या० मा० ३।३।१७) इति । विस्तृतिस्त्वत्र शावरभाष्यशास्त्रदीपिकादौ द्रष्टव्या ।

( १ ) "अपिहितद्वारे" इति शाखान्तरात् ।

आध्वर्यवपद्धतिः।

( शान्तिपाठः । )

ॐ ऋचं व्वाचम्प्रपद्ये मनो यजुः प्रपद्ये सामप्प्राणम्प्रपद्ये चक्षुः श्रोत्रम्प्रपद्ये ।
व्वागोजः सहौजो मयि प्प्राणापानौ (३६।१) ॥
यन्मे छिद्रञ्चक्षुषो हृदयस्य मनसो व्वातितृण्णम्बृहस्पतिर्मे तद्दधातु।
शन्नो भवतु भुवनस्य यस्पतिः (३६।२) ॥
भूर्भुवः स्वः तत्सवितुर्व्वरेण्यम्भर्गो देवस्य धीमहि ।
धियो यो नः प्रचोदयात् (३६।३) ॥
कया नश्चित्रऽआभुवदूती सदावृधः सखा ।
कया शचिष्ठया व्वृता (३६।४) ॥
कस्त्वा सत्यो मदानां मंᳫहिष्ठो मत्सदन्धसः ।
दृढा चिदारुजे व्वसु ( ३६।५ ) ॥
अभी षु णः सखीनामविता जरितॄणाम् ।
शतम्भवा स्यूतिभिः (३६।६) ॥
कया त्वन्नऽऊत्याभिप्रमन्दसे व्वृषन् ।
कया स्तोतृभ्य आभर (३६।७) ॥
इन्द्रो व्विश्वस्य राजति ।
शन्नोऽअस्तु द्विपदे शञ्चतुष्पदे (३६।८) ॥
शन्नो मित्रः शं व्वरुणः शन्नो भवत्वर्य्यमा ।
शन्नऽइन्द्रो बृहस्पतिः शन्नो व्विष्णुरुरुक्रमः (३६।९) ॥
शन्नो व्वातः पवताᳫ शन्नस्तपतु सूर्य्यः ।
शन्नः कनिक्रदद्देवः पर्ज्जन्यो अभिवर्षतु (३६।१०) ॥
अहानि शम्भवन्तु नः शᳫ रात्रीः प्प्रतिधीयताम् ।
शन्नऽइन्द्राग्नी भवतामवोभिः शन्नऽइन्द्रावरुणा रातहव्या ।
शन्नऽइन्द्रापूषणा व्वाजसातौ शमिन्द्रासोमा सुविताय शंय्योः(३६।११)॥
शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये ।
शंय्योरभिस्रवन्तु नः (३६।१२) ॥
स्योना पृथिवि नो भवानृक्षरा निवेशनी ।
यच्छा नः शर्म्म सप्रथाः (३६।१३) ॥
आपो हि ष्ठा मयोभुवस्तानऽऊर्ज्जे दधातन ।
महे रणाय चक्षसे (३६।१४) ॥

आध्वर्यवपद्धतिः ।

यो वः शिवतमो रसस्तस्य भाजयतेह नः ।
उशतीरिव मातरः (३६।१५) ॥
तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ ।
आपो जनयथा च नः (३६।१६) ॥

द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः ।
वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्वꣳ शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि (३६।१७) ॥

दृते दृꣳह मा मित्रस्य मा चक्षुषा सर्वाणि भूतानि समीक्षन्ताम् ।
मित्रस्याहञ्चक्षुषा सर्वाणि भूतानि समीक्षे ।
मित्रस्य चक्षुषा समीक्षामहे (३६।१८) ॥

दृते दृꣳह मा ज्योक्ते सन्दृशि जीव्यासञ्ज्योक्ते सन्दृशि जीव्यासम् (३६।१९) ॥

नमस्ते हरसे शोचिषे नमस्तेऽअस्त्वर्चिषे ।
अन्याँस्तेऽअस्मत्तपन्तु हेतयः पावकोऽअस्मभ्यꣳ शिवो भव (३६।२०)
नमस्तेऽअस्तु विद्युते नमस्ते स्तनयित्नवे ।
नमस्ते भगवन्नस्तु यतः स्वः समीहसे (३६।२१) ॥
यतो यतः समीहसे ततो नोऽअभयङ्कुरु ।
शन्नः कुरु प्रजाभ्यो भयन्नः पशुभ्यः (३६।२२) ॥
सुमित्रिया नऽआपऽओषधयः सन्तु ।
दुर्म्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्मः (३६।२३)॥
तच्चक्षुर्देवहितम्पुरस्ताच्छुक्रमुच्चरत् ।
पश्येम शरदः शतञ्जीवेम शरदः शतꣳ शृणुयाम शरदः शतम्प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतम्भूयश्च शरदः शतात् (३६।२४)॥

## ( ब्रह्मोपवेशनपरिस्तरणे )

ब्रह्मा दक्षिणेन दक्षिणाग्निं चापरेण घर्मं (१)समन्त्रमास्ते ।

(१) अत्र शाङ्खायनश्रौतकल्पे विशेषः । "कर्मादौ देशपृथक्त्वे च" (४।७।७) इति । अस्यार्थः—इष्टिपशुबन्धेषु सोमे च यो यः कर्मादिर्यश्च देशपृथक्त्वमेकस्यैव कर्मणो देशभेदेनानुष्ठानं तत्र आसनसंस्कार उपवेशनं जपश्चेति भवति । अत्र कारिका—

आसनस्य च संस्कार आसनं च यथोदितम् ।
कर्मादौ देशभेदे च तदेवेदं प्रपञ्च्यते ॥ १ ॥
साम्यं चेति च शब्देन साम्यस्याप्यासनस्य च ।
साहचर्यं सुयज्ञेन सर्वत्र प्रतिपादितम् ॥ २ ॥

आध्वर्यवपद्धतिः ।

आवृत्तेनैव मन्त्रेण होमे याज्यान्तवर्जिते ।
सर्वत्रासनसंस्कारः कात्यायनमतं यथा ॥ ३ ॥
इष्टितन्त्रे पशोस्तन्त्रे यास्तासां नैतदिष्यते ।
युक्तमन्यत्र सर्वत्र श्रुत्यन्तरनिदर्शनात् ॥ ४ ॥
न कुर्याद् गार्हपत्यस्य आधानेऽथेतरस्य तु ।
इध्मेनैव सहासीत दक्षिणाग्नेर्न विद्यते ॥ ५ ॥
पूर्वेद्युः पुनराधेये कालभेदात्प्रकीर्तितः ।
शेषमाधानवज्ज्ञेयं विशेषो नानयोर्यतः ॥ ६ ॥
चातुर्मास्येषु यो वाच्यो विशेषः स इहोच्यते ।
प्राकृतेषूच्यमानस्तु वैकृतेष्वातिदेशिकः ॥ ७ ॥
आ विमोकात्प्रणीतानां कृतः सान्तपनीयकः ।
न कार्यो गृहमेधीये पूर्णदर्वे तथैव च ॥ ८ ॥
पित्र्यायामादितो वेदेः क्रियायामभिसंचरे ।
विपर्यये च कर्तव्यस्त्र्यम्बकेष्वपरस्तथा ॥ ९ ॥
उखासम्भरणे श्वभ्रे करणे धूपपाकयोः ।
अच्छर्दने सहोद्वापे महावीरा उखासमाः ॥ १० ॥
निर्ऋतिस्तम्बयजुषोः सीरस्य च नियोजने ।
सोमक्रयादावासीत पदे देशे क्रयस्य च ॥ ११ ॥
परिधाने च शालायां तूष्णीमेव कृतो यतः ।
चयने गार्हपत्यस्य चितिप्रणयने तथा ॥ १२ ॥
चयनादौ पुरीषादौ कुम्भक्षेपे तु चेक्षने ।
प्रवर्ग्यादौ च सर्वत्र अनुव्रज्यासनं ततः ॥ १३ ॥
अनिमित्तेऽपि कर्तव्यो यत्र रात्रिर्व्यवायिका ।
आदौ तन्त्रमनुव्रज्य घर्मोत्सादे समुक्षणे ॥ १४ ॥
अग्निप्रणयने चैवमुक्तोऽप्रविशये यथा ।
वैश्वानरस्य शालायां मारुतानां च तन्त्रतः ॥ १५ ॥
पुनरन्वेत्य होमादौ देशभेदादिहासनम् ।
स्वासनस्योहविर्धाने नभ्यस्थे चेदनावृते ॥ १६ ॥
आदौ नोपरवाणां तु प्रविष्टो यदि नभ्ययोः ।
आगारमासनस्यैक्यात्तूष्णीमेव सकृत्क्रिया ॥ १७ ॥
औदुम्बर्यास्तु संमाने संस्कारः स्यात्समन्त्रकः ।
आग्नीध्रीये धिष्ण्यकारे सदस्यपि सकृत्क्रिया ॥ १८ ॥
स्वस्थान एव संस्कारो मार्जालीयेऽस्य तच्चये ।
एष एव विधिर्दृष्टस्तुल्यत्वाद्देशभेदयोः ॥ १९ ॥
कृतो यद्यपि चैचयं व्यवधानात्पुनः क्रिया ।
अग्नेः सोमस्य नयने अग्नीषः द्वारेण पुनः ॥ २० ॥
स्वासने चासनं कृत्वा पशोरादौ पुनः क्रिया ।

आध्वर्यवपद्धतिः।

आहवनीयस्यैव वा परिस्तरणम्।

## ( पात्रासादनम्। )

परिधर्म्यमौदुम्बरम्। मौञ्जं त्रिवृद्रज्जुद्वयम्। वाल्वजं वियानमासन्द्यौ(१)दुम्बर्यां स्कन्धमात्र्याः (२)पूर्वेण गार्हपत्यं प्राचः कुशानास्तीर्य तेषु पात्रासादनं द्वन्द्वम्। उपयमनीं महावीरं परीशासौ पिन्वने रौहिणकपाले, रौहिणहवन्यौ च स्रुचावनुत्कीर्णे, (३)स्थूणामयूखं, धृष्टी, शतमाने मुञ्जप्रलवान्विकङ्कतशकलान्विंशति प्रादेशमात्रान्, स्रुवं, मुञ्जवेदं, धवित्राणि, परिधींश्च, (४)रज्जुसन्दानमासन्दीं कृष्णाजिनमभिर्दं सिकताः खरार्थास्त्रिषु शरावेष्वर्थवच्च पात्री पवित्रच्छेदनानि, 'पवित्रे उपवेषश्च, अग्निहोत्रहवणीं शूर्पं उपसर्जनीपात्रमुदपं पिष्टान्युपशाया महावीरावौदुम्बरी समिच्च। वज्रो मौञ्जः, कूर्चः ( इतरौ महावीरौ ) आज्यस्थाली प्रभूतमाज्यं चेति।

---

अहुतश्चेद्र्वहिस्तन्त्रे योऽपि तथात्र वा यदि ॥ २१ ॥
ततः पशुपुरोडाशश्रपणे संनिधानतः ।
कुर्यात्प्रविषमराध्ये च शालायामेव चासनम् ॥ २२ ॥
आज्यग्रहण आग्नीध्रे स्वदेशे च पुनस्ततः ।
कार्यो निर्वापः सोमस्य हविर्धाने तयान्तरे ॥ २३ ॥
सदः प्रविश्य कर्तव्यः सर्वत्रैव प्रसर्पणे ।
होमे साध्ये सदा कुर्याद्व्याहृत्यस्याविरोधतः ॥ २४ ॥
मानसादौ च कर्तव्यो रथचक्रे तृणं विना ।
इष्टयादौ सर्वहोमादौ पश्वादौ च प्रकीर्तितः ॥ २५ ॥

( १ ) आसन्दीं प्रकृत्य "औदुम्बरी भवति। अरत्नि सद्म्ना भवति वाल्वजीभी रज्जुभिर्व्युता भवतो" ( श० ब्रा० १४। १।३।१।११ ) ति श्रुतेः। "परिधर्म्यमौदुम्बरीम' ( का० श्रौ० २६।२।६ )त्यनेनासन्द्या अप्यौदुम्बरीत्वे सिद्धे अरत्निमात्राङ्गीत्वलाभाय पुनरौदुम्बर्या इत्युक्तम्।

( २ ) गार्हपत्यं पूर्वेण—गार्हपत्यात्पूर्वस्यां दिश्यदूरे प्राचः—प्रागग्रान्कुशानास्तीर्य द्वंद्वं पात्रासादनं—द्वाभ्यां द्वाभ्यां पात्राभ्यां पात्राणामासादनं कर्तव्यमित्यर्थः। "अपरेण गार्हपत्यं प्राचः कुशान्त्संस्तीर्य द्वंद्वं पात्राण्युपसादयत्युपयमनीं महावीरमि" ( श० ब्रा० १४।१।३।१)त्यादि श्रुतेः।

( ३ ) गोबन्धनार्था स्थूणा। अजाबन्धनार्थः शङ्कुः कीलको मयूखः। वत्सबर्करबन्धनार्थौ च द्वौ मयूखौ शंकू भवत ( १५।६।१४-१६ ) इत्यापस्तम्बः।

( ४ ) केचिदजाया अपि सन्दानमिच्छन्ति। एवं प्रतिप्रस्थाताऽजामि( का० श्रौ० २६।५।८ )त्येव पाठेन तस्यापि लाभात्। अपरे तु प्रयोजनाभावान्नेच्छन्ति।

आध्वर्यवपद्धतिः ।

तूष्णीं पवित्रकरणम् । समन्त्रं प्रोक्षणीः सᳪस्कृत्यो(१)द्यम्योत्थायाह ब्रह्मन्प्रचरिष्यामो होतर्घर्ममभिष्टुहि, प्रस्तोतः (२)सामानि गायेति ।

## ( महावीरप्रोक्षणं त्रिः । )

ॐ प्रचरेति ब्रह्मानुज्ञातो यमाय त्वेति महावीरं प्रोक्षति ।

हौत्रपद्धतिः ।

ततो होताऽऽचम्य पूर्वया द्वारा शालां प्रपद्य आसाद्यमानेषु महावीरपात्रेषु उत्तरेण गत्वा खरस्य पश्चादुपविश्य "होतरभिष्टुही"ति प्रेषितः "ॐप्रचरे"ति ब्रह्मणोक्ते (३)मकारान्तप्रणवामेकैकामनवानमभिष्टौति मध्यमया वाचा ।

"ॐ ब्रह्म यज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च वि वो३म् ।

ब्रह्म यज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवो३म् ।

ब्रह्म यज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो व्वेन आवः स बुध्न्या उपमा अस्य व्विष्ठाः सतश्च योनिमसतश्च व्विवो३म्(४) ।

इयं पित्रे राष्ट्र्येत्यग्रे प्रथमाय जनुषे भूम नेष्ठास्तस्या एतं सुरुचं ह्वारमह्यं घर्मं श्रीणन्ति प्रथमस्य धासो३म् ।

अभित्यं देवं सवितारमोण्योः कविक्रतुमर्चामि सत्यसवं रत्नधामभि प्रियं मतिं कविम् ।

---

( १ ) संस्कृत्येत्युपदेशात्कुशैः कुशौ छित्वाऽग्निहोत्रहवण्यामपः कृत्वा सव्यहस्ते कृत्वा तासामुद्‌गिनं प्रोक्षणं च इत्येत्यवावलम्ब्यते ।

( २ ) प्रस्तोतुः प्रैषः शाखान्तरात् ।

(३) होता ब्रह्मणानुज्ञातो ब्रह्मयज्ञानमित्याद्या एकोत्तरशतसङ्ख्याका ऋच अभिष्टौति मध्यमस्वरेणैकस्वरेण । तास्वृक्षु पूर्वार्धर्चस्यान्तिमाक्षरेण सहोत्तरार्धर्चस्यादिमवर्णस्य यथान्यायं (सन्ध्यक्षराणां तालुस्थाने आ ३ इकारौ भवतः, ओष्ठस्थाने आ ३ उकारौ भवतः, अन्यानि प्रकृत्याक्षराणि, एकारौकारौ च प्रगृह्या, याज्यान्ते, विसर्जनीयो रिफितो रेफमापद्यते, लुप्यतेऽरिफितः, अनुस्वारं मकारः, अन्यानि प्रकृत्या व्यञ्जनानि औकारो वषट्कारे चतुर्मात्रः, पकाराच्चोत्तरोऽकारः प्रकृत्या घोषौ, पूर्वो वा प्रकृत्या, प्रकृत्याकार इति जातूकर्ण्यः, बार्हतराथन्तरे वषट् कुर्यात्पुरस्ताद्दीर्घमुपरिष्टाद्ध्रस्वम्, उपरिष्टाच्च ये यज्ञामहादेवतादेशनं सपुरोऽनुवाक्ये, सप्रैषे तु न विद्यते । शां० श्रौ० सूत्र १।२।४-२० ) सन्धिं कृत्वावसानं विनैकैकामृचं पठेत् । ऋगन्ते ऋगन्ते मकारान्तं प्रणवं कृत्वाऽवसानं कुर्यात् ।

( ४ ) "त्रिप्रभृतिष्वृग्गणेषु प्रथमोत्तमयोस्त्रिर्वचनमन्यत्र जपेभ्य (शां०श्रौ० १।१।१८) इत्युक्तेरत्र ब्रह्मयज्ञानमित्यस्यास्त्रिरावृत्तिः ।

आध्वर्यवपद्धतिः ।

(१)प्रतिमन्त्रं वा वाक्यभेदादुपविश्य "ॐ यमाय त्वा प्रोक्षामि" "ॐ मखाय त्वा प्रोक्षामि" "ॐ सूर्यस्य त्वा तपसे प्रोक्षामि" ( शु० य० सं० ३७।१० ) ।

( स्थूणानिखननं खरयोर्निवपनं च )

परिधर्म्यं च तूष्णीं प्रोक्षति । नर्यशंसयोरन्तरा सपवित्रास्ता निदधाति। प्रतिप्रस्थाता पूर्वया द्वारा स्थूणामयूखं निर्हृत्य दक्षिणतो दक्षिणद्वारस्य पूर्वद्वार्यायाः स्थूणां तदुत्तरतो मयूखं निखनति होतुः सन्दर्शने(२) गार्हपत्याहवनीयौ उत्तरेण खरौ (३)निवपति तत्र पश्चिमखरे पञ्च भूसंस्कारान् कृत्वा प्रथमशरावस्थाः सिकताः निवपति पूर्वस्मिन्खरे तूष्णीं्याभ्युदय द्वितीयशरावस्थाः सिकता निवपति दक्षिणतोऽनुमित्युच्छिष्टखरम् । अत्राप्युल्लिख्याभ्युदय तृतीयशरावस्थाः सिकता निवपति पूर्वेणाहवनीयर्ठं सम्राडासन्दीं पर्याहृत्य दक्षिणतः प्राचीमासादयति राजासन्द्या उत्तरतः, कृष्णाजिनमस्यामास्तृणाति तस्मिन्नभ्युपशये निदधाति महावीरौ चावच्छादयेद्वा, अन्यो वा परिधर्म्ययोजनमध्वर्यां कालसमर्थैः ।

हौत्रपद्धतिः ।

ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः (४)कृपास्वो३म् ।

---

( १ ) भिन्नानि ह्येतानि यमाय त्वेत्यादीनि त्रीणि वाक्यानि नैकमतो वाक्यभेदात्प्रतिवाक्यं प्रोक्षणं युक्तम् । तथोक्तं शाङ्खायने "मन्त्रपृथक्त्वात्कर्मपृथक्त्व" (१।२।३४) मिति ।

( २ ) अत्राहापस्तम्बः—दक्षिणेन दक्षिणं द्वारं मेथीं निहन्ति होतुः समीक्षाण एतस्यैव द्वारस्य पूर्वस्यै द्वार्यायै दक्षिणतो वत्साय शङ्कुमेतस्यैवापरस्यै द्वार्यायै दक्षिणतोऽजाया अभ्यन्तरमुत्तरतो वर्करायेति । (१५।६।१३—१६) अतस्स्थूणां गोबन्धनार्थां द्वारं दक्षिणतो निखनति तस्यैव द्वारस्यापरद्वार्यां दक्षिणतोऽजाबन्धनार्थं मयूखमिति । तदुत्तरतो वर्कराय शङ्कुं पूर्वद्वार्यां दक्षिणतो वत्सस्य शङ्कुमिति ।

( ३ ) एको गार्हपत्यस्योत्तरतोऽरत्निमात्रात्परतः, अपर आहवनीयस्योत्तरतः । तत्र च गार्हपत्यसमीपवर्तिनि खरेऽग्निसंयोगात्पञ्च भूसंस्कारान्कृत्वा सिकतोपकिरणं कर्तव्यम्। अन्यत्र उद्धतावोक्षिते सिकतोपकिरणमित्येतावदेव । 'अथोत्तरतः सिकता उपकीर्णा भवन्ती' ( श० मा० १४।१।३।१४ ) ति । 'अथ खरे सादयत्यमेन्यस्म' ( श० मा० १४।२।२।३० ) इत्यादिषु सिद्धवच्छ्रुतत्वादत्र खरनिवापः सूचितः ।

( ४ ) स्वपास्वरिति वा ( शां० श्रौ० ५।९।११ ) पाठः

(१) पाणिनिव्याकरणे वादरत्नम् । न्यायव्याकरणाचार्य मीमांसक श्रीरामनि पं० सूर्यनारायणशुक्लेन विरचितम् । ( तत्र च न्याय परिष्कारपरिशिष्ट भेदेन प्रकरण द्वयम् यत्र पञ्चन्यून सार्धशतसूत्रेषु १९९ महत्वाक्षेपेन न्यायविदारिता उक्त प्रथमं प्रकरणं मुद्रित प्रथमो भाग । [ व्या० वि १० ] रु० १—८

(२) पाणिनी व्याकरणे वादरत्नम् । द्वितीयोभाग रु० १—४

गणितकौमुदी । [ हिन्दीभाषाटीकासहिता ] प्रथमापरीक्षापाठ्यनिर्धारितगणित संग्रहपुस्तकम् । [ गणित विभागे १ ] रु० ०—६

छन्दः कौमुदी । [ हिन्दीभाषाटीकासहिता ] प्रथमापरीक्षापाठ्यनिर्धारितछन्द संग्रहपुस्तकम् । [ छन्दोविभागे ३ ] रु० ०—६

३ योगदर्शनम् । महर्षिभगवत्पतञ्जलिप्रणीतम् । तत्र ( १ ) भाष्यवृत्ति, [ २ ] भावा गणेशवृत्ति, [३] नागोजीभट्टवृत्ति, [४] मणिप्रभा, [५] योगचन्द्रिका, [६] योगसुधाकराख्य टीका षट्कसमेतम् । सटिप्पण । [ योग० विभागे १ ] रु० ३—०

४ रघुवंशमहाकाव्यम् । श्रीकालिदासविरचितम् । म० म० मल्लिनाथकृत सञ्जीविनीटीका तथा परीक्षोपयोगि सुधाऽऽख्यव्याख्या सहित । १ से ४ सर्ग मूल्यम् रु० १-४-० तथा १ से ५ सर्ग रु० १—८ तथा ६ से १० सर्गः । रु० १—८

५ योगदर्शनम् । पं० श्रीबलदेवमिश्रकृत योगसूत्रप्रदीपिकाख्यव्याख्यया सहितम् । सटिप्पण । [ योग वि० २ ] १—०

६ काव्यमीमांसा । राजशेखरविरचिता । साहित्याचार्य पं० श्रीनारायणशास्त्रि खिस्ते कृत काव्यमीमांसा—चन्द्रिका टीका सहित [ १ से ५ अध्याय ] प्रथमो-भाग । [ काव्यविभाग १३ ] रु० ०—८

७ नागानन्दनाटकम् । श्रीहर्षदेवप्रणीतम् । काशीविश्वविद्यालयाध्यापकेन एम० ए० साहित्याचार्य पण्डित श्री बलदेव उपाध्यायेन स्वप्रणीतया भावार्थदीपिकाख्यया व्याख्यया समलङ्कृत्य बृहत् भूमिका हिन्दीभाषानुवादादिभि. सनाथीकृत्य सम्पादितम् । [ नाटक विभागे १ ] रु० १—४

८ मेघदूतकाव्यम् । महाकवि श्रीकालिदास विरचितम् । मल्लिनाथकृत सञ्जीविन्या, चारित्रवर्द्धनाचार्य विरचित चारित्रवर्द्धिन्या तथा साहित्याचार्य प० श्री नारायण शास्त्री खिस्तेकृत भावप्रबोधिनाख्यव्याख्या टिप्पण्या च सहितम् । [ काव्य०४ ] रु० १—८

९ आगदीशोऽन्यधिकरणम् । न्यायाचार्यश्रीशिवदत्तमिश्रविरचित गगाख्यव्याख्या टिप्पण्या सहितम् । ( न्यायविभागे २ ) रु० २—०

१० काव्यकल्पलतावृत्ति । श्रीअमरचन्द्रयतिनिर्मिता अरिसिंहकृतसूत्रसहिता । ( अलङ्कारविभागे ४ ) रु० १—४

११ वैयाकरणसिद्धान्तचन्द्रिका । श्रीरामाश्रमप्रणीता । श्रीमत्सदानन्दकृत-सुबोधिन्या, श्रीलोकेशकरकृत-तत्त्वदीपिकया व्याख्यया च सहिता । पं० श्रीनवकिशोरशास्त्रिणा-निर्मितया चक्रधराख्य महत्या टिप्पण्या अव्ययार्थमालया लिङ्गानुशासनप्रक्रियया शब्दादिकोषेण च सहिता । (व्या० वि० ११) पूर्वार्द्धम् । रु० २—८ उत्तरार्द्ध । रु० २—८

१२ त्रिपुरारहस्यम् ( माहात्म्यखण्डम् ) साङ्ख्ययोगशास्त्राचार्य श्रीमुकुन्दलाल शास्त्रिणा संशोधितम् । साहित्याचार्य खिस्ते-इत्युपाख्य पं० श्रीनारायणशास्त्रिणा निर्मिताभ्यां भूमिकाऽध्यायानुक्रमणिकाभ्यां च सहितम् । (पुराणेतिहास वि०१) रु० १—०

१३ आपस्तम्बधर्मसूत्रम् । श्रीहरदत्तमिश्र विरचितया उज्ज्वलाख्यया वृत्त्या संवलितम् । ( कर्मकाण्डविभागे ७ ) रु० ४—०

१४ अवच्छेदकत्वनिरुक्ति । श्रीजगदीशतर्कालङ्कारकृता । न्यायाचार्य श्रीशिवदत्त मिश्रविरचित गंगाख्यव्याख्या टिप्पणी सहित । ( न्याय वि० १३ ) रु० १—४

९५ संस्काराद्दीपकः । म० म० पण्डित श्रीनित्यानन्दपन्त पर्वतीयविरचितः । सम्पूर्णः
( कर्मकाण्ड वि० ८ ) ६

९६ वर्षकृत्यदीपकः । कालनिर्णयसतोषापनसहितः । म० म० पं० नित्यानन्दपन्त पर्वतीय विरचितः । ( कर्मकाण्ड वि० ९ ) १

९७ श्रौतसूत्रम् । श्रीमन्महर्षि-कात्यायनप्रणीतमग्निष्टोमान्तम् । (कर्मं० वि० १०) १

९८ नलचम्पूः अथवा दमयन्तीकथा । महाकविश्रीत्रिविक्रमभट्टविरचिता । विषमपदप्रकाशाख्यव्याख्यया सहिता । भावबोधिनी टिप्पणी सहिता । (का० वि०१५)

९९ ब्रह्मसूत्रम् । श्रीभगवन्निम्बार्क महामुनीन्द्रविरचित वेदान्तपारिजात सौरभाख्यसूत्रवाक्यार्थेन श्रीश्रीनिवासाचार्यचरणप्रणीत श्रीवेदान्तकौस्तुभभाष्येण सनाथीकृतम् । ( श्रीनिम्बार्कभाष्यम् ) ( वेदान्त वि० १० ) १

१०० वाग्वल्लभः । सर्वथाऽपि नवीनोऽपूर्वः प्रौढः परमोपयोगितया नियतमुपादेयतमश्छन्दोनिबन्धः, श्रीमता देवशर्मेसरेणागममार्मिकेण कविपुङ्गवेन दुःखभञ्जनविदुषविरचितः, तत्सुनेन बहुशास्त्रपारगेण कविचक्रवर्तिना महामहोपाध्यायेन देवीप्रसादपण्डितप्रवरेण कृतया वरवर्णिन्या टीकयोपस्कृतः । ( छन्दः शास्त्र वि० ४ ) ५

१०१ सिद्धान्तलक्षणम् । श्रीजगदीशतर्कालङ्कारकृतम् । न्यायाचार्य श्रीशिवदत्तमिश्रविरचित गंगाख्यव्याख्या टिप्पणी सहितम् । ( न्याय विभागे ४ ) ) ६

१०२ वेदभाष्यभूमिकासंग्रहः । ( सायणाचार्यविरचितानां ऋग्वेदभाष्यभूमिकानसंग्रहः ) । [ वेद० वि० ५ ]

१०३ माधवीयधातुवृत्तिः । श्रीमत्सायणाचार्यविरचिता । ( व्या० वि० १२) ८

१०४ बौधायनधर्मसूत्रम् । श्रीगोविन्दस्वामिप्रणीतविवरणसमेतम् । [कर्मं०वि० ११] ८

१०५ ताण्ड्यमहाब्राह्मणम् । सायणाचार्यविरचितभाष्यसहितम् । ( प्रथमोभागः )
( वेद वि० ६ ) ६

१०६ न्यायमञ्जरी । जयन्तभट्टकृता । न्याय-व्याकरणाचार्येण पं० सूर्यनारायणशास्त्रिकृतया टिप्पण्या समेता । द्वितीयोभागः । [ व्या० वि० १५ ] ६

१०७ शारदातिलकम् । श्रीमद्राघवभट्टकृतपदार्थादर्शटीकासहितम् ।
( तन्त्रशा० वि० १ ) ६

१०८ मन्त्रार्थदीपिका । म० म० श्रीशत्रुघ्नविरचिता । ( वेद० वि० ७ ) ६

१०९ शब्दशक्तिप्रकाशिका । श्रीमज्जगदीशतर्कालङ्कारविनिर्मिता । श्रीकृष्णकान्तविद्यावागीशकृतया कृष्णकान्तीटीकया श्रीमद्रामभद्रसिद्धान्तवागीशविरचितया रामभद्रीटीकया च समलङ्कृता । न्यायाचार्य काव्यतीर्थ पं० ढुण्डिराजशास्त्रिकृतया छात्रोपयुक्तया विषमस्थलटिप्पण्या मूलकारिकार्थेन च सहिता ।
(न्या वि० १६) ६

११० योगदर्शनम् ( पातञ्जलदर्शनम् ) भगवत्पतञ्जलिरचित, राघवानन्दसरस्वतीकृत "पातञ्जलरहस्याख्य"टिप्पनीयुक्तया द्वादशदर्शनकाननपञ्चाननवाचस्पतिमिश्रविरचितया "तत्त्ववैशारद्या"व्याख्यया भूषितेन विज्ञानभिक्षुनिर्मित"योगवार्तिक"समुद्भासितेन मधुपुरीयकापिलमठस्थस्वामिहरिहरानन्दारण्यकृतभास्वतीवृत्त्या सहितेन भगवच्छ्रीकृष्णद्वैपायनव्यासदेवोक्त-"सांख्यप्रवचन" भाष्येणानुमोदितम्, प्रदेशविशेषेषु श्रीमन्माध्वसम्प्रदायाचार्य-दार्शनिकसार्वभौम-साहित्यदर्शनाचार्य-तर्करत्न-न्यायरत्न-गोस्वामिदामोदरशास्त्रिणा विहितया टिप्पन्या "पातञ्जलप्रभा"नामिकया भूमिकया च संवलितम्, एतदीयसंशोधनसम्पादनकर्मोद्दृतं च । ( योगशास्त्रविभागे १ ) ६०

THE

# CHOWKHAMBA SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS

NO. 455.

# अग्निष्टोमपद्धतिः ।

वामनाचार्यविरचिता कर्कानुसारिणी

आध्वर्यवपद्धतिः ।

नानाभाई इत्युपनामक रामकृष्णत्रिपाठिकृता

औद्गात्रपद्धतिः ।

तथा

रघुनाथद्विवेदिनिर्मिता शाङ्खायनसूत्रानुसारिणी

हौत्रपद्धतिः ।

# Agnistoma Paddhati

Consisting of (i) ĀDHVARYAVA PADDHATI by Vāmanācharya, (ii) AUDGATRA PADDHATI by Rāmakrṣṇa Tripāṭhī Nānābhāi and (iii) HAUTRA PADDHATI following the Sāmkhyāyana Sūtras by Raghunātha Drivedī.

*Edited with notes etc., by*

PANDIT BHAGAVAT PRASĀDA S'ARMĀ,
Vedāchārya, Professor of Veda,
Government Sanskrit College, Benares.

FASCICULAS. II–२

*PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBA SANSKRIT SERIES OFFICE,
*Benares City.*
1937

श्रीः

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितमध्यामलपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकः ४५५.

*Printed by Jai Krishna Das Gupta*
*at the Vidya Vilas Press, Benares.*

आध्वर्यवपद्धतिः

## ( महावीराञ्जनम् । )

एतदन्तं स्यातामध्वर्युब्रह्माणावाज्यसंस्कारा(१)दि युगपत्कुरुतः ।

अध्वर्युः-निरूप्याज्यं गार्हपत्येऽधिश्रित्य स्रुवं सम्मृज्योद्वास्योत्पूया-ऽवेक्ष्याञ्जन्तो ( ऋ० ५।४३।७ ) स्तुव्यमाने देवस्त्वेत्यनक्ति महावीर ᳚ स्रुवेण ।

"ॐ देवस्त्वा सविता मध्वानक्तु" ( ३७।११ )

रजतशतमानं खर उपगूहति पृथिव्याः स᳚स्पृश इति।

"ॐ पृथिव्याः स᳚स्पृशस्पाहि" ( ३७।११ ) ।

औद्गात्रपद्धतिः ।

अथ यदा देवस्त्वा सविता मध्वानक्त्विति महावीरमञ्जन्ति तदा हावाञ्जेति शार्ङ्गं त्रिर्गायेत् । शार्ङ्गाऽऽरूढवदाङ्गिरसे वा त्रिरभ्यस्येदन्तरा पराचा (२।१।३) इति द्राह्यायणः ।

शार्ङ्गस्य कक्षीवान् ऋषिः जगती छन्दः घर्मो देवता घर्माञ्जने विनियोगः ।

हॉनाञ्जाँ । ता २३४ यि । विँयॅञ्जेर्ते सेॅमँञ्जेर्ते । पेहियाँ पहियाँ ३४ १ हाउ कातूम् । रो २३४ यि । हन्ति मधुँर्वाभिँयॅजॅर्ते । पंहियाँ पहियाँ ३४ ॥ हॉउसायि धोः । ऊं २३४ त् । इवा से पैतेयॅन्तमुक्षॅणम् । पहियाँ । पाहियाँ ३४ । हॉ उ हा यि रा । एग्नो २३४ पार्वोः पॅत्रुमॅप्सु गृभ्णॅर्ते । पहियाँ । पहियाँ ३।४ । हाउ हॉ ५ इ । डा(२) ॥

हौत्रपद्धतिः ।

अञ्जन्ति यं प्रथयन्तो न विप्रा वपावन्तं नाग्निना तपन्तः पितुर्न पुत्र उपसि प्रेष्ठ आ घर्मो अग्निमृतयन्नसादीत्(३)" ॥

इति विलेऽज्यमाने ।

---

(१) आज्यसंस्कारश्च पूर्णाहुतिधर्मेणेति कर्कवासुदेवसम्प्रदायकारादयः । अग्निहोत्रधर्मेणेति केचित् । तन्नोपपद्यते—आज्यं संस्कृत्येत्युपदेशादाज्यं प्रकृत्य ये संस्कारा उक्ता 'निरूप्याज्यमित्यादय' (का०श्रौ० ४।१०।९) स्तेषामेव ग्रहीतुमुचितत्वात् । प्रधानभूतस्य यागस्यापूर्वत्वेन यावदुक्तत्वेन च तत्साधनद्रव्यस्य संस्काराप्राप्तेराज्यं संस्कृत्येति वचनम् । तथाचाहापस्तम्ब.—"दर्विहोमसंस्कारेणाज्यं संस्करोति नैतस्य संस्कारो विद्यत इत्यपर" ( १५।६।७–८ ) मिति ।

( २ ) छ० आ० ६, २, २, ११—गे० गा० १६।२।३३ ॥

( ३ ) ऋ० ५।४३।७। एतामृचं महावीरपात्रमुखाञ्जनात्पूर्वमारभ्य महावीरपात्रमुखे घृतेनाज्यमाने पठेत् । यद्यपि शाङ्खायनश्रौतकल्पे "अञ्जन्ति यमिति विलेऽज्यमाने" (५।९।१२)ऋक्पाठोऽभिहितस्तथापीयमृगभ्यञ्जनात्पूर्वमेवारब्धव्या, अध्वर्युवचनात् ।

आध्वर्यवपद्धतिः ।

शुक्रं गायेति प्रेष्यति(१) । शुक्रं गाय । पत्नी शिरः प्रोर्णुते ।

सं सीदस्वेत्युच्यमाने गार्हपत्ये मुञ्जप्रलवान् द्विगुणानादीप्य प्रति दिशं खरे करोति तेषु महावीरमाज्यवन्तमर्चिरसीति ।

"ॐ अर्चिरसि शोचिरसि तपोऽसि" ( ३७।११ ) ।

अनाधृष्टेति वाचयति प्रादेशमध्यधि धारयन्तम् ॥

"ॐ अनाधृष्टा पुरस्तादग्नेराधिपत्य आयुर्मे दाः ।

पुत्रवती दक्षिणतऽइन्द्रस्याधिपत्ये प्रजां मे दाः ॥

सुषदा पश्चाद् देवस्य सवितुराधिपत्ये चक्षुर्मे दाः ।

आश्रुतिरुत्तरतो धातुराधिपत्ये रायस्पोषं मे दाः ।

विधृतिरुपरिष्टाद् बृहस्पतेराधिपत्य—

औद्गात्रपद्धतिः ।

रजत उपधीयमाने (२)नियुत्वानिति शुक्रं सकृद्गायेत् ।

शुक्रसाम्नः शुक ऋषिः गायत्री छन्दः घर्मो देवता शुक्रपरिधाने विनियोगः।

हाँउ३ । शुक्रम् । ३ । शुक्रं शुक्रम् । २ । शुक्रं शुक्रम् । शुक्रं शुक्रम् । २ । शुक्रं शुक्रम् । नियुत्वान्वायवा ३ यो गो । १ ह्वी २ अयठं० शुक्रो । अ ३ यामो १ यिता २ यि । गन्तासि सुन्वा ३ तो गृ १ हा २३ म् । हाँउ शुक्रम् ।३। शुक्रठं० शुक्रम् ।२। शुक्रं शुक्रम् । शुक्रं शुक्रम् । शुक्रं शुक्रम् । । २ । शुक्रम् । शू २। क्रा २३४ औहोवा । ए शुक्रं ।३।७। ए । शुक्रं । ए शुक्रम्(ः) ॥

हौत्रपद्धतिः ।

"सं सीदस्व महाँ असि शोचस्व देववीतमोविधूममग्ने अरुषं मियेध्य सृज प्रशस्तदर्शतो३म्"(४) ।

इति खरे साद्यमाने ।

---

तथा च शातपथी श्रुतिः—"स यत्रैताᳬंहोतान्वाह अञ्जन्ति यं प्रथयन्तो न विप्रा इति तदेतं प्रवरगीयं महावीरमाज्येन समनक्ती" ( १४।१।३।१३ )ति ।

एवं "संसीदस्वे"ति सिकतोपकीर्णे प्रज्वाल्य स्थापितेषु मुञ्जप्रलवेष्वाज्यपूर्णे महावीरभाण्डे साद्यमाने ऋक्पाठोऽभिहितस्तथाप्यध्वर्युवशात्सादनात्पूर्वमेव आरब्धव्यः सं सीदस्वेति ।

तथा च शातपथी श्रुतिः—"स यत्रैताᳬंहोतान्वाह सं सीदस्व महाँ२॥ असीति तदुभय आदीप्ताः मौञ्जाः प्रलवा भवन्ति तानुपास्य तेषु प्रवृणक्ती"(१४।१।३।१९) ति।

( १ ) अयं प्रैषः शाखान्तरात् ।

( २ ) रजतआतरूपे उपदधाति तच्छुक्रचन्द्रे ( द्रा०श्रौ० २।२।२६ ) ।

( ३ ) आ० गा० १।२।६—आ० गा० ३।२।७। ( ४ ) ऋ० १।३६।९ ।

आध्वर्यवपद्धतिः।

ओजो मे दाः" ( ३७।१२ ) इति ब्रूहि।

यजमानः प्रादेशं महावीरोपरि धारयन् पठति-

"ॐ अनाधृष्टा पुरस्तादग्नेराधिपत्य आयुर्मे,दाः।

पुत्रवती दक्षिणतऽइन्द्रस्याधिपत्ये प्रजां मे दाः॥

सुखदा पश्चाद् देवस्य सवितुराधिपत्ये चक्षुर्मे दाः।

आश्रुतिरुत्तरतो धातुराधिपत्ये रायस्पोषं मे दाः॥

विधृतिरुपरिष्टाद् बृहस्पतेराधिपत्य ओजो मे दाः"(३७।१२)।

विभज्य वाचनं। प्रतिदिशमेके, तदोपर्येकम्।

विश्वाभ्यो मेति दक्षिणत उत्तानं पाणिं निदधाति यजमानः।

"ॐ विश्वाभ्या मा नाष्ट्राभ्यस्पाहि" ( ३७।१२ )।

मनोरश्वेति प्रादेशमुत्तरतो निदधाति यजमान एव।

"ॐ मनोरश्वासि" ( ३७।१२ )।

अध्वर्युः—धृष्टिभ्यां गार्हपत्यस्य भस्मना महावीरं सर्वतः परिकीर्याङ्गारैश्च विकङ्कतशकलैः परिश्रयति त्रयोदशभिः प्रागुदग्भिः स्वाहा मरुद्भिरिति।

"ॐस्वाहा मरुद्भिः परिश्रीयस्व" ( ३७।१३ )।

द्वौ मन्त्रेण प्राञ्चौ ततस्तूष्णीं द्वावुदञ्चौ द्वौ प्राञ्चौ द्वावुदञ्चौ द्वौ प्राञ्चौ द्वावुदञ्चौ,अधिकं दक्षिणतः। एकं सुवर्णशतमानेनापिदधाति दिवः सꣳस्पृश इति।

"ॐदिवः सꣳस्पृशस्पाहि" ( ३७।१३ )।

हौत्रपद्धतिः।

"भवा नो अग्ने सुमना उपेतौ सखेव सख्ये पितरेव साधुः पुरुद्रुहा हि क्षितयो जनानां प्रति प्रतीचीर्दहतादरातो३म्(१)।

तपो ष्वग्ने अन्तराँ अमित्राँ तपा शंसमररुषः परस्य तपो वसो चिकितानो अचित्तान्वि ते तिष्ठन्तामजरा अयासो३म्।

यो नः सनुत्यो अभिदासदग्ने यो अन्तरोमित्रमहो वनुष्यात्तमजरेभिर्वृषभिस्तव स्वैस्तपा तपिष्ठ तपसा तपस्वो३म्"(२)।

इत्यङ्गारेषूपोह्यमानेषु।

"कृणुष्व पाजः प्रसितिन्न पृथ्वीं याहि राजेवामवाँ इभेन "तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठो३म्।

( १ ) ऋ० ३।१८।१—२। अध्वर्युणा धृष्टिभ्यां गार्हपत्याङ्गारेषु महावीरं परिकीर्यमाणेषु "भवा नः" इत्याद्यास्तिस्रः पठेत्। ( २ ) ऋ० ६।५।४।

आध्वर्यवपद्धतिः ।

चन्द्रं गायेति च प्रेष्यति ॥

इन्द्रं गाय । कृष्णाजिनावकृत्तैर्धविश्रैरुपवाजयति(१) त्रिभिर्दंरड· वद्भिर्मधु मध्विति ।

औद्गात्रपद्धतिः ।

हिरण्यरुक्म उपधीयमाने अश्राद् गोरमन्वतेति चन्द्रं सकृद्गायेत् । चन्द्र ऋषिः गायत्री छन्दः घर्मोदेवता--

हाँ उ ।३। चन्द्रं ।३। चैन्द्रं चन्द्रम् ।२। चैन्द्रं चन्द्रम् । चैन्द्रं चोन्द्रम ।२। चैन्द्रं चोन्द्रम् । अंश्राद्गोरमोन्वा १ ता २ नाँमत्वष्टुरा३पीयिचाँ १ ५

हौत्रपद्धतिः ।

तव भ्रमास आशुया पतन्त्यनु स्पृश धृषता शोशुचानस्तपूंष्यग्ने जुह्वा पतङ्गानसन्दितो विसृज विष्वगुल्कोा३म् ।

प्रति स्पशो विसृज तूर्णितमो भवा पायुर्विशो अस्या अदब्धो यो नो दूरे अघशंसो यो अन्त्यग्ने माकिष्टे व्यथिरा दधर्षोा३म् ।

उदग्ने तिष्ठ प्रत्यातनुष्व न्यमित्राँ ओषतात्तिग्महेते यो नो अरातिं स· समिधान चक्रे नीचा तं धक्ष्यत सन्न शुष्कोा३म् ।

ऊर्ध्वो भव प्रतिविध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्नेऽव स्थिरा त· नुहि यातुजूनां जामिमजामिं प्रमृणीहि शत्रूोा३म्(२) ।

परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतोवृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयोा३म्(३) ।

अधि द्वयोरदधा उक्थं वचो यतस्रुचा मिथुना या सपर्यतोऽसंयत्तो व्रते ते क्षेति पुष्यति भद्रा शक्तिर्यजमानाय सुन्वतोा३म्(४) ।

शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तोा३म्(५) ।

अर्हन्बिभर्षि सायकानि धन्वार्हन्निष्कं यजतं विश्वरूपमर्हन्निदं दयसे विश्वमभ्वं न वा ओजीयो रुद्र त्वदस्तोा३म्(६) ।

पतङ्गमक्तमसुरस्य मायया हृदा पश्यन्ति मनसा विपश्चितः समुद्रे अन्तः कवयो विचक्षते मरीचीनां पदमिच्छन्ति वेधसोा३म् ।

पतङ्गो वाचं मनसा बिभर्ति तां गन्धर्वोऽवदद्गर्भे अन्तस्तां द्योतमानां

(१) "अथ धवित्रैराधुनोति मधु मध्विति त्रि" (श०ब्रा० १४।१।३।३०) रिति श्रुत· त्वात् । 'धूञ् कम्पने' धुनोत्यनेनेति धवित्रं व्यजनम् । करण इत्यनुवर्तमाने "अर्ति लू धू सून खन सह चर इत्रः" (पा० ३।२।१८४) इतीत्रः प्रत्ययः करणेऽर्थे ।

(२) ऋ० ४।४।१–५ । (३) ऋ० १।१०।१२ ।

(४) ऋ० १।८३।३ । (५) ऋ० ६।५८।१ । (६) ऋ० २।३३।१०

आध्वर्यवपद्धति ।

"ॐ मधु मधु मधु ( ३७।१३ ) आधूनोमि" ।

एक प्रयच्छति प्रतिप्रस्थात्रे ऽपरमग्नीधे धून्वन्तस्त्रिस्त्रिः परिक्रामन्ति पितृवत्(१)नापसव्यम्, उदकोपस्पर्शः । देववच्च त्रि, अन्ते इतरथावृत्ति (२)

औद्गात्रपद्धति ।

यारम् । इत्था चन्द्रमा २ सो गृं १ ह्वा २३ यि । हों उ ३ । चन्द्रम् ।३। चन्द्र चन्द्र ।२। चन्द्र चन्द्रम् । चन्द्र चन्द्रौं । २ । चंद्र चौरद्वा २३४ आ हो या । प । चन्द्रम् । ३ ।(३)

हौत्रपद्धति ।

स्वयं मनीषामृतस्य पदे कवयो निपान्तो३म् ।

अपश्य गोपामनिपद्यमानमा च परा च पथिभिश्चरन्त स सध्रीचो सविषूचीर्वसान आ वरीवर्ति भुवनेष्वन्तो३म्(४) ।

(५)स्रक्के द्रप्सस्य धमतः समस्वरन्नृतस्य योना समरन्त नाभयः त्रीन्त्स मूर्ध्नो असुरश्चक्र आरभे सत्यस्य नाव सुकृतमपीपरो३म् ।

सम्यक् सम्यञ्चो महिषा अहेषत सिन्धोरूर्मावधि वेना अवीविपन्मधोर्धाराभिर्जनयन्तो अर्कमित्प्रियामिन्द्रस्य तन्वमवीवृधो३म् ।

पवित्रवन्तः परि वाचमासते पितैषा प्रत्नो अभिरक्षति व्रतमहः समुद्रं वरुणस्तिरोदधे धीरा इच्छेकुर्धरुणेष्वारभो३म् ।

सहस्रधारेऽव ते समस्वरन्दिवो नाके मधुजिह्वा असश्चतोऽस्य स्पशो न निमिषन्ति भूर्णय पदे पदे पाशिन सन्ति सेतवो३म् ।

पितुर्मातुरध्या ये समस्वरन्नृचा शोचन्त सदहन्तो अव्रतानिन्द्र द्विष्टामप धमन्ति मायया त्वचमसिक्नीं भूमनो दिवस्परो३म् ।

प्रत्नान्मानादध्या ये समस्वरञ्छ्लोकयन्त्रासो रभसस्य मन्तवोऽपानक्षासो बधिरा अहासत ऋतस्य पन्था न तरन्ति दुष्कृतो३म् ।

सहस्रधारे वितते पवित्र आ वाच पुनन्ति कवयो मनीषिणो रुद्रास एषामिषिरासो अद्रुह स्पश स्वञ्च सुदृशो नृचक्षसो३म् ।

ऋतस्य गोपा न दभाय सुक्रतुस्त्री ष पवित्रा हृद्यन्तरा दधे विद्वान्स

---

(१) 'अथापसव्यं त्रिधून्वन्ति' "पुनः प्रसलवि त्रिधून्वन्ता' ( श० ब्रा० १४।१।३।३१-३२ )ति च श्रुतेः । अपसलवि-अप्रदक्षिणं प्रसलवि-प्रदक्षिणमिति । एतयोर्थयोरेतौ शब्दौ अव्ययसञ्ज्ञौ । नात्रापसव्यं, अप्रदक्षिणप्रदक्षिणपरिक्रमणमात्रश्रवणात् पितृवदित्यस्य वाक्यमात्रार्थत्वप्रतीतेः ।

( २) "विवृत्याऽऽवृत्य वेतरयाऽऽवृत्ति" (का० श्रौ०१।८।२४)रिति परिभाषोक्तेः ।

( ३ ) ऊ० आ० २, २, १, ३,-आ० गा० ३। २, ८ ।

( ४ ) ऋ० १०।१७७।१-३ । ( ५ ) ऋ० ९।७३।१-९ ।

आध्वर्यवपद्धतिः ।

रुचिते.घोसरम् । अर्चिषि प्राप्ते सुवर्णशतमानं भूमौ निधायाज्येन महावीरं परिषिञ्चति स्रुवेण प्रतिप्रणवम् ।

हौत्रपद्धतिः ।

विश्वा भुवनाभि पश्यत्यपाजुष्टान्विध्यति कर्ते अव्रतो३म् ।

ऋतस्य तन्तुर्विततः पवित्र आजिह्वाया अग्रे वरुणस्य मायया धीराश्चित्तत्समिनक्षन्त आशतात्रा कर्तमव पदात्यप्रभो३म् ।

पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतोऽतप्ततनूर्न तदामो अश्नुते श्टतास इद्वहन्तस्तत्समाशतो३म् ।

तपोष्पवित्रं विततं दिवस्पदे शोचन्तो अस्य तन्तवो व्यस्थिरन्नवन्त्यस्य पवीतारमाशवो दिवस्पृष्ठमधि तिष्ठन्ति चेतसो३म्(१) ।

वि यत्पवित्रं धिषणा अतन्वत घर्मं शोचन्तं प्रणवेषु विभ्रतः समुद्रे अन्तरायवो विचक्षणं त्रिरह्नो नाम सूर्यस्य मन्वतो३म्(२) ।

अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने इममपां सङ्गमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्तो३म् ।

समुद्रादूर्मिमुदियर्ति वेनो नभोजाः पृष्ठं हर्यतस्य दर्शि ऋतस्य सानावधि विष्टपि भ्राट् समानं योनिमभ्यनूषत व्रो३म् ।

समानं पूर्वीरभि वावशानास्तिष्ठन्वत्सस्य मातरः सनीळाः ऋतस्य सानावधि चक्रमाणा रिहन्ति मध्वो अमृतस्य वाणो३म् ।

जानन्तो रूपमकृपन्त विप्रा मृगस्य घोषं महिषस्य हि ग्मन्नृतेन यन्तो अधि सिन्धुमस्थुर्विदद्गन्धर्वो अमृतानि नामो३म् ।

अप्सरा जारमुपसिष्मियाणा योषा बिभर्ति परमे व्योमन्श्चरत्प्रियस्य योनिषु प्रियः सन्त्सीदत्पक्षे हिरण्यये स वेनो३म् ।

ऊर्ध्वो गन्धर्वो अधि नाके अस्थात्प्रत्यङ्चित्रा बिभ्रदस्यायुधानि वसानो अत्कं सुरभिं दृशे कं स्वर्ण नाम जनत प्रियाणो३म् ।

द्रप्सः समुद्रमभि यज्जिगाति पश्यन् गृध्रस्य चक्षसा विधर्मन् भानुः शुक्रेण शोचिषा चकानस्तृतीये चक्रे रजसि प्रियाणो३म्(३) ।

गणानां(४) त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमं ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनो३म् ।

देवाश्चित्ते असुर्य प्रचेतसो बृहस्पते यज्ञियं भागमानशुः उस्रा इव सूर्यो ज्योतिषामहो विश्वेषामिज्जनिता ब्रह्मणामसो३म् ।

(१) ऋ० ९।८३।१-२ । (२) शा०श्रौ० ५।१।२० ।

(३) ऋ० १०।१२३।१-८ । नाके सुपर्ण(६)मिति परिहाप्य ।

(४) ऋ० २।२३।१-११ ।

आध्वर्यवपद्धतिः ।

अथ प्रतिप्रस्थाता गार्हपत्यस्य प्रत्यङ्ङुपविश्य रौहिणावधिश्रयति (१)तूष्णीं श्रामपिष्टानाम् । आज्यधर्माः स्थानापत्तेरौषधधर्मा वा संस्कारशब्दात् । तूष्णीं पदार्थाः सर्वे ।

हौत्रपद्धतिः ।

आ विबाध्या परिरापस्तमांसि च ज्योतिष्मन्तं रथमृतस्य तिष्ठसि बृहस्पते भीममभित्रदम्भनं रक्षोहणं गोत्रभिदं स्वर्विदो३म् ।

सुनीतिभिर्नयसि त्रायसे जनं यस्तुभ्यं दाशान्न तमंहो अश्नवद्ब्रह्मद्विषस्तपनो मन्युमीरसि बृहस्पते महि तत्ते महित्वनो३म् ।

न तमंहो न दुरितं कुतश्चन नारातयस्तितिरुर्न द्वयाविनोविश्वा इदस्माद्ध्वरसो वि बाधसे यं सुगोपा रक्षसि ब्रह्मणस्पतो३म् ।

त्वं नो गोपाः पथिकृद्विचक्षणस्तव व्रताय मतिभिर्जरामहे बृहस्पते यो नो अभि ह्वरो दधे स्वा तं मर्मर्तु दुच्छुना हरस्वतो३म् ।

उत वा यो नो मर्चयादनागसोऽरातीवा मर्तः सानुको वृकोबृहस्पते अप तं वर्तया पथः सुगं नो अस्यै देववीतये कृधो३म् ।

त्रातारं त्वा तनूनां हवामहेऽवस्पर्तरधिवक्तारमस्मयुं बृहस्पते देवनिदो नि बर्हय मा दुरेवा उत्तरं सुम्नमुन्नशो३म् ।

त्वया वयं सुवृधा ब्रह्मणस्पते स्पार्हा वसु मनुष्या ददीमहि या नो दूरे तळितो या अरातयोऽभि सन्ति जम्भया ता अनप्नसो३म् ।

त्वया वयमुत्तमं धीमहे वयो बृहस्पते पप्रिणा सस्निना युजा मा नो दुःशंसो अभिदिप्सुरीशत प्र सुशंसा मतिभिस्तारिषीमहो३म् ।

अनानुदो वृषभो जग्मिराहवं निष्टप्ता शत्रुं पृतनासु सासहिरसि सत्य ऋणया ब्रह्मणस्पत उग्रस्य चिद्दमिता वीळुहर्षिणो३म् ।

अदेवेन मनसा यो रिषण्यति शासामुग्रो मन्यमानो जिघांसति बृहस्पते मा प्रणक्तस्य नो वधो नि कर्म मन्युं दुरेवस्य शर्धतो३म् ।

भरेषु हव्यो नमसोपसद्यो गन्ता वाजेषु सनिता धनं धनं विश्वा इदर्यो अभिदिप्स्वो मृधो बृहस्पतिर्वि ववर्हा रथाँ इवो३म् ।

तेजिष्ठया तपनी रक्षसस्तप ये त्वा निदे दधिरे दृष्टवीर्यमाविस्तत्कृष्व यदसत्त उक्थ्यं बृहस्पते वि परिरापो अर्दयो३म् ।

(१) तूष्णीं मन्त्रकम् । "अपयन्ति रौहिणा" (श० ब्रा० १४।१।२।२१) विति श्रुते रौहिणावधिश्रपतीत्युक्तं "अथातो रौहिणौ जुहोती" (श० ब्रा० १४।२।१।१) ति जुहोतिस्थाहेव मन्त्राभावे सिद्धे समन्त्रककर्मान्तःपातेन समन्त्रकत्वाशङ्काव्युदासार्थं तूष्णीमिति पुष्कलम् । श्रामपिष्टानामित्युक्तत्वात्पिष्टानामेवात्रासादनग्रहणादिकर्तव्यं न व्रीहीणां यवानां वा ।

आध्वर्यवपद्धतिः।

तद्यथा-स्फ्योपहितपात्र्यामोपधकरणम्, पात्रान्तरे प्रोक्षणीरुन्नीय शूर्पाग्निहोत्रहवण्योरादानम्, वाग्यमनम्, प्रतपनम्, उदकस्पर्शः, गमनम्, विलालम्भः, ईक्षणं, अपद्रव्यनिरसनम्, अभावेऽभिमर्शनम्, उदकस्पर्शः, पिष्टालम्भनम्, चतुर्मुष्टिकद्वयस्य ग्रहणम्, शेषाभिमर्शनम्, प्राङ्मीक्षणं, उत्थानम्, यमनम्, पश्चात्सादनम्, स्थापितप्रोक्षणी

हौत्रपद्धतिः।

बृहस्पते अति यदर्यो अर्हाद्युमद्विभाति क्रतुमज्जनेषु यद्दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रो३म्।

मा नः स्तेनेभ्यो ये अभि द्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुरा देवानामोहत वि व्रयो हृदि बृहस्पते न परः साम्नो विदो३म्।

विश्वेभ्यो हि त्वा भुवनेभ्यस्परि त्वष्टाजनत्साम्नः साम्नः कविः स ऋणचिदृणया ब्रह्मणस्पतिर्द्रुहो हन्ता मह ऋतस्य धर्तरो ३ म्।

तव श्रिये व्यजिहीत पर्वतो गवां गोत्रमुदसृजो यदङ्गिरः इन्द्रेण युजा तमसा परीवृतं बृहस्पते निरपामौब्जो अर्णवो ३ म्।

ब्रह्मणस्पते त्वमस्य यन्ता सूक्तस्य बोधि तनयं च जिन्व विश्वं तद् भद्रं यदवन्ति देवा बृहद्वदेम विदथे सुवीरो ३ म् (१)।

का राधद्धोत्राश्विना वां को वां जोष उभयोः कथा विधात्यप्रचेतो३म्।

विद्वांसाविद्दुरः पृच्छेदविद्वानित्थापरो अचेताः नू चिन्नु मर्ते अक्रौ ३ म्।

ता विद्वांसा हवामहे वां ता नो विद्वांसा मन्म वोचेतमद्य प्रार्चद्दय मानो युवाको ३ म्।

वि पृच्छामि पाक्या न देवान्वषट्कृतस्याद्भुतस्य दस्रा पातं च सह्यसो युवं च रभ्यसो नो ३ म्।

प्र या घोषे भृगवाणे न शोभे यया वाचा यजति पज्रियो वां प्रैष युर्न विद्वो ३ म्।

श्रुतं गायत्रं तकवानस्याहं चिद्धि रिरेभाश्विना वामाक्षी शुभस्पती दो ३ म।

युवं ह्यास्तं महो रन्युवं वा यन्निरततं सतन्तानो वसू सुगोपा स्यातं पातं नो वृकादघायो ३ म।

मा कस्मै धातमभ्यमित्रिणेनो माकुत्रा नो गृहेभ्यो धेनवो युः स्तनाभुजो अशिश्वो ३ म्।

(१) "बृहद्वदेम विदथे सुवीरा" इति पादेन वीरकामाय पत्न्यै यथाभिलषितं वीरं ध्यायात्।

आध्वर्यवपद्धतिः ।

ग्रहणम्, ब्रह्मणेवितो निःशेषेण हविः प्रोक्षणम्, पात्र्यामोप्याभिमन्त्रणम्, उपवेषादानम्, अङ्गाराणां प्राचः करणम्, अङ्गारहरणम्, क-

हौत्रपद्धतिः ।

दुहीयन्मित्रधितये युवाकु राये च नो मिमीतं वाजवत्या इषे च नो मिमीतं धेनुमत्यो ३ म्(१) ॥

आ नो विश्वाभिरूतिभिरश्विना गच्छतं युवं दस्रा हिरण्यवर्तनी पिबतं सोम्यं मधो ३ म् ॥

आ नूनं यातमश्विना रथेन सूर्यत्वचा भुजी हिरण्यपेशसा कवी गम्भीरचेतसो ३ म् ॥

आ यातं नहुषस्पर्यान्तरिक्षात्सुवृक्तिभिः पिबाथो अश्विना मधु कण्वानां सवने सुतो ३ म्(२) ॥

(३)प्रातर्यावाणा प्रथमा यजध्वं पुरा गृध्रादररुषः पिबातः प्रातर्हि यज्ञमश्विना दधाते प्र शंसन्ति कवयः पूर्वभाजो३म् ।

प्रातर्यजध्वमश्विना हिनोत न सायमस्ति देवया अजुष्टमुतान्यो अस्मद्यजते वि चावः पूर्वः पूर्वो यजमानो वनीयो३म् ।

हिरण्यत्वङ्मधुवर्णो घृतस्नुः पृक्षो वहन्ना रथो वर्तते वां मनोजवा अश्विना वातरंहा येनातियाथो दुरितानि विश्वो३म् ।

यो भूयिष्ठं नासत्याभ्यां विवेष चनिष्ठं पित्वो ररते विभागे स तोकमस्य पीपरच्छमीभिरनूर्ध्वभासः सदमित्तुतुर्यो३म् ।

समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेम आ नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानो३म्"(४) ।

प्रातर्यावाणेति पूर्वाह्णे सूक्तम् । आ भातीत्यपराह्णे नियोजयेत् ।

"आ भात्यग्निरुषसामनीकमुद्विप्राणां देवया वाचो अस्थुरर्वाञ्चा नूनं रथ्येह यातं पीपिवांसमश्विना घर्ममच्छो३म् ।

न संस्कृतं प्र मिमीतो गमिष्ठान्ति नूनमश्विनोपस्तुतेह दिवाभिपित्वेऽवसागमिष्ठा प्रत्यवर्तिं दाशुषे शम्भविष्ठो३म् ।

उता यातं सङ्गवे प्रातरह्नो मध्यन्दिन उदिता सूर्यस्य दिवा नक्तमवसा शन्तमेन नेदानीं पीतिरश्विना ततानो३म् ।

इदं हि वां प्रदिवि स्थानमोक इमे गृहा अश्विनेदं दुरोणमा नो दिवो

(१) ऋ० १।१२०।१-९। (२) ऋ० ८।८।१-३।
(३) प्रातर्यावाणाप्रथमायजध्वमिति पञ्चर्चं सूक्तं पौर्वाह्णिकप्रवर्ग्यप्रचारेऽभिष्टुयात्।
(४) ऋ० ५।७७।१-५।

आध्वर्यवपद्धतिः।

पालेनावच्छादनम्, अग्न्येऽङ्गारकरणम्, एवं द्वितीयस्य, उभयोरभ्यूहनम्, उपसर्जन्यधिश्रयणम्, हविरीक्षणम्, सपविसपात्र्यामावापः, उपसर्जनीग्रहणम्, पवित्रत्यागः, संयवनम्, विभज्यालम्भः, अधिश्रयणं, प्रथनं, अभिमर्शनम्, पात्र्यङ्गुलिप्रक्षालनम्, पर्यग्निकरणम्, श्रपणं, आलम्भनम्, अभिवासनम्, अभितप्त्याप्त्योदकदानम्, त्यागो यन्तुः।

ईडे द्यावापृथिवीत्युच्यमाने परिधीन्परिधाय रौहिणाधुद्वास्य स्रुचोः

हौत्रपद्धतिः।

वृहतः पर्वतादाद्भ्यो यातमिषमूर्जं वहन्तो३म्।

समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेमा नो रयिं वहतमोत वीराना विश्वान्यमृता सौभगानो(१)३म्"।

इत्यपराह्णे।

तत्र ईळे द्यावापृथिवीत्याद्युभयत्र। सर्वमीळे द्यावीयमुत्सृज्य (मध्यमां) वाचम्।

(२)"ईळे द्यावापृथिवी पूर्वचित्तयेऽग्निं घर्मं सुरुचं यामन्निष्टये याभिर्भरे कारमंशाय जिन्वथस्ताभिरू षु ऊतिभिरश्विना गतो३म्।

युवोर्दानाय सुभरा असश्चतो रथमा तस्थुर्वचसं न मन्तवे याभिर्धियोऽवथः कर्मन्निष्टये ताभिरू षु ऊतिभिरश्विना गतो३म्।

युवं तासां दिव्यस्य प्रशासने विशां क्षयथो अमृतस्य मज्मना याभिर्धेनुमस्वं पिन्वथो नरा ताभिरू षु ऊतिभिरश्विना गतो३म्।

याभिः परिज्मा तनयस्य मज्मना द्विमाता तूर्षु तरणिर्विभूषति याभिस्त्रिमन्तुरभवद्विचक्षणस्ताभिरू षु ऊतिभिरश्विना गतो३म्।

याभी रेभं निवृतं सितमद्भ्य उद्वन्दनमैरयतं स्वर्दृशे याभिः कण्वं प्र सिषासन्तमावतं ताभिरू षु ऊतिभिरश्विना गतो३म्।

याभिरन्तकं जसमानमारणे भुज्युं याभिरव्यथिभिर्जिजिन्वथुर्याभिः कर्कन्धुं वय्यं च जिन्वथस्ताभिरू षु ऊतिभिरश्विना गतो३म्।

याभिः शुचन्तिं धनसां सुषंसदं तप्तं घर्ममोम्यावन्तमत्रये याभिः पृश्निगुं पुरुकुत्समावतं ताभिरू षु ऊतिभिरश्विना गतो३म्।

याभिः शचीभिर्वृषणा परावृजं प्रान्धं श्रोणं चक्षस एतवे कृथो याभिर्वर्तिकां ग्रसितामुमुञ्चतं ताभिरू षु ऊतिभिरश्विना गतो३म्।

याभिः सिन्धुं मधुमन्तमसश्चतं वसिष्ठं याभिरजरावजिन्वतं याभिः कुत्सं श्रुतर्यं नर्यमावतं ताभिरू षु ऊतिभिरश्विना गतो३म्।

(१) ऋ० ५।७६।१-५।

(२) ऋ० १।११२।१—२५।

आध्वर्यवपद्धतिः।

पूर्वं विभस्मीकरणम्, स्रुचोः स्थापनम्, तयोरुपस्तारः, तत्रस्थाभिघारः, उद्वासनं, प्राणदानम्, कपालाञ्जनम्, तदुद्वासनम्। आसाद्यत्याहवनीयाद्दक्षिणोत्तरौ। इति स्यातुः कर्म।

अध्वर्युः—"अप्नस्वतीमि"( ऋ० १।११२।४ )त्युच्यमाने रुचितो घर्म

हौत्रपद्धतिः।

याभिर्विश्पलां धनसामथर्व्यं सहस्रमीळ्ह आजावजिन्वतं याभिर्वशमश्व्यं प्रेणिमावतं ताभिरू षु ऊतिभिरश्विना गतो३म्।

याभिः सुदानू औशिजाय वणिजे दीर्घश्रवसे मधु कोशो अक्षरत्कक्षीवन्तं स्तोतारं याभिरावतं ताभिरू षु ऊतिभिरश्विना गतो३म्।

याभी रसां क्षोदसोद्नः पिपिन्वथुरनश्वं याभी रथमावतं जिषे याभिस्त्रिशोक उस्रिया उदाजत ताभिरू षु ऊतिभिरश्विना गतो३म्।

याभिः सूर्यं परियाथः परावति मान्धातारं क्षैत्रपत्येष्वावतं याभिर्विप्रं प्र भरद्वाजमावतं ताभिरू षु ऊतिभिरश्विना गतो३म्।

याभिर्महामतिथिग्वं कशोजुवं दिवोदासं शंबरहत्य आवतं याभिः पूर्भिद्ये त्रसदस्युमावतं ताभिरू षु ऊतिभिरश्विना गतो३म्।

याभिर्वम्रं विपिपानमुपस्तुतं कलिं याभिर्वित्तजानिं दुवस्यथो याभिर्व्यश्वमुत पृथिमावतं ताभिरू षु ऊतिभिरश्विना गतो३म्।

याभिर्नरा शयवे याभिरत्रये याभिः पुरा मनवे गातुमीषथुर्याभिः शारीराजतं स्यूमरश्मये ताभिरू षु ऊतिभिरश्विना गतो३म्।

याभिः पठर्वा जठरस्य मज्मनाग्निर्नादीदेच्चित इद्धो अज्मन्ना याभिः शर्यातमवथो महाधने ताभिरू षु ऊतिभिरश्विना गतो३म्।

याभिरङ्गिरो मनसा निरण्यथोऽग्रं गच्छथो विवरे गोअर्णसो याभिर्मनुं शूरमिषा समावतं ताभिरू षु ऊतिभिरश्विना गतो३म्।

याभिः पत्नीर्विमदाय न्यूहथुरा घ वा याभिररुणीरशिक्षतं याभिः सुदास ऊहथुः सुदेव्यं१ताभिरू षु ऊतिभिरश्विना गतो३म्।

याभिः शंताती भवथो ददाशुषे भुज्युं याभिरवथो याभिरध्रिगुम्। म्यावतीं सुभरामृतस्तुभं ताभिरू षु ऊतिभिरश्विना गतो३म्।

याभिः कृशानुमसने दुवस्यथो जवे याभिर्यूनो अर्वन्तमावतं मधु प्रियं भरथो यत्सरड्भ्यस्ताभिरू षु ऊतिभिरश्विना गतो३म्।

याभिर्नरं गोषुयुधं नृषाह्ये क्षेत्रस्य साता तनयस्य जिन्वथो याभी रथाँ अवथो याभिरर्वतस्ताभिरू षु ऊतिभिरश्विना गतो३म्।

याभिः कुत्समार्जुनेयं शतक्रतू प्र तुर्वीतिं प्र च दभीतिमावतं याभिर्ध्वसन्तिं पुरुषन्तिमावतं ताभिरू षु ऊतिभिरश्विना गतो३म्।

अप्नस्वतीमश्विना वाचमस्मे कृतं नो दस्रा वृषणा मनीषामद्यूत्येऽवसे

आध्वर्यवपद्धतिः।

इत्याहोपोत्तिष्ठन्। रुचितो घर्मः। घर्मस्य तन्वौ गाय।

औद्गात्रपद्धतिः।

प्रज्वलनकाले प्रसोमदेववीतय इति घर्मतन्वौ सकृद्गायेत्।

(अनयोः प्रजापतिर्ऋषिः बृहती छन्दः घर्मो देवता परिधिपरिधाने विनियोगः।)

हाँउ हाँउ हाँउ। प्रसोमदेवा ३ वीयितौ १ या २३ यि। हाँउ ३। सिन्धुर्नपिप्ये ३ आर्णा १ सा २३। हाँउ ३। अंऽशोः पयसामदिरोना ३ जाग्रृ १ वी २३ः। हाँउ। ३। अच्छाकोशम्मा ३ धूश्च्यू १ ता २३ म्। हा ३ उ। २। वा। घर्मः प्रवृक्तस्तन्वौ समानेर्षं वृधे सुवा २३४५ः॥

औंहो ३ वा।३। ई ३ या।३। आयिही २।३। प्रसोमदे वेवा २ यितौ २३४ योयि। सिन्धुर्नपि। प्ये आ २ र्णा २३४ सा। अंऽ० शोः पयसामदिरः नं जार २ गृ २३४ वीः। अच्छा कोशं। मधूश्च्यूं २३४ तोम्। औ हो ३ वा। ३। ईऽ ३ या।३। आयिही २ आयिही २३। आरियि। हौ। २३४। औंहो वा। घर्मः प्रवृक्तेस्तन्वोसमानेर्शमेहेसुवा २३४५ः(१)॥

प्रस्तोता घर्मतन्वौ गानानन्तरमवसरे सत्यन्यान्यपि घर्मलिङ्गानि सामानि सकृद्गायेत्। तद्यथा—

कायमान इति महावैश्वानरव्रतम्। सद्योभ्राजेतीन्द्रस्य च सद्यस्थम्। विष्णोर्व्रीणि स्वरीयांऽसि पश्चानुगानं द्व्यनुगानश्चेति।

रुचितो घर्म इत्युक्ते प्रस्तोता उर्वल्लोकानरोचय इति घर्मरोचनं सकृद्गायेत्।

इन्द्र ऋषिः, अनुष्टुप्छन्दः घर्मो देवता।

उर्वल्लोकां न रोचयः। होइ। इमाँ लोकां न रोचयः। होइ। प्रजां भूतमरोचयः। होइ। विश्वं भूतमरोचयः। हो २ हा २३४ औहोवा। घर्मो ज्योती २३४५ः (२)॥

हौत्रपद्धतिः।

नि ह्वये वां वृधे च नो भवतं वाजसातौ३म्"।

ततो रुचितो घर्म इत्युक्ते—

"अरूरुचदुषसः पृश्निरग्रिय उक्षा बिभर्ति भुवनानि वाजयुर्माया-विनो ममिरे अस्य मायया नृचक्षसः पितरो गर्भमादधो३म्(३)।

(१) छ० आ० ६, १, ३, ४=आ० गा० २, २, १९-१६।

(२) आ० गा० ६, २, १०। (३) ऋ० ९।८३।३।

आध्वर्य्यवपद्धतिः

परिक्रम्योपतिष्ठन्ते(१)ऽकृतं चेद्गर्भो देवानामिति ।
"ॐ गर्भो देवानाम्पिता मतीनाम्पतिः प्रजानाम् ।
सन्देवो देवेन सवित्रा गत सꣳ सूर्य्येण रोचते ॥
समग्निरग्निना गत सन्दैवेन सवित्रा सꣳ सूर्येणारोचिष्ट ।
स्वाहा समग्निस्तपसा गत सन्दैव्येन सवित्रा सꣳ सूर्य्येणारूरुचत ॥
धर्ता दिवो विभाति तपसस्पृथिव्यान्धर्ता देवो देवानाममर्त्यस्तपोजाः।
वाचमस्मे नियच्छ देवायुवम् ।
अपश्यङ्गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् ।
स सध्रीचीः स विषूचीर्वसान आवरीवर्त्ति भुवनेष्वन्तः ॥

औद्गात्रपद्धतिः।

अथोद्गातारोऽध्वर्युशाखाविहितेनानुवाकेन (शु०य०सं० ३७।१४-२०)

हौत्रपद्धतिः।

*द्युभिरक्तुभिः परि पातमस्मानरिष्टेभिरश्विना सौभगेभिस्तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौ३म् ।*

द्युभिरक्तुभिः परि पातमस्मानरिष्टेभिरश्विना सौभगेभिस्तन्नो मित्रो वरुणो मामहन्तामदिति सिन्धुः पृथिवी उत द्यौ३म् ।

द्युभिरक्तुभिः परि पातमस्मानरिष्टेभिरश्विना सौभगेभिस्तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौ३म्"। (एवमृचः १०१)।

मदन्तीजलमुपस्पृश्योत्तिष्ठेत् ।
ततो महावीरोपस्थानं(२)कुर्यात् ।
"ॐ गर्भो देवानां पिता मतीनां पतिः प्रजानाम् ।
सन्देवो देवेन सवित्रा गत सꣳ सूर्येण रोचते ॥
समग्निरग्निना गत सन्दैवेन सवित्रा सꣳ सूर्येणारोचिष्ट ।
स्वाहा समग्निस्तपसा गत सं दैव्येन सवित्रा सꣳ सूर्येणारूरुचत॥
धर्ता दिवो विभाति तपसस्पृथिव्यां धर्ता देवो देवानाममर्त्यस्तपोजाः।
वाचमस्मे नियच्छ देवायुवम् ।

---

(१) "स यदैतदध्वर्युरुपोत्तिष्ठन्नाह रुचितो घर्म इति तदुपोत्थायावकाशैरुपतिष्ठन्त" इति प्रकृत्य "षडुपतिष्ठन्त" इति "गर्भो देवानामि" (श० ब्रा० १४।१।४।१-२) ति च श्रुतेः। षडुपतिष्ठन्त इत्यत्र प्रस्तोतृव्यतिरिक्ताः सयजमानाः पञ्चर्त्विजः षड्ग्रहणेन गृह्यन्ते। श्रुतौ प्रस्तोतुरदृष्टत्वात्। छन्दोगानां सूत्रेऽप्युपस्थानं विहितमतः सोऽपि सप्तम उपस्थानं करोतीति देवः। आपस्तम्बः—"सर्वर्त्विजो यजमानश्चाधीयन्तो महावीरमवेक्षन्त" (१५।८।१६) इति।

(२) अत्र होतारमध्वर्युर्वाचयन्त्येतमनुवाकम्। तथा चाश्वलायनसूत्रम्—"उत्थाप्यैनानध्वर्युर्वाचयन्ती"(४।६)ति।

आध्वर्यवपद्धतिः ।

विश्वासाम्भुवाम्पते विश्वस्य मनसस्पते विश्वस्य व्वचसस्पते सर्वस्य व्वचसस्पते ।

देवश्रुत्त्वन्देव घर्म देवो देवान्पाह्यत्र प्रावीरनु वान्देववीतये ।

मधु माध्वीभ्यां मधु माधूचीभ्याम् ॥

हृदे त्वा मनसे त्वा दिवे त्वा सूर्य्याय त्वा ।

ऊर्ध्वोऽअद्ध्वरन्दिवि देवेषु धेहि ॥

पिता नोऽसि पिता नो बोधि नमस्ते अस्तु मा मा हिꣳसीः"।

( शु० य० सं० ३७ । १४-२० )

अपोर्णोति पत्नी शिरः ।

अध्वर्युः—त्वष्टृमन्त इत्येनां वाचयति(१) महावीरमीक्षमाणाम् ।

"ॐ त्वष्टृमन्तस्त्वा सपेम पुत्रान्पशून्मयि धेहि प्रजामस्मासु धेह्यरिष्टाहꣳ० सह पत्या भूयासमि"ति ब्रूहि । पत्नी—

"ॐ त्वष्टृमन्तस्त्वा सपेम पुत्रान् पशून्मयि धेहि प्रजामस्मासु धेह्यरिष्टाहꣳ० सह पत्या भूयासम्" । ( ३७ । २० )

औद्गात्रपद्धतिः ।

तिष्ठन्तो घर्ममवेक्षेरन् ।

हौत्रपद्धतिः ।

अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् ।

स सध्रीचीः स विषूचीर्वसान आवरीवर्ति भुवनेष्वन्तः ।

विश्वासां भुवां पते विश्वस्य मनसस्पते विश्वस्य वचसस्पते सर्वस्य वचसस्पते ।

देवश्रुत्त्वं देव घर्म देवो देवान्पाह्यत्र प्रावीरनु वां देववीतये ।

मधु माध्वीभ्यां मधु माधूचीभ्याम् ॥

हृदे त्वा मनसे त्वा दिवे त्वा ।

सूर्याय त्वा ऊर्ध्वो अध्वरं दिवि देवेषु धेहि ॥

पिता नोऽसि पिता नो बोधि नमस्ते अस्तु मा मा हिꣳ० सीः"(२)॥

इत्यवकाशानुवाकः ।

पुनर्मदन्तीरुपस्पृश्योपविशति(३) ।

( १ ) "अथ पत्न्यै शिरोऽप्रवृत्य महावीरमीक्षमाणां वाचयति त्वष्टृमन्त" (श० मा० १४ । १ । ४ । १६ ) इत्यादि श्रुतः । पत्न्य इति षष्ठ्यर्थे चतुर्थी ।

( २ ) शु० य० सं० ३७ । १४—२० ।

( ३ ) अत्र 'उपविशति' इत्येकवचनात् ब्रह्मयजमानयोरुत्थाननिवृत्तिरिति केचित् । "पडुपतिष्ठन्त" इति शतपथश्रुतेः (१४ । १ । ४ । १) षड्ग्रहणात्सयजमानाः धर्मोपयुक्ताः सर्वे ऋत्विज उपतिष्ठन्त इति । एवं परार्थत्वाद्ब्रह्मयजमानयोरप्युपस्थानं भवतीति वृद्धसंप्रदायः ।

आध्वर्यवपद्धतिः ।

अहः केतुनेति दक्षिणार्द्धे० रौहिणं(१) जुहोति,

अध्वर्युः स्फ्योपग्रहेण निधनकाले—

"ॐ अहः केतुना जुषताᳪं सुज्योतिर्ज्योतिषा स्वाहा" (३७।२१)।

इदं घर्माय(२) ।

मन्त्रक्रमेणोत्तरार्द्धे० रात्रिरिति (३)सायम् ।

"ॐ रात्रिः केतुना जुषताᳪं सुज्योतिर्ज्योतिषा स्वाहा"(३७।२१)।

देवस्य त्वेति रज्जुसन्दानमादाय—

"ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् । आददेऽदित्यै रास्नासि" (३८।१)।

तूष्णीं पिन्वनं च ।

स्याता च तूष्णीं रज्जुसन्दानं पिन्वने च ।

औद्गात्रपद्धतिः ।

(४)पूर्वरौहिणपुरोडाशहोमकाले इन्द्रन्नर इति राजानं सकृद्गायेत् । इन्द्र ऋषिः त्रिष्टुप्छन्दः घर्मोदेवता ।

हुंम् ।३। हो ।३। हᳪं ।३। औहो ।३। औहो यि ।२। औहो यि । इन्द्रन्नरो । नेऽमधि । ताहवन्तायि ।३। वयोवृहत् ।३। विश्राय्ये विधर्मणे । ३। यत्यारियाः । युनंज । तायिधियस्ताः ।३। सत्यमोजिः ।३। रजः सुवः ।३। शूरान्नृषा । तां २ श्रव । सश्च कामायि ।३। भद्रंᳪ सुधा ।२। भद्रंᳪ मुवे । पमूर्ज्जम् । इषमूर्ज्जम् ।२। अगोमतायि । वृजेभे । आतुर्वन्नाः ३। वृहद्यशः ।३। दिवि देवे ३ हंस् ।२। दिवि देवे ३। हाउ वा । वांगीडासुवोवृहद्भा २३४५ः (५) ॥

---

(१) "सर्वहुत एककपाल" (का० श्रौ० १ । ९ । १२) इति परिभाषोक्तेरस्यैककपालत्वात्सर्वहुतं रौहिणहवन्या स्रुचा जुहुयात् ।

(२) "अहः केतुना यजुषो घर्मदेवत्ये" (का० स० सू०४ क० ३०१ पत्रे) इत्युक्त्वाऽदिदं घर्मायेति त्यागः । 'इदमन्हे, इदं रात्र्यै' इति जीर्णसम्प्रदायः ।

(३) अत्रापस्तम्ब.—"यत्र क्व च विप्रक्रान्ते प्रवर्ग्ये आदित्योऽस्तमियात्कृतान्तादेव विरमेच्छ्वोभूते शेषं समापयेदि"(१५।२।१३)ति । तथा तत्रैव "यदि घर्मेण प्रचरत्स्वादित्योऽस्तमियादपरस्यां द्वारि दर्भेण हिरण्यं प्रबध्योदयं तमभ्यपरोत्युपस्थायोदुत्यं चित्रमिति द्वाभ्यां गार्हपत्ये हुत्वा प्रवृज्य श्वो भूते वयः सुपर्णा इत्यादित्यमुपतिष्ठन्ते" (१५।१७।१२) इति ।

(४) मुद्रितनानाभाष्योद्गातृपद्धतावप्यपेक्षितं पूर्वरौहिणपुरोडाशहोमकालीनं साम वत्तरौहिणहोमकाल एव लिखितं तच्चिन्त्यम् ।

(५) छ० आ० ४, १, ३, ६ — आ० गा० ४, २, ११ ।

आध्वर्यवपद्धतिः।

अध्वर्युः—इड एहीति गामाह्वयति नाम्ना च त्रिरुच्चैरपरेण गार्हपत्यं गच्छन्।

"ॐ इड एह्यदित एहि सरस्वत्येहि" (३८।२) (१)इत्युपांशु।

अथोच्चैः—गङ्ग एहीति त्रिः।

धेनुं गायेति प्रेष्यति। धेनुं गाय।

अदित्यै रास्नेति गां पाशेन प्रतिमुच्य।

औद्गात्रपद्धतिः।

अध्वर्यवो गङ्ग एहीत्युक्त्या यदा धेन्वजयोर्वत्सयर्कोर्युपसृजन्ति तदा स्वादिष्टयेति धेनुं सकृद्गायेत्।

प्रजापतिर्ऋषिः गायत्रीछन्दः घर्मो देवता।

हाँ उ।२। हा उँ। ँथोहाँ।२। ँओ हाँयि। ईया हाँ उ।२। इयाहाँ उँ। ँऔ हो यि।२। (ँऔ हो २। यो २३४ ँऔ हो या। भुवत। इडा २३ हाँ ऊ।२। हाउँ ँओहाँ।२। ँओहाँयि। ई या हाँ उ।२। ई या हाँ उ। ँऔ

हौत्रपद्धतिः।

(२)"उप ह्वये सुदुघां धेनुमेतां सुहस्तो गोधुगुत दोहदेनां श्रेष्ठं सवं सविता साविषन्नोऽभीद्धो घर्मस्तदु षु प्र वोचो३म्।

उपह्वये सुदुघां धेनुमेतां सुहस्तो गोधुगुत दोहदेनां श्रेष्ठं सवं सविता साविषन्नोऽभीद्धो घर्मस्तदु षु प्रवोचो३म्।

उप ह्वये सुदुघां धेनुमेतां सुहस्तो गोधुगुत दोहदेनां श्रेष्ठं सवं सविता साविषन्नोऽभीद्धो घर्मस्तदु षु प्रवोचो३म्"।

इति गव्याहूयमानायाम्।

"हिङ्कृण्वती वसुपत्नी वसूनां वत्समिच्छन्ती मनसाभ्यागात् दुहामश्विभ्यां पयो अघ्न्येयं सा वर्द्धतां महते सौभगायो३म्" (३)

इत्यायन्त्याम्।

"अभि त्वा देव सवितरीशानं वार्याणां सदावन्भागमीमहो३म्"(४)।

इत्यभिधीयमानायाम्(५)।

---

(१) आपस्तम्बः—"त्रिरुपांशु घर्मदुघामाह्वयतोड एह्यदित एहि सरस्वत्येही"ति। (१५।९।३) तथा "त्रिरुच्चैरसावेह्यसावेह्यसावेही" (१५।९।४) ति।

(२) उपह्वय (ऋ० १।१६४।२६) इति गव्याहूयमानायाम् (शां० श्रौ० ५।१०।१)। अध्वर्युणा गार्हपत्यमपरेण गच्छता "इड एह्यदित एहि सरस्वत्येही"ति दोहनार्थं गव्याहूयमानायां होतोपविष्ट एव "उप ह्वये"त्येतामभिष्टुयात्त्रिः।

(३) ऋ० १।१६४।२७। (४) ऋ० १।२४।३।

(५) अभिधीयमानायां—बध्यमानायाम्।

आध्वर्यवपद्धतिः।

"ॐअदित्य ऽरास्नासीन्द्राण्या उष्णीषः" (३८।३)।

स्थूणायां बध्वा पूषासीति वत्समुत्सृजति॥

"ॐपूषासि" (३८।३)।

सन्दाय घर्माय दीष्वेति वत्समुन्नयति।

"ॐघर्माय दीष्व" (३८।३)।

अश्विभ्यां पिन्वस्वेति पिन्वने दोग्धि।

"ॐअश्विभ्यां पिन्वस्व सरस्वत्यै पिन्वस्वेन्द्राय पिन्वस्व" (३८।४)।

स्वाहेन्द्रवदिति विप्रुषोऽभिमन्त्रयते।

"ॐस्वाहेन्द्रवत्स्वाहेन्द्रवत्स्वाहेन्द्रवत्" (३८।४)।

यस्ते स्तन इति स्तनमालभते(१)।

औद्गात्रपद्धतिः।

हो १ यि। २। औ३ हो ३ १ इ)(२)।

स्वादिष्ठया। मदिष्ठया। (हाँ उ २ हाँ उ०। या २३४ औ हो वा।) जनत्। इडा (२३। हाँउ २ हाउ०। औ हो १ यि।३।) पवस्वसो। मा धारया। (हाँ उ २ हा उ०। या २३४ औहो वा।) वृधत्। इडा

हौत्रपद्धतिः।

"समी वत्सं न मातृभिः सृजता गयसाधनं देवाव्यं मदमभि द्विशवसो३म्(३)।

सं वत्स इव मातृभिरिन्दुर्हिन्वानो यज्यते देवावीर्मदो मतिभिः परिष्कृतो३म्"(४)

इत्युपसृज्यमानायाम्(५)।

"यस्ते स्तनः शशयो यो मयोभूर्येन विश्वा पुष्यसि वार्याणि यो रत्नधा वसुविद्यः सुदत्रः सरस्वति तमिह धातवे को३म्"(६)।

इति स्तनं वत्सेऽभि पद्यमाने(७)।

---

(१) 'अथास्यै स्तनमभिपद्यते यस्ते स्तन' (श० ब्रा० १४।२।१।१९) इति श्रुतेः। काण्वानां तु 'स्तनानालभत' इति पठ्यते। अतोऽत्रैकवचनं जात्यपेक्षया तेन सर्वेषामेवालम्भः।

आपस्तम्बः—यदि घर्मधुग्दोहकाले नागच्छेदन्यां दुग्ध्वा प्रवृज्य तां सुत्यायां ब्राह्मणाय दद्यात्। पयस्यागमिष्यन्त्स्यादि घर्मदुहि (गि) पयो न स्यादेतेश्चतुर्थे पादे स्तनं कृत्वा क्रियेतैदि दधि दुहीत बार्हस्पत्यं शंसेदि (१५।१८।१–३) त्यादि।

(२) वक्रचिह्नान्तर्गतपाठास्तु संहितायां न दृश्यन्ते।

(३) ऋ० ९।१०४।२। (४) ऋ० ९।१०५।२।

(५) उपसृज्यमानायां = सवत्सीक्रियमाणायामित्यर्थः।

(६) ऋ० १।१६४।४९। (७) वत्से स्तनं स्पृशति सतीत्यर्थः।

आध्वर्यवपद्धतिः।

"ॐयस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसु विद्यः सुदत्रः।
येन विश्वा पुष्यसि वार्य्याणि सरस्वति तमिह धातवेऽकः"
(३।८।५)। एवं (१)प्रतिप्रस्थाताजां मयूखे तूष्णीम् (२)।

धेनुसामसमाप्तौ पयो गायेति प्रेष्यति।'पयो गाय।

औद्गात्रपद्धतिः।

(२३। हॅाउ २ हॅाउ०। औहो १ इ।३।) ईन्द्रायपा। तीवांयिसुताः।
(हॅाउ २ हॅाउ० या २३४ औ हो वा।) फरत्। इडा २३। हाँ-
उ २ हाउ०। औ हो १ यि।२। औ हो २। या २३४ औ हो वा। ए।३।
धनुं(३)॥ १२॥

पयसो (दोहन) राहरणकाले(४) अग्नेयुक्ष्वेति पयः संज्ञकं साम सकृद्गायेत्। प्रजापतिऋषिः गायत्रीछन्दः घर्मोदेवता।

इंयो ३। इ या। इ यो २। इ या।इ यो ३। इ या। अंग्ने युंक्ष्वाही

हौत्रपद्धतिः।

"गौरमीमेदनु वत्सं मिषन्तं मूर्धानं हिङ्ङकृणोन्मातवा उ सृक्वाणं घर्ममभि वावशाना मिमाति मायुं पयते पयोभिो३म्"(५)।

इत्युन्नीयमाने(६)।

"नमसेदुप सीदत दध्नेदभि श्रीणीतन इन्दुमिन्द्रे दधातनो३म्(७)।

सञ्जानाना उप सीदन्नभिज्ञु पत्नीवन्तो नमस्यन्नमस्यन् रिरिक्वांसस्तन्वः कृण्वत स्वाः सखा सख्युर्निमिषि रक्षमाणो३म्"(८)।

---

(१) केचिद्दुग्धपयोगाद्धर्मसन्दानं नेच्छन्ति तदयुक्तम्। आपस्तम्बकठसूत्रादिषु घर्मस्य साक्षात्पाठात्, एवं शब्देन कात्यायनेनापि संगृहीतत्वाच्च।

(२) अत्र कठसूत्रे विशेषः—

अश्विरिष्यन्प्रवर्ग्येण पूर्वेद्युर्वत्सवर्करौ।
अपाकुर्यात्तया प्रातः सायं चोत्सृज्य धेनुके।
नाशे घर्मदुहो धेन्वा अतधेनुं दुहेत्ततः।
घर्मार्थं व्रतार्थं दुह्यात्द्वौ द्वौ स्तनाविह।
घर्मव्रतदुहो नाशे आज्येन प्रचरेद्द्विधा।
अजानाशे तु गव्येनान्यां वा धेनुमानयेत्।
सर्वनाशे वृता दुग्धं पयो वा दधि वा नयेत्। इति।

(३) छ० आ० ९,२, ४, २, आ० गा० ३, १, ७॥

(४) "पय आहरन्ति सत्पयः" (द्रा० श्रौ० २।२।३४)

(५) ऋ० १।१६४।२८। (६) स्तनादुन्मुच्य वत्से नीयमाने।

(७) ऋ० १।११।६। (८) ऋ० १।७२।५।

आध्वर्यवपद्धतिः।

उत्तिष्ठ ब्रह्मणस्पत इत्युच्यमाने उपोत्तिष्ठति।

औद्गात्रपद्धतिः।

३ "ये तवा। अग्ने युंक्ष्वा। ही 'ये तवा। अग्नेयुंक्ष्वाही ३ "ये ३ तवा। ई यो ३। ई या। ईयो २ ईया। ईयो ३। ईया। अद्वांसोर्दायिवा ३ सांयवः। अद्वांसो दायि। यांसायवा। अद्वांसो दायि वा ३ सांयवाः। ई यो ३। ईया। इयो २ ईया। ईयो ३। ईया। अरंवहान्ती ३ आशवाः। अरं वहा। तीयाशवा। अरं वहान्ती ३ आशवाः। इयो ३। ईया। ईयो २ ईया। ईयो इया ३ उवा ३। आ २। ३। हंस्। पे ३ पेया ३४५ः (१) ॥ १३ ॥

हौत्रपद्धतिः।

इत्युपसीदति।

(२)"दोहेन गामुप शिक्षा सखायं प्र बोधय जरितर्जारमिन्द्रं कोशं न पूर्णं वसुना न्यृष्टमा च्यावय मघदेयाय शूरो३म्(३)।

दुहन्ति सप्तैकामुप द्वा पञ्च सृजत स्नोर्थेसिन्धोरधि स्वरो३म्(४)।

(५)आ दशभिर्विवस्वत इन्द्रः कोशमचुच्यवीत्खेदया त्रिवृता दिवो३म्।

(६)आतमन्वन्नभो दुह्यते घृतं पय ऋतस्य नाभिरमृतं वि जायते समीचीनाः सुदानवः प्रीणन्ति तं नरो हितमव मेहन्ति पेरवो३म्।

(७)समिद्धो अग्निरश्विना तप्तो वां घर्म आ गतं दुह्यन्ते गावो वृषणेह धेनवो दस्रा मदन्ति कारवो३म्।

समिद्धो अग्निर्वृषणा रयिर्दिवस्तप्तो घर्मो दुह्यते वामिषे मधु वयं हि वां पुरुतमासो अश्विना हवामहे सधमादेषु कारवो३म्।

(८)तदु प्रयक्षतममस्य कर्म दस्मस्य चारुतममस्ति दंसोपह्वरे यदुपरा अपिन्वन्मध्वर्णसो नद्यश्चतस्रो३म्"।

इति दुह्यमानायाम्।

(९)"अधुक्षत्पिप्युषीमिषमूर्जं सप्तपदीमरिः सूर्यस्य सप्तरश्मिभो३म्(१०)।

उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे उप प्र यन्तु मरुतः सुदानव इन्द्र

---

(१) छ० आ० १, १, ३, ५, आ० गा० ३, १, ८॥

(२) गवि दुह्यमानायां "दोहेन गा" मित्याद्याः सप्ताभिष्टुयात्।

(३) ऋ० १०।४२।२। (४) ऋ० ८।७२।७। (५) ऋ० ८।७२।८।

(६) ऋ० ९।७४।४। (७) शां० श्रौ० ५।१०।८। (८) ऋ० १।६२।६।

(९) गां दुग्ध्वाऽध्वर्यौ उत्तिष्ठति सति "अधुक्षदुत्तिष्ठे"त्येते द्वे अभिष्टुयात्।

(१०) ऋ० ८।७२।१६।

आध्वर्यवपद्धतिः ।

उप द्रव पयसेत्युच्यमाने स यथायथेतञ्च्छ्रत्युर्वन्तरिक्षमिति ।
"ॐ उर्वन्तरिक्षमन्वेमि" ( ३८।५ ) ।

तूष्णीं प्रतिप्रस्थाता उभावग्नीधे पयसी प्रदाय,

अध्वर्युः—

परीशासावादत्ते गायत्रंच्छन्दोऽसीति प्रतिमन्त्रम् ।
"ॐ गायत्रं छन्दोऽसि । ॐत्रैष्टुभं छन्दोऽसि" (३८।६) ।
वशिष्ठशफौ गायेति प्रेष्यति । वशिष्ठशफौ गाय ।

औद्गात्रपद्धतिः ।

आसेचनकाले आत्वाविशन्त्वितिं सिन्धुसाम सकृद्गायेत् । असित·ऋषिः गायत्रीछन्दः घर्मोदेवता—

आत्वाविशन्त्विन्दा ६ वोः । समुद्रमिवसिन्धवः । समुद्रमि । वसिन्धा २३ वाः । न त्वा मिन्द्रातिरिच्यते । न त्वा मा २३ यिन्द्रा । तिरिच्या २३ ता ३४३ यि । ओ २३४५ इ । डा(१) ॥ १४ ॥

( प्रस्तोता ) शफाभ्यां परिग्रहणकाले प्रथश्च यस्येति वशिष्ठशफौ (२)सकृद्गायेत् । वशिष्टऋषिः त्रिष्टुप्छन्दः घर्मोदेवता—

हा उ प्राथोः । चेयस्यसप्रथः । चे ना २ । मा ३ उ वा ३ । ईडो । ३ । हुंवायि । ओ २३४ वा । ई २३४ डा । आनुष्टुभस्य हविषः । हवा १ यिः । या ३ उ वा ३ । ई हा । ३ । हुंवायि । ओ २३४ वा । ई २३४ डा धातुं- र्द्युतानोत्सवितुः । चवा २ यि । ष्णा ३ उवा ३ । ईडो । ३ । हुंवायि । ओ २२४ वा । ई २२४ डा ५ । रथन्तरमाजभारा वसा २ यि । ष्ठा ३ ४ वा । ३ ई डा । ३ । हुंवायि । ओ २३४ वा । ई २३४ डा । ए ३ । पूत् ॥ १५ ॥

प्राथोः । चेयस्यसप्रथः । चे ना २ । मा ३१ उ वा २३ । ईडो । ३ ।

हौत्रपद्धतिः ।

प्राग्रमेवा सचो३म्"(३) ।

इत्यु(प)त्तिष्ठति ।

(४)"उप द्रव पयसा गोधुगो षु मा घर्मे सिञ्च पय उस्रियायाः वि

---

( १ ) छ० आ० ३, १, १, ४—गे० गा० ८, २, २३

( २ ) "शफाभ्यां परिगृह्णाति वशिष्टस्य शफौ" ( द्रा० श्रौ० २।२।३६ ) इति ।

( ३ ) ऋ० १।४०।१ ।

( ४ ) अत्राध्वर्युर्येन क्रमेण गां दोग्धि तेनैव क्रमेण प्रतिप्रस्थाताऽजां मयूखे बध्वा तूष्णीं दोग्धि । तत एकं गव्यमेकमाजमेवं द्वे पयसी, तयोर्द्वयोः पयसोरध्वर्युप्रतिप्रस्थातृभ्यां शालायामानीयमानयो "उप द्रव पयसे"त्यादिकां कण्डिकामभिष्टुयात् ।

आश्वलायनपद्धतिः ।

ताभ्यां महावीरं परिगृह्णाति द्यावापृथिवीभ्यान्त्वा परिगृह्णामीति ।
"ॐद्यावापृथिवीभ्यां त्वा परिगृह्णामि" (३८।६) ।

औद्गात्रपद्धतिः ।

हौ यि। हो। वौहा ३१ उ वा २३ । ई २३४ हौं। आनुष्टुभस्य हविषः ।
हं वा २ यिः । या ३१ उ वा २३ । ईडा । ३ । हौ यि । हो । वौहा ३१
उ वा २३ । ई २३४ हौं । यौतुंद्युतानोस्सवितुः । वं वा २ यि । ष्णा ३१
उवा २३ । ईडा । ३ । हौ यि । हो । वौ हा ३१ उवा २३ । ई २३४ हौं ।
रैयन्तरंमांजमीयिं । यसा २ इ । द्धा ३१ उवा २३ । ईडा । ३ । हाई । ० ।
ई २३४ हा । ३ प ३ । सुता २३४५ः(१) ॥ १६ ॥

( प्रस्तोता ) अध्वर्युभिर्महावीरे (ह्रि) ह्रीयमाणे इन्द्रेश्वर इति ब्रतपक्षौ (२)सङ्गायेत् । प्रजापतिऋषिः त्रिष्टुप् छन्दः घर्मोदेवता ।

हौं उ ३ । हं ए हु ए हु ए हं ए । ३ । हौउ । ३ । ईन्द्रेश्वरो । नं ३
मेयि । ताहेवन्तोयि । यत्पारियाः । युनक्ते । तायियियंस्तेः । शैरोनृपा ।
तां ३ श्रवसेश्र्वकामोयि । ऑगोमतायि । ब्रजेभे । जौतुवंद्योः । हौउ । ३ ।

हं ए हु ए हुए हे ए । ३ । हाउ २ हाउ । वा ३ । ई २३४५ ॥ १७ ॥

होतृपद्धतिः ।

नाकमत्सविता दमूना अनु द्यावापृथिवी सुप्रणीतो३म्"(३) ।
इत्याह्रियमाणयोः पयसोः ।

(४)"आ सुते सिञ्चत श्रियमा नूनमश्विनोर्ऋषि"रित्यासिच्यमानयोः ।
"उदु ष्य देवः सविता हिरण्यये"त्युद्यस्यमाने । अत्र कात्यायनानां पराग्-
धम्यासेचनं विहितं ( का० श्रौ० २६।६।१५-१६ ) मस्ति कर्मविपर्यासे

(१) आ० आ० १, १, २, ९=आ० गा० १, २, ९—६ ॥
(२) "ह्रियमाणे महावीरे" ( द्रा० श्रौ० ११।२।१७ )
(३) शां० श्रौ० ५।१०।१० ।
(४) अथ केपाञ्चिदध्वर्यूणां घाल्यायां पयसी आनीय तस्य घृत महावीरे आसेक-
व्यास्ति । तत्रासिच्यमानयोः पयसोर्येयासङ्ख्य "मासुते सिञ्चत श्रिय" मित्ये-
कस्मि "त्रा नूनमश्विनोऋषि" रित्यपरस्मिन्नेवं द्वे अभिष्टुयात् ।

केषाञ्चिदध्वर्यूणामानं प्रथमं केषाञ्चिद्गव्यं प्रथमम् । तत्राश्वलायनसूत्रे विशेषव्यव-
स्थायै"आसिच्यमान आ सुत्मश्विनोर्ऋषिरिति गव्य, आ सुते सिञ्चत श्रियमित्याज्ये"
( आ०श्रौ० १० पृ० १ पं० ) इत्यस्ति तथापि शाङ्खायनानां (५।१०।११) सूत्रक्रमेणैव
भवति । भाष्यकारैरपि तथैव व्याख्यातम् ।

आध्वर्यवपद्धतिः।

उद्यम्य मुख्यवेदेनोपमृज्योपयमन्योपगृह्यात्यन्तरिक्षेणोपयच्छामीति।

"ॐअन्तरिक्षेणोपयच्छामि" (३८।६)।

अजापयसाऽवसिच्य शान्ते गोः पयोऽवनयतीन्द्राश्विनेति।

"ॐइन्द्राश्विना मधुनः सारघस्य घर्मम्पात व्वसवो यजत व्वाट्"।

स्वाहा सूर्य्यस्य रश्मये वृष्टिवनये" (३८।६)।

"प्रैतु ब्रह्मणस्पतिरित्युच्यमाने समुद्राय त्वेति वातनामानि (१)जपति गच्छत्याहवनीयम्।

"ॐसमुद्राय त्वा व्वाताय स्वाहा।

सरिराय त्वा व्वाताय स्वाहा।

अनाधृष्याय त्वा वाताय स्वाहा।

प्रतिधृष्याय त्वा वाताय स्वाहा।

अवस्यवे त्वा व्वाताय स्वाहा।

अशिमिदाय त्वा व्वाताय स्वाहा।

इन्द्राय त्वा वसुमते रुद्रवते स्वाहा।

इन्द्राय त्वाऽऽदित्यवते स्वाहा।

औद्गात्रपद्धतिः।

हाँउ ३। इंहा। हं ऽं हं ऽं हं ऽं। ३। हाउ ३। इन्द्रंनरो (पूर्ववत्)

हाँ उ। ३। इंहा। हं ऽं हं ऽं हं ऽं। ३। हा उ ३ हा उ। वा ३।

हौत्रपद्धतिः।

यथा कर्मे(२)ति (शां० श्रौ० ५।१०।१३) स्वसूत्रात्।

"उदु ष्य देवः सविता हिरण्यया बाहू अयंस्त सवनाय सुक्रतुर्घृतेन पाणी अभि प्रुष्णुते मखो युवा सुदक्षो रजसो विधर्मणो३म्"(३)।

इत्युद्यम्यमाने।

"आ सुते सिञ्चत श्रियं रोदस्योरभिश्रियं रसा दधीत वृषभो३म्(४)

आ नूनमश्विनोर्ऋषिः स्तोमं चिकेत वामया आ सोमं मधुमत्तमं घर्मं सिञ्चादथर्वणो३म्"(५)।

इत्यासिच्यमानयोः।

---

(१) अत्र संहितास्वरेण जपः।

(२) आसेकोद्यमकर्मणोर्विपर्यासे 'यथाकर्मे'(शां० श्रौ० ५।१०।१३)ति सूत्रात् प्रथम "मुदुष्य देवः सविते"त्येतामभिष्टु"त्यासु ते सिञ्चतश्रियमानूनमश्विनोऋषि"रित्येते अभिष्टुयात्। (३) ऋ० ६।७१।१। (४) ऋ० ८।७२।१३।

(५) ऋ० ८।९।७।

आध्वर्यवपद्धतिः ।

इन्द्रायत्वाभिमातिघ्ने स्वाहा ।

सवित्रे त्वा ऋभुमते विभुमते वाजवते स्वाहा ।

बृहस्पतये त्वा विश्वदेव्यावते स्वाहा ।

यमाय त्वाङ्गिरस्वते पितृमते स्वाहा" । ( ३८।७-९ ) ।

स्वाहा घर्मायेत्युपयमन्यासिञ्चति घर्मे ।

"ओँस्वाहा घर्माय" ।

स्वाहा घर्मः पित्रे इति जपित्वा ।

"ओँस्वाहा घर्मः पित्रे" । ( ३८।९ )

अतिक्रम्याश्राव्याह घर्मस्य यजेति ।

ओ३श्रा३वय ।

आग्नीत्—अस्तु श्रौ३षट् ।

अध्वर्युः—घर्मस्य यज ।

औद्गात्रपद्धतिः ।

ई २३४५(१) ॥ १८ ॥

घर्मे हुते इमाउवामित्यश्विनोर्व्रते (२)सरुद्रायेत् । अश्विनावृषी

हौत्रपद्धतिः ।

"प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नो३म्"(३) ।

इति प्रव्रजत्सु ।

"नाके सुपर्णमुप यत्पतन्तं हृदा वेनन्तो अभ्यचक्षत त्वा हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्यो३म्"(४) ।

इत्यनुसंयन् ।

ततो होतृषदन उपविश्य घर्मस्य यजेत्युक्ते ।

भूर्भुवर्यं ४ यजामहे ।

(५)"उभा पिबतमश्विनोभा नः शर्म यच्छतमविद्रियाभिरूतिभिः(६)

---

( १ ) १७, १८—ऊ० आ० ४, १, ३, ६—आ० गा० २।२।६—६ ॥

( २ ) "हुतेऽश्विनोर्व्रतेऽहोरात्रयोर्वा" ( द्रा० श्रौ० २।२।३८ )

( ३ ) ऋ० १।४०।३ । ( ४ ) ऋ० १०।१२३।६ ।

( ५ ) अत्र "परिष्टाच्च ये यज्ञामहाद्देवतादेशनं सपुरोऽनुवाक्ये" ( शा० श्रौ० १।२।१९ ) इति परिभाषितत्वात्पुरोऽनुवाक्याया अभावाद्देवतादेशनं न भवति ।

उभापिबतमश्विना ( ऋ० १।४७।१५ ) गायत्री, तप्तो वां घर्मं इत्यादि क्लृप्तजा ( शा० श्रौ० ५।१०।१८ ) त्रिष्टुप्, आभ्यामेकीकृत्य मध्येऽनवानयन् वषट्कुर्यात् । "द्वाभ्यां यजेत् त्रिष्टुब्वतीभ्यां पूर्वाह्न" इति ( कौ० ब्रा० ८।७ ) श्रुतेः ।

( ६ ) ऋ० १।४६।१५ ।

आध्वर्यवपद्धतिः ।

वषट्कृते जुहोति।विश्वा आशा इति ।

"ॐविश्वा आशा दक्षिणसद्विश्वान्देवानयाडिह।

स्वाहाकृतस्यधर्मस्य मधोः पिबत मश्विना" ( ३८।१० ) ।

स्वाहाकारे (१)होमः । इदमश्विभ्याम ।

दिविधा इति श्रित्कंपयति ।

"ॐ दिवि धा इमं यज्ञमिमं यज्ञन्दिवि(२)धाः" (३८।११) ।

स्वाहाऽग्नय इत्यनुवषट्कृते सशेषम् ।

"ॐस्वाहाऽग्नये यज्ञियाय शं यजुर्भ्यः(३) ( ३८।११ )

इदमग्नये स्विष्टकृते न मम । उदकोपस्पर्शः ।

औद्गात्रपद्धतिः ।

बृहतीछन्दः घर्मोदेवता ।

हाँइहा। ३। ई हो इ हा ३। ३। ईमा उर्वा दिविष्टयो ओ हा उ। उस्रा· इयन्ते अश्विना ओ हा उ। अयं वामह्वेवसे शचीवसू ओ हा उ। विशं

हौत्रपद्धतिः ।

एततो धां घर्मो न क्षति स्वहोता प्र वामध्वर्युश्चरति प्रयस्वान्मधो· र्दुग्धस्याश्विना तनाया वीतं पातं पयस उस्रिया(४)या ४ वौ ४ षट् । ओजः सहः सह ओजः स्वः ।

ततो भूर्भुवः घर्मस्याग्ने वीही ४ वौ ४ षट् ।

ओजः सहः सह ओजः स्वः ।

इति पूर्वार्द्धे याज्या ।

अथापरार्द्धे–

भूर्भुवर्ये ४ यजामहे (५)ऽस्य पिबतमश्विना युवं मदस्य चारुणो· मध्वोरातस्य धिष्ण्यायदुस्रिया स्वाहुतं घृतं पयोऽयं सु वामश्विना भाग आ गतम्माध्वी धर्तारा विदथस्य सत्पती तप्तं घर्मं पिबतं रोचने दि(६)वा ४ वौ ४ षट् ।

---

(१) मन्त्रान्त एव होमः न त्वन्तरा स्वाहाकारान्ते । अतएवं स्वाहा करोति परां देवतामिति ( श० ब्रा० १४।२।२।१६ ) मन्त्रस्वरूपानुवादमात्रं न त्वन्तरा होमविधिपरमिति देवयाज्ञिकः ।

(२) उत्कम्पनमत्र सकृन्मन्त्रेण द्विस्तूष्णीं "एकद्रव्ये कर्मावृत्तौ सकृन्मन्त्रवचन" ( का० श्रौ० १।७।८ ) मिति परिभाषायामुक्तत्वात् ।

(३) 'तत एव होम' ( का० श्रौ० ३।३।२६ ) इत्युक्तेरत्रार्द्धे होमः ।

(४) शां० श्रौ० ५।१०।१८ ।

(५) ऋ० ८।५।१४ । (६) शां० श्रौ० ५।१०।२१ ।

आध्वर्यवपद्धतिः ।

अश्विना घर्ममिति ब्रह्माऽ(१)नुमन्त्रयते ।

"ॐअश्विना घर्मम्पातऽं० हार्द्वानमहर्दिवाभिरूतिभिः ।

तन्त्रायिणे नमो द्यावापृथिवीभ्याम्" ( ३८।१२ ) ।

अपातामिति यजमानः ।

"ॐअपातामश्विना घर्ममनु द्यावापृथिवी अमर्ऽं० साताम् ।

इहैव रातयः सन्तु" ( ३८।१३ ) ।

ॐ इषे पिन्वस्वेति पिन्वमानमनुमन्त्रयते

अध्वर्युः—

"इषे पिन्वस्वोर्जे पिन्वस्व ब्रह्मणे पिन्वस्व क्षत्राय पिन्वस्व द्यावापृथिवीभ्यां पिन्वस्व" ( ३८।१४ ) ।

औद्गात्रपद्धतिः ।

विशऽं हि गच्छुथो ओ हा उ । हो इहा ३ । ईहो इहा २ । ईहो इहा ३४ ओ हो वा । ईऽ५ हा ही ही १ ही ही ॥ १९ ॥

हो ई हा । इ हो इ हा । ३ । इमाउवां दिविष्ट्या हो हा उ । उस्राहयन्ते । अश्विनाहो हाउ । अयं वामह्वेवसे शची वसू हो हाउ । विशंविशऽं हि गच्छुथो होहा उ । हो ई हा ई हो ईहा । २ । हो ई हा । ई हो ई हो ३४ औ हो वा ॥ ई २ । ३ । (२) ॥ २० ॥

हौत्रपद्धतिः ।

ओजः सहः सह ओजः स्वः ।

भूर्भुवः घर्मस्याग्ने वीहो ४ वौ ४ पट् ।

ओजः सहः सह ओजः स्वः ।

इत्यपराह्णे याज्या ।

ततः "स्वाहाकृतः शुचिर्देवेषु घर्मो यो अश्विनोश्चमसो देवपानस्तमी विश्वे अमृतासो जुषाणा गन्धर्वस्य प्रत्यास्ना रिहन्तो३म्"(३) ।

इत्यभिष्टुत्य ।

---

( १ ) "अथ ब्रह्मानुमन्त्रयते ब्रह्मा वा ऋत्विजां भिषक्तम" (श० ब्रा० १४।२।२।१९ इति श्रुतेर्ब्रह्मानुमन्त्रयते । हुतं द्रव्यमिति कर्कः । पात्रस्थमित्यन्ये । उभयमेवतत्समूलं शाखान्तरात् । "त्रिधा आशा इति ब्रह्मा हुतमनुमन्त्रयत" इति काठके । "घर्मम्पातमश्विनेत्यनुवाकशेषेणोपस्थायोपर्याहवनीये धार्यमाणमि"त्यापस्तम्बसूत्रे ( १५।१०।१२ ) । अतश्चेच्छयाऽनुष्ठानम् ।

( २ ) १९–२० छ० आ० ४, १, २, २, दा० गा० ४, १, १५–१६ ।

( ३ ) शां० श्रौ० ५।१०।२३ ।

आध्वर्यवपद्धतिः ।

धर्मासीत्युत्क्रामत्युत्तरपूर्वार्धम् ।

"ॐधर्मासि सुधर्मे" ( ३८।१४ ) ।

अमेन्यस्म इति खरे करोति ।

"ॐअमेन्यस्मे नृम्णानि धारय ब्रह्म धारय क्षत्रं धारय विशन्धारय" ( ३८।१४ ) ।

उपविश्य विकङ्कतशकलैर्जुहोति घर्मे न्यज्य न्यज्य स्वाहा पूष्णे शरस इति प्रतिमन्त्रम् ।

"ॐस्वाहा पूष्णे शरसे" ( ३८।१५ ) ।

इदं पूष्णे शरसे न मम । हुत्वा हुत्वा प्रथमपरिधा उपंश्रयति ।

"ॐस्वाहा ग्रावभ्यः" ( ३८।१५ ) ।

इदं ग्रावभ्यो न मम ।

"ॐस्वाहा प्रतिरवेभ्यः" ( ३८।१५ ) ।

इदं प्रतिरवेभ्यः । चतुर्थमहुतमुदङ्ङीक्षमाणो दक्षिणतो बर्हिष्युपगूहति । उभयोरपसव्यम् ।

"ॐस्वाहा पितृभ्यऽ ऊर्ध्वबर्हिभ्यो घर्मपावभ्यः स्वाहा" ( ३८।१५ )इदं पितृभ्य ऊर्ध्वबर्हिभ्यो घर्मपावभ्यो न मम(१) । उभयोः

हौत्रपद्धतिः ।

(२)"सखे सखायमभ्या ववृत्स्वाशुं न चक्रं रथ्येव रंह्यास्मभ्यं दस्म रंह्याग्ने मृळीकं वरुणे सचा विदो मरुत्सु विश्वभानुषु तोकाय तुजे शुशुचान शं कृध्यस्मभ्यं दस्म शं कृधो३म्"(३) ।

इत्यायति ।

(४)"गन्धर्व इत्था पदमस्य रक्षति पाति देवानां जनिमान्यद्भुतो गृभ्णाति रिपुं निधया निधापतिः सुकृत्तमा मधुना भक्षमाशतो३म्"(५) ।

इति साद्यमाने ।

---

( १ ) अत्र त्यागोऽपि यजमानेनापसव्येन कार्यः । होमामात्रेऽपि "त्रया वै पितरस्तानेवैतत्प्रीणाति" ( श० ब्रा० १४।२।२।३६ ) त्यवगूहने च पितृणां प्रीणनश्रवणात् । "स्वाहा पितृभ्य ऊर्ध्वबर्हिभ्यो घर्मपावभ्य इति । अहुतमेवोदङ्ङीक्षमाणो दक्षिणार्द्ध उपगूहति' ( श० ब्रा० १४।२।२।३६ ) इति श्रुतेः ।

( २ ) अध्वर्या उत्तरपूर्वार्द्धे आगच्छति सति सखे सखायमित्येतामभिष्टुयात् ।

( ३ ) ऋ० ४।१।३ ।

( ४ ) अध्वर्युणाहवनीयादुत्तरतः खरे महावीरपात्रे साद्यमाने 'गन्धर्व' इत्येतामभिष्टुयात् । ( ५ ) ऋ० ९।८३।४ ।

आध्वर्यवपद्धतिः।

सव्यम्, उदकोपस्पर्शश्च।

"ॐ स्वाहा द्यावापृथिवीभ्याम्" (३८।१५)।

इदं द्यावापृथिवीभ्याम्०।

"ॐस्वाहा विश्वेभ्यो देवेभ्यः" (३८।१५)।

इदं विश्वेभ्यो देवेभ्यो न मम।

सप्तमं च सर्वलेपाक्तं(१) दक्षिणेक्षमाणः प्रतिप्रस्थात्रे प्रयच्छति।

"ॐस्वाहा रुद्राय रुद्रहूतये" (३८।१६)।

इदं रुद्राय रुद्रहूतये०। उभयोरुदकस्पर्शः(२)।

तꣳ० स उत्तरत शालाया उदञ्चं निरस्यति तूष्णीम्।

स्वाहा सञ्ज्योतिषेत्युपयमन्यामासिञ्चति घर्म्यम्।

"ॐस्वाहा सञ्ज्योतिषा ज्योतिः (३)गच्छताम्" (३८।१६)।

निधनकाल उत्तरꣳ० रौहिणं जुहोति।

औद्गात्रपद्धतिः।

(प्रस्तोता) द्वितीयरौहिणपुरोडाशहोमकाले इन्द्रश्वर इति रौहिणं साम सकृद् गायेत्। इन्द्रऋषिस्त्रिष्टुप्छन्दः घर्मोदेवता,

हौत्रपद्धतिः।

(४) "तं घेमित्था नमस्विन उप स्वराजमासते ऽर्थं चिदस्य सुधितं यदेतव आवर्तयन्ति दावनो३म्" (५)।

इति प्रागाथिकामावर्त्स्यति।

(६) "हविर्हविष्मो महि सद्म दैव्यं नभो वसानः परि यास्यध्वरं राजा पवित्ररथो वाजमारुहः सहस्रभृष्टिर्जयसि श्रवो बृहो३म्(७)"।

---

(१) अत्र सर्वस्याञ्जनवचनात्पूर्वेषां शकलानामप्यात्रस्याञ्जनम्।

(२) रौद्रत्वात् "रौद्रꣳ० राक्षसमासुरमाभिचरणिकं मन्त्रमुक्त्वा पित्र्यमात्मानं चालभ्योपस्पृशेदप" (का० श्रौ० १।१०।१४) इति परिभाषोक्तेः सद्मनसमर्पणानन्तरमुदकस्पर्शनम्। (३) अत्र गच्छतामित्यस्याध्याहारः।

"अथ महावीरादुपयमन्यां प्रत्यानयति स्वाहा सं ज्योतिषा ज्योतिरि"ति (श० ब्रा० १४।२।२।४०) श्रुते.। पूर्वं "मयोपयमन्या महावीर आनयती" (श० ब्रा० १४।२।२।१३)त्युक्तम्। अधुना महावीरादुपयमन्यां प्रत्यानयति पश्चात्प्रक्षिपतीत्यर्थः।

(४) अध्वर्यावावर्त्स्यतीति = उपयमन्यां घर्मद्रव्यासेचनार्थं महावीरपात्रं न्युब्जीकुर्वति सति 'तं घेमित्ये'ति प्रागाथिकां = प्रगाथपदिष्टामष्टममण्डलभवामभिष्टुयात्।

केषांचिदध्वर्यूणां होमानन्तरमेव न्युब्जीकरणमस्ति तत्र 'तं घेमित्या' 'सन्ने सखायं' 'गन्धर्व इत्थे' ति क्रमः। (५) ऋ० ८।७०।१७।

(६) अत्राध्वर्यूणामुपयमनीभ्यनमंस्याग्निहोत्रावृता होमो भवति तद्धोमात्पूर्वं 'हविर्हविष्म' इत्येतामभिष्टुयात्। (७) ऋ० ९।८३।५।

आध्वर्यवपद्धतिः ।

"ॐ अहः केतुना जुषताᳪंसुज्योतिर्ज्योतिषा स्वाहा" ( ३८।१६ ) । इदं घर्माय ।

उपध्रितानि(१) च प्रहरति ।

"(२)अग्निहोत्रावृता हुत्वा धाजिनवद्भक्षयन्ति । अपरेणाहवनीयं

औद्गात्रपद्धतिः ।

हाँउ । ३ । औंयिही । ३ । औंयिहियाँ । ३ । ओंसाँउ । ३ । औंयाँम् । ३ । नाँमाः । ३ । किंद् । २ । इन्द्रघर्मरोने मधितोहवा २ न्तोंयि । यत्याँयाँ युनजेतेधिया २ स्ताः । शूरोनृपतोश्रवसश्चका २ मोपि । ओंगोमतिव्रजे-भजोतु वा २ ध्वाः । मना २३ होइ । प्राणा २३ होइ । चक्षू २३ हौंयि । श्रोत्रा २३ एंहोयि घोषा २३ होयि । व्रता २३ ᳪंहोयि । भूता २३ ᳪंहो-यि । पोना २३ ᳪंहोयि । चित्ता २३ ᳪंहोयि । धीता २३ ᳪंहोयि । सुवा

हौत्रपद्धतिः ।

इति पुरा होमात् ।

---

( १ ) उपध्रितप्रहरणं शाखान्तरात् ।

( २ ) अत्र होममात्रमग्निहोत्रवत्कार्यम् । न तु सञ्चराचमनादिका सर्वेतिकर्तव्यता । यदि तथाभिमतमभविष्यत्तदाग्निहोत्रं हुत्वेत्येवमेवावक्ष्यत् । आघात्कौण्डपायिनामयन-वत् (का०श्रौ०२४।४।२४)।अत्र त्वग्निहोत्रावृतोपयमनीस्थं द्रव्यं हुत्वेत्येतावदेवोक्तं,अतस्त द्रुद्रव्यस्य समिदाधानपूर्वक आहुतिद्वयहोमः न प्राचीनोदीचीनान्यङ्गानि ।

अत्रापस्तम्बः—"अपीपरोमाह्नो रात्रियै मा पाहि । अपीपरो मा रात्रिया अन्हो मा पाही"( १५।१२।७ ) ति मन्त्राभ्यां सायं प्रातः समिधमादधाति । "अग्निर्ज्योति-र्ज्योतिरग्निः स्वाहेति सायमग्निहोत्रं जुहोति । सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः। संसृष्टहोमं वा" (आ०श्रौ० १५।१२।८-९ ) इति । एवमेव कठसूत्रेऽपि ।

अतोऽत्रापि प्रातः "सूर्यो ज्योतिषं त्वे" (का० श्रौ० ४।१४।१३) ति मन्त्रेण समिदा-धानं "सूर्योज्योतिरि" (शु० य० ३।८) ति मन्त्रेण होमः । "सजूरि" (शु० य० सं ३।९)ति वा । सायं घर्मे चाग्निज्योतिष" ( का०श्रौ० ४।१४।१३ ) मिति समिदाधानं "अग्नि-र्ज्योति" ( य० सं० ३।९ ) रिति "सजू (३।९) रि"ति वा पूर्वाहुतिहोमः । एवं समन्त्रक मेवाग्निहोत्रवद्धोमं कुर्यात् न त्वमन्त्रकम् । आवृच्छब्दस्येतिकर्तव्यतावाचित्वात् । न ह्या-वृच्छब्दः क्वचिदपि मन्त्ररहितां क्रियामभिधत्ते । तथासति "सर्वं सञ्ज्योषां करोत्येतयैवा-वृता जुपहरन्त्यजुस्तूष्णीमेव" इत्यत्रानुपहरन्त्यजुरित्याद्यवक्तव्यं स्यात् । आवृतेत्य नेनैवार्थस्य सिद्धत्वात् उक्तं च,अत आवृच्छब्दो मन्त्रनिवृत्तिपरो न भवतीति गम्यते। अत एवापस्तम्बसूत्रे (१५।१२।७-९) समन्त्रकमेवाग्निहोत्रमुपदिष्टम् । अमन्त्रकपक्षेऽपि प्रातरिदं सूर्यायेति त्यागः । सायं घर्मे चेदमग्नय इति । आपस्तम्बसूत्रे तथा दर्शनात् । "पूर्ववयो-निः पूर्वांवृत्पुनराधानकर्मणि" "पिण्डपितृयज्ञावृता देयं" "मृताहिताग्न्यवृञ्च सोपकरण-माहिताग्न्यावृता दग्ध्वा तामेतैरेव यजुर्भिरतया वृता चिनोति तस्यैषैव सामान्यावृदि"

आध्वर्यवपद्धतिः।

मौञ्जं कूर्चं निदधाति। औदुम्बरीᳬंसमिधमादधाति।

"ॐ सूर्यज्योतिषं त्वा वायुमतीं प्राणवतीᳬंस्वर्ग्याᳬंस्वर्गायोपदधामि भास्वतीम्" (काश्रौ० ४।१४।१३)।

प्रदीप्तायां सजूरिति वा जुहोति।

"ॐ सजूर्देवेन सवित्रा सजूरुषसेन्द्रवत्या। जुषाणः सूर्यो वेतु स्वाहा" (शु० य० सं० ३।१०)

इदं सूर्याय न मम। कूर्चं निधाय गार्हपत्यमनवेक्ष्यैव तूष्णीं भूयसीमुत्तराम्।

इदं प्रजापतये न मम। भूयिष्ठं स्रुचि सिक्त्वा(१) वाजिनवद्भक्षयन्ति मधुहुतमिति होत्रध्वर्युब्रह्मप्रस्तोतृप्रतिप्रस्थात्रग्नीद्यजमाना भक्षण-

औद्गात्रपद्धतिः।

२३ हौंयि। ज्योता २३ यिहों २ वा २३४ औ२ हों वा। ॐ २३४५(२) ॥२२॥

हौत्रपद्धतिः।

ततो हुतशेषस्य भक्षणम्, प्राणभक्षो होतुः, प्रत्यक्षो यजमानस्य, ततो होता अध्वर्य उपह्वयस्व ब्रह्मन्नुपह्वयस्व प्रस्तोतरुपह्वयस्व। प्रतिप्रस्थातरुपह्वयस्व। अग्नीदुपह्वयस्व। (यजमानोपह्वयस्व।) एवं(३) तं तं

---

त्यादौ सर्वत्र समन्त्रकेऽप्यावृच्छब्दप्रयोगदर्शनाच्च समन्त्रकमेवाग्निहोत्रं होतव्यमित्यामातोति देवयाज्ञिकाः।

आवृच्छब्दो मन्त्ररहितक्रियामात्रपर इति कर्काचार्याः (का० श्रौ१।२।४)।

वाजिनवदित्युपह्वपूर्वकं भक्षयितारः। तत्क्रमोऽपि वाजिनवदेव। तेन होत्रध्वर्युब्रह्मप्रस्तोतृप्रतिप्रस्थात्रग्नीद्यजमानानामनेनैव क्रमेण सोपह्वं भक्षणम्। उभयतो वा यजमानो भक्षयति प्रथम उत्तमश्चेति। अस्मिन्पक्षे आद्यावन्ते च उपह्वप्रार्थनम् "अथ यजमानाय घर्मोच्छिष्टं प्रयच्छति स उपह्वमिष्ट्वा भक्षयति सुहुत (श० ब्रा० १४।२।२।४२) मित्यादि श्रुतेः। अस्यां श्रुतौ केवलस्य यजमानस्यैव भक्षणमुक्तं ऋत्विजां शाखान्तरात्। अत्र छन्दोगसूत्रे विशेषः—सत्रं चेत्स्याद्यजमाना उपह्वयध्वमित्येवोपह्वानमिति। एवंकारः सर्वेषूपह्वानेष्वेवमेव प्रापणार्थ इति तद्भाष्ये।

(१) न द्विप्रकम्पना (का० श्रौ० ४।१४।११) दि हुत्वेत्यनेन होममात्रस्योक्तत्वात्।

(२) २२ छ० आ० ४, १, ३, ६, आ० गा० ४, २, २० ॥

(३) यजमानोऽपि होतारं ब्रह्माणं प्रस्तोतारमध्वर्युं प्रतिप्रस्थातारमाग्नीध्रं च 'होतरुपह्वयस्व' इत्येवमादिना तं तं पृष्ट्वा 'हुतं हवि' (शां०श्रौ० ५।१० ३१) रिति मन्त्रेण भक्षयेत्।

अत्र कात्यायनेन (श्रौ० २६।७।१९) सर्वेषां भक्ष उक्तः। शाङ्खायनानां (शां० श्रौ० ५।१०।२८–२९) तु होतृयजमानयोरेव भवति।

आध्वर्यवपद्धतिः।

क्रमेण समुपहूय स्वस्वमन्त्रेण।

"ॐ मधु हुतमिन्द्रतमे अग्नावश्याम ते देव घर्म नमस्ते अस्तु मा मा हिंꣳसीः"। (३८।१६)।

उच्छिष्टखरे(१) प्रक्षाल्योपयमनीं निदधाति।

(२)अत्र चोपश्रितप्रहरणम्। सꣳ० सादयमानायानुवाचयति।

सꣳ० सादयमानायानुब्रूहि।

सꣳ० सादयमानेभ्य इत्येके 'सूयवसाद्भगवती'( शां०श्रौ०५।१०।३३ ) स्तूयमाने यवसोदके धेनवे प्रयच्छन्त्येके।

सर्वमासन्द्यां करोत्यतः प्राक्। पूर्ववच्छान्तिपाठः सर्वेषाम्। ऋचं वाचं० शरदः शतात् ॐ शान्तिः ३।

सर्वमासन्द्यां करोति। अभीममिति महावीरम्।

"ॐ अभीमम्महिमा दिवं विप्रो बभूव सप्रथाः।

उत श्रवसा पृथिवीꣳसꣳ० सीदस्व महाँ असि रोचस्व देववीतमः।

औद्गात्रपद्धतिः।

यदाध्वर्यवो घर्मपात्राणि सम्राडासन्द्याꣳसमारोपयन्ति तदा इत एत इत्यारूढवदाङ्गिरसन्त्रिर्गायेत्। अङ्गिरा ऋषिः अनुष्टुप्छन्दः घर्मो देवता—

हौत्रपद्धतिः।

पृष्ट्वा तैः प्रत्येक 'मुपहूत' इति प्रत्युक्ते।

"ॐ हुतं हविर्मधु हविरिन्द्रतमेऽग्नावश्याम ते देव घर्म मधुमतो वाजवतः पितुमतः(३)" इति भक्षमन्त्रः।

ततः सꣳ०सादयमानायानुब्रूहीत्युक्ते महावीरपात्रेषु (सं सादयमानेषु)

"आ यस्मिन्सप्त वासवा रोहन्ति पूर्व्या रुहः।ऋषिर्हि दीर्घश्रुत्तम इन्द्रस्य घर्मो अतिथी३म्"(४)।

इत्यभिष्टुत्य

"सूयवसाद्भगवती हि भूया अथो वयं भगवन्तः स्याम। अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती३म्(५)।

(१) केचिद् घर्मत्विजः सयजमाना अत्र पवित्रैर्मार्जयन्त इत्याहुः। तथा चाथर्वणे पठ्यते "उच्छिष्टखरे पवित्रैर्मार्जयन्त" इति। अथवा आथर्वणेऽप्युपयमनीप्रक्षालनमेवैतत्। शतपथे—"य एव मार्जालीये बन्धुः सोऽत्रे" (१४।२।२।४३) ति वाक्यशेषात् मार्जालीये प्रक्षालनं पात्राणामेवास्ति नर्त्विजामत उपयमनीप्रक्षालनमेव युक्तम्।

(२) स्वशाखायामत्रैव श्रुतत्वात् "अनुप्रहरति शाकलानथोपसदा चरन्ती" ( श० ब्रा० १४।२।२।४३ ) ति श्रुतेः। (३) शां० श्रौ० ५।१०।३१।

(४) शां० श्रौ० ५।१०।३२। (५) ऋ० १।१६४।४०।

आध्वर्यवपद्धतिः ।

वि धूममग्ने अरुषम्मियेध्य सृज प्रशस्तदर्शतम् ( ३८।१७ ) ।

अत्र वा शान्तिपाठः । ततो द्वारोद्घाटनम् । सकृदासादनप्रोक्षणे, खरस्थूणामयूखकृष्णाजिनाभ्युपशयासन्दीनामावृत्तिर्वा प्रधानकालत्वात् । इति पूर्वाह्णप्रवर्ग्यः ।

## ( उपसदिष्टिः )

अथोपसत् । उपसदेव वाऽप्रवर्ग्ये । प्रणीताद्युपसत् (१) ।(२)चतुरासनम् '

औद्गात्रपद्धतिः ।

ऽ
औरो ३ हान् । ३ । इत एत ऊ ३ दारू १ हा २ न् । दिवः पृष्ठान्यो ३ या रू १ हा २ न् । प्रभूर्जयो या ३ था पा १ था २ उद्यामङ्गिरा ३ सो-
ऽ
यो १ यू २ः । औरो २ हान् । २ । ओ २३ । रो २ । हो २ ३ ४ औ हो वा । ( अत्र स्वर्णिधनं भवति(३) । सुं २३४ वोः(४) ॥ २३ ॥

प्रस्तोता एतानि घर्मसामानि प्रतिप्रवर्ग्यं गायेत् ।

हौत्रपद्धतिः ।

सुयवसाद्भगवती हि भूया अथो वयं भगवन्तः स्यामाद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्तो३म ॥

सुयवसाद्भगवती हि भूया अथो वयं भगवन्तः स्यामाद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्तो३म ॥

इति त्रिः परिधाय मदन्तीरुपस्पृश्योत्सृज्यते । स्रुचं वाचमित्यादि पूर्ववत् । इति घर्मः ।

---

( १ ) प्रणीतादि = प्रणीताप्रणयनादि उपसदिष्टिर्भवति । अग्न्यन्वाधान-प्रस्तरण-ध्रुवाप्रणयनानामभावस्यो ( पूर्वं ६० पृ० टि० ) क्त्वात्प्रणीताद्येव घटते । तत्र प्रणीतानां यदि सर्वार्थत्वं अदृष्टार्थत्वं वा तद्वैतत्सूत्र ( का० श्रौ० ८।२।१८ ) मुपपद्यते न संयवनार्थत्वे, अत्र संयवनस्याभावात् । ततः प्रणीतानां सर्वार्थत्वेनेव युक्तं, तथा हि द्रव्यप्रकल्पनस्य परार्थत्वात् प्रणीतानामपां अस्मिन्प्रयोगे यद्यदकार्यं तदर्थता गम्यते न च दृष्टेऽर्थे सम्भवत्यदृष्टं कल्पनीयं सोऽपि विनियोगः श्रूयते "प्रणीताभिर्हवींषि संयौति"(आप० श्रौ० १।२४।३)ति स सर्वार्थत्वेन संयवनेऽपि प्राप्तानामेवानुवादः वर्तमानापदेशात् । सूत्रकारस्याप्ययमेवाभिप्रायो गम्यते येन संयवनाभावेऽपि प्रणीताद्युपसदिति सूत्रं कृतवान् ।

तच्च प्रणीताप्रणयनं यजमानमदन्तीभ्यो गृहीत्वा कर्तव्यं "उदकार्थं स्तत" ( का० श्रौ० ७।१।१ ) इत्युक्तत्वात् ।

( २ ) चतुरासनमिति देवयाज्ञिकाः । याचस्पतिप्रभृतयः प्रणीतार्थं च चतुरासनादानमिति रामचन्द्रवाजपेयिनः । नियोगार्थत्वाद्वाचस्पतिपक्षः ।

( ३ ) संहितायान्तु "ऊ २, ३, ४, पा" इति निधनं श्रूयते । निधनं नाम साम्नोऽन्तिमोभागः । ( ४ ) २३ छ० आ० १, २, ९, २, गे, गा, ३, १, २, ।

आध्वर्यवपद्धतिः।

वाचस्पतिप्रैषः, मदन्तीभ्यः प्रणीताप्रणयनम्, परिस्तरणमाहवनीयस्यैव।

पात्रासादने—अग्निहोत्रहवणी, स्फ्यः, पवित्रच्छेदनानि, पवित्रे, आज्यस्थाली, कुशमुष्टिः, वेदितृणम्, (१)पक्षे—योक्त्रम्, स्रुवो, जुहूः, उपभृत्सन्नहनाच्छादनानि, आतिथ्यपरिधयो विधृत्यौ च। आज्यर्थं० होतृषदनम्।

उपकल्पनीयानि-इध्मकाष्ठानि एकादश, आतिथ्यप्रस्तरोपसन्नद्धमेव बृहत्स्तरणार्थं(२)बर्हिः, उपसदर्थमाज्यं, मदन्त्युदकम् (३), हिरण्यम् (४), स्रुवग्रहणपात्रं च, वाग्यमनम्, पवित्रकरणं प्रोक्षणीसंस्कारः। पात्रप्रोक्षणम्, असञ्चरे प्रोक्षणीनिधानम्, वाग्विसर्गः, कुक्कुटाहननम्(५),

---

(१) अयोक्त्रदीक्षापक्षे इति भावः।

(२) मुष्टिमात्रमिति रामवाजपेयिनः।

अत्र सूत्रम् "मात्रावदिध्मबर्हिः" (का० ८।२।२३) रिति। इध्माबर्हिषोर्या मात्रा ब्राह्मणे श्रुता तत्परिमाणं भवति। अत एकादशकाष्ठक इध्मो भवति, सामिधेनीनां नवसङ्ख्यत्वात्तासां प्रणवे प्रणवे एकैकस्य प्रक्षेपात्। स्वरयानुस्वरयोः च द्वे एवमेकादशेति। बर्हिश्चैकबृहत्स्तरणपर्याप्तं भवति। "अष्टादशेध्मं परिधिवृश्चाणाम्" (का० श्रौ० १।३।१८) मिति परिभाषयाऽष्टादशपञ्चदशकाष्ठक इध्मे प्राप्ते मात्रावदित्युक्तम्।

(३) यजमानार्थम्।

(४) आप्यायनार्थम्। अत्र प्रसङ्गाद्धिरण्यशकलमानमुच्यते—

हिरण्यशकलार्थं तु हिरण्यं यस्य नोच्यते।

कृष्णलेनैव सङ्ख्याख्या यज्ञे सिद्ध्यति याज्ञिकी।

कृष्णलं त्रियवं मानं ताम्रायसमतःपरम्।

सुवर्णार्धं च माषाणां सुवर्णाश्च त्रिसप्ततिः।

त्रीणि चैव सहस्राणि दद्याद्धुसुवर्णके। (का० श्रौ० सू० ७।२८) इति।

(५) अत्रायं विचारः—किं पेषणाभावे चोदकप्राप्तं "कुक्कुटोऽसी" (शु० य० सं० १।१६) त्यादिना दृषदुपलयोराहननं भवति उत नेति। तत्र सूत्रेणैव पूर्वपक्षः—"हविष्कृतमाहूयानाहननमपेषणे तीक्ष्णार्थत्वात्" (का० श्रौ० ८।२।१६)। अस्यार्थः—अपेषणे = पेषणरहिते कर्मणि हविष्कृतमाहूय अनाहननं भवति। हविष्कृदाह्वानकाले यद्दृषदुपलयोराहननं तन्न भवतीति। यथोपसत्सु पयस्यायां घर्मेष्टिषु च। कुतः आहननस्य तीक्ष्णार्थत्वात्। प्रकृतौ दृषदुपलयोस्तीक्ष्णीकरणार्थमाहननम्। तीक्ष्णीकृताभ्यां हि सुखेन पेषणं कर्तुं शक्यते। अतोऽपेषणेऽर्थलोपान्निवर्तत इति प्राप्ते—

"स्याद्वा धर्ममात्रत्वात्" (का० श्रौ० ८।२।१७)। वाशब्दः पक्षव्यावृत्तौ। अपेषणेऽप्याहननं भवत्येव। आहननस्य धर्ममात्रत्वात्, यत इदमाहननं धर्ममात्रमदृष्टार्थं न तीक्ष्णीकरणार्थम्। यतो नियतप्रहारं काष्ठकरणकं च न हि तथा त्रिसङ्ख्याकेनाहननेन पाषाणस्य तीक्ष्णतोपजायते। अतो धर्ममात्रमदृष्टार्थमारादुपकारकं प्रकृतावाहननम्। तेन प्रकृतिवदेवापेषणेऽपि पयस्याज्यचर्विष्टिषु भवत्येवेति सिद्धान्तः।

आध्वर्यवपद्धतिः ।

अध्वर्योराज्यनिर्वापः, (१)वेदयन्धः, अध्वर्योरेवाज्याधिश्रयणम्, पर्यग्निकरणम्, उदकोपस्पर्शः । सतृणवज्ञादानादि, पांसुस्थाने (२)बर्हिषः प्रच्छेदं० हरति । पूर्वपरिग्रहान्ते उत्तरपरिग्रहः । नानुमार्जनम्, वेद्युपरि प्रोक्षणीधारणम् । प्रैषे—मदन्तीरिति वा प्रेष्यति, प्रोक्षणीर्मद-

---

उपसत्सु याजदुक्तपयस्यायां चापूर्वत्वात्प्रकृतितः प्राप्तेरभावादेव न भवतीति देवः ।

उपसदो यावदुक्तत्वान्न कुक्कटाहननादीति रामवाजपेयिन ।

अत्र निर्णयसूत्रप्रणयनादुपसत्सु भवतीति याज्ञिकाः ।

"श्रुतेश्च" (का० श्रौ० ८।२।११) श्रुतेरप्याहननस्यादृष्टार्थतैव गम्यते न तीक्ष्णीकरणार्थता । तथाहि "स यत्रैष हविष्कृतमुद्वादयति तदेको दृषदुपले समाहन्ती" (श० ब्रा० १।१।४।१३) ति तथा "सैषासुरघ्नी (असुरघ्नी) वागुद्वदति स यस्य हैवं विदुष एतामत्र वाचं प्रत्युद्वादयन्ति पापीयांसो हैवास्य सपत्ना भवन्ती "(श०ब्रा०१।१।४।१७) ति । अत्र ब्राह्मणरूपया श्रुत्या दृषदुपलयोराहननमसुरघ्नहननार्थं न दृषदुपलयोस्तीक्ष्णीकरणार्थमिति प्रतीयते । ६।

( १ ) यजमानस्य वेदबन्ध इति रामः ।

( २ ) स्तम्बयजुर्हरणेऽध्वर्युर्बर्हिषः प्रच्छेदं पुरीषस्थाने बर्हिः प्रच्छिद्य प्रच्छिद्य हरति न तु पुरीषम् । अत एव बर्हिषः प्रच्छेदनोपदेशादातिथ्यायां यद्बर्हिस्तीर्णं तत्स्तृतमेव तिष्ठति नोद्धृत्य पुनस्तीर्यत इति गम्यते । अतश्च वेदेस्स्तृतत्वाद्वेदिकरणानुमार्जनवर्जितानां वेदिसंस्काराणामप्राप्तानामेव वचनात्पुनः करणम् ।

अत्र कात्यायनः—"परिस्तरण—पात्रसादन—प्रोक्षणाज्यनिर्वपणाधिश्रयणानि कृत्वा स्फ्यादि करोति" ( ८।२।२० ) इति । सूत्रेणानेनानुष्ठानस्यौकार्याय प्राकृताः पदार्था अनूद्यन्ते न तु प्राप्ताः परिसङ्ख्यायन्ते । तेनानुक्तस्याज्यनिर्वापानन्तरं वेदकरणं आज्याधिश्रयणानन्तरं च पर्यग्निकरणं भवत्येव । कुक्कुटाहननमत्र भवतीति केचित् । सूत्रकारेणात्रैव समर्थितत्वात् ।

अपरे त्वाहुः—"तस्मादन्यतरमेवाघारमाघारयति यं स्रुचेणे" (श०ब्रा०३।४।४।१) ति स्रुवाघारस्य प्राप्तस्यैव पुनर्विधानमितरस्यैवं जातीयस्यारादुपकारकस्यादृष्टार्थस्य परिसङ्ख्यानार्थमुपसदोऽपूर्वत्वज्ञापनार्थं ( जै० १०।७।१४ ) च । तेनात्र कुक्कुटाहनन—स्फ्योदकप्रहरणोत्तराघार—प्रयाजा-ज्यभागानुयाज-पत्नीसंयाज-दक्षिणाग्निहोम-पूर्णपात्र—विष्णुक्रमादिकमदृष्टार्थमारादुपकारकं न भवत्येवेति । अतोऽपूर्वत्वाद्यावदुच्यते तावदेव भवति नाधिकं प्रकृतितः प्राप्तं किंचित् ।

तत आज्यनिर्वपणं वेदबन्धनं आग्नीध्र एवाधिश्रयणमध्वर्योरेव पर्यग्निकरणं च, एतानि कृत्वा ततः स्फ्यादानादि कर्म कुर्यात् । स्फ्यादानं त्वप्राप्तमेव विधीयते वेदेस्स्तृतत्वेन स्तम्बयजुर्हरणस्य प्राप्त्यभावात् । यद्यप्युपसदोऽपूर्वत्वात्परिस्तरणादयोऽपि न प्राप्नुवन्ति तथाप्यत्र पूर्वधारस्य विहित ( श० ब्रा० ३।४।४।१ ) त्वात्, आग्नेयाग्नीषोमीयादीनां चाङ्गप्रधानार्थ ( पू०मी० ३।७।३ ) त्वात्पूर्वाघारप्रयुक्ताः परिस्तरणादयोऽप्यत्र भवन्तीति ।

आज्यपर्वप्रकाशः।

न्तीरासाद्येध्मं बर्हिरुपसाद्य स्रुचौ संमृड्ढि (१)पत्नीᳪसन्नह्याज्येनोदेहि। पक्षे—पत्नीसन्नहनाभावः। वेद्यां प्रोक्षणीनिधानम्, (२)स्फ्योदकप्रहरणपाण्यवनेजनाभावः। अपरेण प्रणीताः स्फ्येध्माबर्हिषामासादनम्। वेदाग्रनिष्पत्तिः। स्रुवतृतीयाः स्रुचः सम्मार्ष्टि(३)सम्मार्जनापासनम्। पक्षे पत्नीसन्नहनम्। आज्योद्वासनादीक्षणान्ते (४)अष्टगृहीतं जुह्वां चतुरुपभृति, यथाप्रकृति वा, इध्मप्रोक्षणम्, न वेदिप्रोक्षणं कर्तव्यमिति रामः।

"ॐ बर्हिरसि स्रुग्भ्यस्त्वा जुष्टं प्रोक्षामी"(२।१)ति बर्हिः प्रोक्षणम्। (५)एककृत्स्तरणम्। इध्मात्समिधमादाय आहवनीयकल्पनम्। नोपमुकोद्वहनम्(६)। परिधिपरिधानम्। स्पृश्यास्पृश्ये च। सूर्यस्त्वे(२।५)ति जपः। आवर्तनम्। विधृत्योः स्थापनम्। प्रस्तरासादनम्। *अभिधानम्। स्वस्वमन्त्रेण जुह्वादिप्रभृतीः सादनम्। आज्यस्थाली ध्रुवार्थे प्रियेणे(५।६)ति। ध्रुवा असदन्नि(५।६)ति सर्वालम्भः। पाहि मामि(५।६)-

* उपसदामपूर्वार्थत्वाधिकरणे न्यायमाला—

उपसत्सु निषिद्धेभ्यः शिष्टं सर्वं क्रियाचरेत्।
यावदुक्तमुताऽऽद्योऽस्तु चोदकस्यानिवारणात्॥
स्रौवाघारे पुनः श्रुत्या शिष्टस्य परिसङ्ख्यया।
अपूर्वार्थत्वतो वाऽन्त्योऽनुवादोऽत्र निषेधगीः।

(१०।७।२४—२५) इति।

(१) अयोक्त्रदीक्षापक्षे—'पत्नीᳪसन्नह्याज्येनोदेही'ति प्रैषो नियमेन।

(२) स्फ्योदकप्रहरणपाण्यवनेजनोत्तराघाराज्यभागादि यावदुक्तत्वान्निवर्तेत इति रामाशयः।

(३) अत्र स्रुचौ सम्मृड्ढीत्येव प्रैषो देयः। तथा च मानवे—"प्रोक्षणारासाद्येध्ममुपसाद्य स्रुचौ सम्मृड्ढ्याज्येनोदेहीति संशास्ती" (२।२।१।२२) ति।

(४) अष्टगृहीतं जुह्वामाज्यं गृह्णीयादुपभृति च चतुर्गृहीतं गृह्णीयात्प्राकृते एव काले, संमार्गवेदिस्तरणयोरन्तराले सूत्रित (का० श्रौ० ८।२।२५) त्वात्। "स वा अष्टौ कृत्वो जुह्वां गृह्णाति चतुरुपभृती" (श० ब्रा० ३।४।४।७)ति श्रुतत्वाच्च। तूष्णीमेवैतद्ग्रहणमपूर्वत्वात्। प्रधानयागार्थमिदमाज्यग्रहणं न प्रयाजार्थमतो यावदुक्तं ग्रहणमात्रमेव।

पक्षान्तरे "यथाप्रकृति वा" (का० श्रौ० ८।२।२६) प्रकृतिवदेवाज्यं गृह्णीयात् चतुर्गृहीतं जुह्वामुपभृत्यष्टगृहीतमिति। एवमेव श्रूयते—"अथो इतरथाहुश्चतुरेव कृत्वा जुह्वां गृह्णीयादष्टौ कृत्व उपभृती"(श० ब्रा० ३।४।४।७) ति। अस्मिन्नपि पक्षे ग्रहणं तूष्णीमेव सङ्ख्यामात्रस्यैव प्राकृतस्य श्रुतत्वात्।

गृह्णातीति प्रकृतिलिङ्गा "धामनामासी"(य०सं० १।३१)ति मन्त्रेण गृह्णातीति रामः।

(५) स्तीर्णाया अपि वेदेर्वाचनिकमेककृत्स्तरणम्।

(६) अनुयाजाभावात्।

आध्वर्यवपद्धतिः ।

त्यात्मालम्भः । उदकोपस्पर्शः(१) । होतृषदनकरणम् । अप्रवर्ग्ये होतरेही(२)ति । अग्नये समिध्यमानायेति प्रैषः । अवबाधने-नवमेन वज्रेणेति । प्रतिप्रणवमाधानम् । आहवनीयोपवाजनम् । स्रुवाघारमाघार्य अग्निसम्मार्गप्रैषः । अग्निसम्मार्गः । न निन्हवः । नोत्तराघारः । सम्मृष्टेऽग्नौ

हौत्रपद्धतिः ।

अथोपसदिष्टिः । (३) एहि होतरित्यामन्त्रितः—आचम्यादिप्रह्वान्त्सामिधेनी० हि ।

---

( १ ) न व्रतोपायनं निर्वर्तितत्वात् ।

( २ ) अत्र रामवाजपेयिनः—होतुरपांशुप्रयोगानां लोपः । यथा-नमः प्रवक्त्र इत्यादि हौत्रं जुषस्वमित्यन्तस्य लोपः । न हिंकारलोपः मन्त्रैकदेशत्वात् । एवं 'होतारम वृथा' इत्यस्य च न लोपः वषट्कारानुमन्त्रणस्य च न लोपः नैमित्तिकत्वादिति ।

( ३ ) अत्र ब्रह्मा तीर्थेन प्रविश्य प्रकृतिवन्मन्त्रेणोपविशेत् । यजमानस्य प्रकृतिवदुपवेशनम् । *होता एहि होतरित्यामन्त्रित आचम्यान्तरेण प्रणीतोत्करौ प्रविश्याग्नये* समिध्यमानायानुब्रूहीति प्रेषितो ब्रह्मन्त्सामिधेनीरनुवक्ष्यामि इति ब्रह्माणं पृष्ट्वा अनुब्रूहीति तेनानुज्ञातः "कं प्रपद्ये तं प्रपद्ये यत्ते प्रजापते शरणं छन्दस्तत्प्रपद्ये यावत्ते विष्णो वेद तावत्ते करिष्यामि देवेन सवित्रा प्रसूत आर्त्विज्यं करिष्यामि नमोऽग्नये उपद्रष्ट्रे नमो वायव उपश्रोत्रे नम आदित्यायानुख्यात्रे जुष्टामद्य देवेभ्यो वाचं वदिष्यामि शुश्रूषेण्यां मनुष्येभ्यः स्वधावतीं पितृभ्यः प्रतिष्ठां विश्वस्मै भूताय प्रशास्त आत्मना प्रजया पशुभिः प्रजापतिं प्रपद्येऽभयं नो अस्तु प्राजापत्यमनुवक्ष्यामि वागार्त्विज्यं करिष्यति वाचं प्रपद्ये 'भूर्भुवः स्व'रिति जपं वर्जयित्वा पठेत् ।

"उपसदि चेत्याचार्याः" ( शां० श्रौ० सू० ३।१६।२१ ) इति कल्पवचनादुपसदिष्टिष्वपि प्राप्तेः "उत्सर्गो जपाना" ( शां० श्रौ० सू० ३।१६।१९ )मिति कल्पवचनात्पित्र्यावदत्रापि "कं प्रपद्य" (शां० श्रौ० १।४।९) इत्येवमादीनां प्राकृतानां जपानामुत्सर्गसिद्धिर्भवति । *"उत्सृज्यन्ते ह निगदा" ( कौ० ब्रा० ८।८ )* इति श्रुतेश्च । "कर्माणि तूष्णीं जपमन्त्राणी"ति (शां० श्रौ०३।१६।२०) सूत्रात् कर्माणि तूष्णीं, जपमन्त्राणि तूष्णीं, भूमिसम्मर्शनासाभिमर्शनादीनि तूष्णीं भवन्ति मन्त्राणां तूत्सर्गो भवति ।

त्रिर्हिंकृत्य पौर्णमासीवदिस्यामुपसदि उपसद्यायेत्येतास्तिस्रः सामिधेनीरनवानमर्धर्चोऽनुब्रुवन्नत्रैकैकां सप्रणवां मकारान्तप्रणवावसानां त्रिर्ब्रूयाद् । एवं नव सामिधेन्यः ताः "समनूच्याः नव सम्पद्यन्त" ( कौ० ब्रा० ८।२ ) इति श्रुतेः । तत्रैकामृचं द्विर्द्विरुक्त्वा तस्यास्तृतीये वचने शुद्धप्रणवेनोत्तरामृचं सन्धाय मकारान्तप्रणवेनावस्येत् । तृतीयस्यास्तृतीये वचने तु अन्ते शुद्धप्रणवं कृत्वा तेन सन्धायाग्निमाऽवह सोममाऽवह विष्णुमाऽवहेति तिस्रो देवता व्यवस्यन्नावहेत् । श्रुतावपि "अग्निमावह सोममावह विष्णुमावहे" (कौ० ब्रा० ८।८ ) त्येतावद्देवतावाहनमुक्तम् ।

अत्र च यथापठितं नान्यदधिकं परिसङ्ख्यानात् ।

"प्रणवेन सन्धाये" ( शां० श्रौ० ९।१२।४ ) ति प्रणवेन सन्धानोपदेशादग्ने महाँ असीत्येवमादेराऽवह देवान्यजमानायेत्येवमन्तस्य चाभावः ।

आध्वर्यवपद्धतिः ।

इध्मसन्नहनान्यादायाश्राव्य, ओ३श्रा३वय । अस्तु श्रौ३षट् । (१) सीद होतरित्येव ब्रूयात् । न प्रयाजाः नाज्यभागौ । (२)स्रुचौ गृहीत्वा प्रसूतोऽतिक्रामन्नग्रयेऽनुवाचयति ।

हौत्रपद्धतिः ।

अनुब्रू३हीति तेनानुज्ञातः पं प्रपद्यादि भूर्भुवः स्वरित्यन्तं जपं वर्जयित्वा यथैवैवमिथः संश्रृण्वीरन्निति श्रुतेः (३)सर्वोपांशु ।

"हिं हिं हिं (४)उपसद्याय मीळ्हुष आस्ये जुहुता हविर्यो नो नेदिष्ठमाप्यो३म् ।

उपसद्याय मीळ्हुष आस्ये जुहुता हविर्यो नो नेदिष्ठमाप्यो३म् ।

उपसद्याय मीळ्हुष आस्ये जुहुता हविर्यो नो नेदिष्ठमाप्यो३ ।

यः पञ्च चर्षणीरभि निषसाद दमेदमे कविर्गृहपतिर्युवो३म्

यः पञ्च चर्षणीरभि निषसाद दमेदमे कविर्गृहपतिर्युवो३म्

यः पञ्च चर्षणीरभि निषसाद,दमे दमे कविर्गृहपतिर्युवो३म् ।

स नो वेदो अमात्यमग्नी रक्षतु विश्वत उतास्मान्पात्वंहसो३म् ।

स नो वेदो अमात्यमग्नी रक्षतु विश्वत उतास्मान्पात्वंहसो३म् ।

स नो वेदो अमात्यमग्नी रक्षतु विश्वत उतास्मान्पात्वंहसो३म्" ।

अग्निमा ४ वह सोममा ४ वह विष्णुमा ४ वह एतावदेवावाहनमन्यस्य निवृत्तिः ।

ततोऽध्वर्युणाऽऽश्राव्य सीद होतरित्युक्तो होता उपविशेत् ।

ततस्तूष्णीं भूमिमन्वारभ्य तूष्णीमंसाभिमर्शनं कृत्वा तूष्णीं तृणं

---

(१) "स्रुवाघारमाघार्य सम्मृष्ट आश्राव्य सीद होतरि"ति ( का०श्रौ० ८।२।१९ ) सूत्रे "तस्मादन्यतरमेवाघारमाघारयति यं स्रुवेणे" ( श० ब्रा० ३।४।४।१ ) ति श्रुतत्वात्स्रुवाघारमाघार्येत्युक्तं, एवकारेणान्यत्पर्युदस्यते । अस्य चाघारस्य प्रकृतितः प्राप्तस्य एव पुनर्वचनादेतेनैव केवलेन प्राकृताङ्गोपकारः क्रियत इतीतराण्यप्यङ्गान्यत्र निवर्तन्ते । अतो अपूर्वा उपसत् । तेन यावदुक्तमेवात्र भवति नाधिकं प्रकृतितः प्राप्तं किञ्चिदिति । "अथाश्राव्य न होतारं प्रवृणीते सीद होतरित्येवाहेति" (श० ब्रा० ३।४।४।१०) श्रुतत्वात्तथोक्तम् । अत्र न होतारमित्यनुवाद एव प्राप्त्यभावात् सीद होतरित्ययं तु विधिः । "उपविशति होते" ( श० ब्रा० ३।४।४।१० ) त्यादिनिवर्तमानप्रतिप्रसवः ।

( २ ) वाचनिकमत्र स्रुगादापनमप्रयाजार्थत्वात् ।

( ३ ) "तस्माद्ध तत्रोपांशु चरेयुर्यथैवैव मिथः संश्रृण्वीरन्" ( कौ० ब्रा० ९।१ )न्निति श्रुतेः । अन्यत्र दीक्षणीयादौ प्रधानमात्रमुपांशु, अत्र तु प्रधानमङ्गजातं सर्वमुपांशु । श्रुतौ "तस्माद्ध तत्रोपांशु चरेयुरि"ति पुनर्वचना "त्तिस्त्रोपसदः सतन्त्रा"(आश्व० श्रौ० ४।१५) इत्याश्वलायनभणितत्वाच्च ।

( ४ ) ऋ० ७।१५।१–३ ।

आध्वर्यवपद्धतिः ।

अग्नयेऽनुब्रू३हि ।

अग्निं यज । (१) पूर्वार्धे होमः । इदमग्नये न मम ।

अर्द्धं० हुत्वा सोमाय मध्ये सोमायानुब्रू३हि ।

सोमं यज । इदं सोमाय न मम ।

हौत्रपद्धतिः ।

निरस्यति । अप उपस्पृश्य तूष्णीं स्वासने उपविशेत् ।

तत एव वामाकाश(२) इति वक्तव्यम् ।

ततः स्रुगादापनमग्निर्होतेति ।

ततोऽग्नयेऽनुब्रू३हीत्युक्ते—

"अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया समिद्धः शुक्र आहु-तो३म्"(३) ॥

अग्निं यज ।

भूर्भुवर्ये ४ यजामहेऽग्निं य उग्र इव शर्यहा तिग्मशृङ्गो न वंसगः ।

अग्ने पुरो रुरोजिथा(४) ४ वौ ४ षट् । ओजः सहः सह ओजः स्वः ।

सोमायानुब्रू४हि ।

त्वं सोम क्रतुभिः सुक्रतुर्भूस्त्वं दक्षैः सुदक्षो विश्ववेदास्त्वं वृषा वृषत्वेभिर्महित्वा द्युम्नेभिर्द्युम्न्यभवो नृचक्षो३म्(५) ।

सोमं यज ।

भूर्भुवर्ये ४ यजामहे सोममषाळ्हं युत्सु पृतनासु पप्रिं स्वर्षामप्सां वृजनस्य गोपाम् । भरेषुजां सुक्षितिं सुश्रवसं जयन्तं त्वामनु मदेम सोमा(६) ४ वौ ४ षट् ।

---

(१) "प्रतीचो जुहोत्युपसत्सु च" (का० श्रौ० ३।५।१०—११) त्याम्नातत्वात् "तस्मात्त उपसद्रूपेण प्रत्यञ्चो हूयन्त" इति श्रुतेश्चैतेषां त्रयाणां प्रधानानां होमोऽग्नौ प्रत्यक्संस्थः कर्त्तव्यः । पूर्वार्द्धे अग्नेः, मध्ये सोमस्य, अपरार्द्धे विष्णोरिति । तथा च मानवे—"घृतवता अध्वर्यु" (का० हौ०प० ११४) इत्युच्यमाने स्रुचावादाय दक्षिणातिक्रम्य यथादेवतमनुवाचयत्यग्निं पूर्वार्द्धे यजति मध्ये सोममौपभृतं जुह्वां समानीय विष्णुं पश्चार्द्धे" (२।१।३४—३५) इति । सकृदतिक्रान्तेनैव त्रयोऽपि यागाः कर्तव्याः "स यत्समानत्र तिष्ठञ्जुहोति न यथेदं प्रचरन्त्सञ्चरता" (श०ब्रा०३।४।४।१४) ति श्रुतेः ।

(२) "उदक्स्पर्शवर्धादेव वामाकाश" (शां० श्रौ० १।६।१२)इत्यस्मिन् सूत्रे आहृत्य-विरिक्ते यदुतास्य वचनस्याजपत्वं सूचितं तेनास्य नोत्सर्गः ।

(३) ऋ० ६।१६।३४ ।

(४) ऋ० ६।१६।३९ । (५) ऋ० १।९१।२ ।

(६) ऋ० १।९१।२१ ।

आध्वर्यवपद्धतिः।

विष्णवे समानाय पश्चार्द्धे विष्णवेऽनुब्रूऽहि ।

विष्णुं यज । इदं विष्णवे न मम ।

उपभृत्यष्टगृहीतपक्षे सर्वमग्नये हुत्वा समानीय समानीयेतरयोः। समानयनकाले विष्णवेऽनुवाचनं समानीयेतरस्य । प्रत्याक्रम्य साद-यित्वा स्रुचौ सोमाप्यायनाद्यासुब्रह्मण्याप्रैषात् ।

आतिथ्या(१)वत्सोमाप्यायनं निह्नवश्च । ततः शेषप्रतिपत्तिः । प्रस्तरे पवित्रकरणम् । अग्निसम्मार्गप्रैषः । अग्निसम्मार्गः । व्यूहने-अग्नेः सोमस्य विष्णो इ० ( २।१५ ) । अग्निः सोमो विष्णुस्तम० ( २।१५ ) ।

औद्गात्रपद्धतिः ।

अथोपसदन्ते आतिथ्यागतवत्सोमाप्यायनं निह्नवनं सुब्रह्मण्याह्वानञ्च कार्यम् ।

हौत्रपद्धतिः ।

ओजः सहः सह ओजः स्वः ।

विष्णवेऽनुब्रूऽहि ।

यः पूर्व्याय वेधसे नवीयसे सुमज्जानये विष्णवे ददाशति । यो जातमस्य महतो महि ब्रवत्सेदु श्रवोभिर्युज्यं चिदभ्यसो३म्(२) ।

विष्णुं यज ।

भूर्भुवर्यें ४ यजामहे विष्णुं तमु स्तोतारः पूर्व्यं यथा विद ऋतस्य गर्भं जनुषा पिपर्तन । आस्य जानन्तो नाम चिद्विवक्तन महस्ते विष्णो सुमतिं भजामहा(३) ४ इयौ ४ षट् । ओजः सहः सह ओजः स्वः ।

मदन्तीरुपस्पृश्य यावदादिष्टं (४)कुर्यात् ।

तत आप्यायनम् ।

---

( १ ) पूर्वं ( ८३-८४ ) पत्रे द्रष्टव्यः ।

( २ ) ऋ० १।१५६।२ । ( ३ ) ऋ० १।१५६।३ ।

( ४ ) "यावदादिष्टं कुर्यात्" ( शां श्रौ० ५।१२।१० ) इत्युक्तत्वात् "देवता उपसत्सु प्रतियजती" ति श्रुतेश्च प्रयाजाज्यभागस्विष्टकृदनुयाज-सूक्तवाक-पत्नीसंयाजादीनां चोत्सर्गः सिद्धो भवति ।

"अत्र यावदादिष्टं कुर्या"(शां० श्रौ० ५।१२।१० )दित्युक्तेऽप्यध्वर्युवशात्प्रतिपत्तिकर्म-त्वेन सूक्तवाको भवत्येव, स चेत्थम्—

सूक्ताम्रू३होस्युक्तं 'इदं द्यावापृथिवी० सयोराविदि । अग्निरिदं० हविः सोम इदं० हविः विष्णुरिदं० हविः ( देवा आज्यापा अग्निर्होत्रेणेति च न भवति प्रयाजस्विष्टकृतोरभावात् ) अस्यामृधद्धोत्रायामित्यादि नमो देवेभ्य' ( शां० श्रौ० १।१४।१-२१ ) ( का० हौ० प०१।८ ) इत्यन्तं भवत्येव । न शंयोर्वाकः । वेदविमोकः । आवेदेस्तरण"मिति याजुषहौत्रप्रयोगे विशेषः ।

आध्वर्यवपद्धतिः।

अभ्युदय जुह्वा परिव्ययनम् । परिधि गृहीत्वाऽऽश्राव्य(१) सूक्तवाकप्रैषः । प्रस्तरादानं न विधृत्योः स्थाने करणम् । अञ्जने—आज्यस्थाल्यां मूलम् । अक्त्वा प्रस्तरमुपसदं (२)जुहोति स्रुवेण या त इ(३)ष्ययःश यामन्वारब्धे (४)यजमानेन द्विरेकया चरति (५)सुसायर्ड० सुपूर्वाह्णे च । प्रतिप्रस्थातोपकल्पितमाज्यर्ड:० संस्कृत्याध्वर्यवे प्रयच्छति ।

"ॐ या ते अग्नेऽयःशया तनूर्वर्षिष्ठा गह्वरेष्ठा ।

उग्रं,वचो अपावधीत्त्वेषं वचो अपावधीत्स्वाहा" (५।८) ।

इदमग्नयेऽयःशयायै तन्वै । परिधिविधृत्योरासादनाद्यग्नोधे समर्पणान्तमानिष्ट्या(६)वत् । "चक्षुष्पा" (२।१६) इत्यात्मालम्भः । उदकोपस्पर्शः । संस्रवाहुतिः । देशे निधानम् । न वेद्यालम्भः । तूष्णीं वेदविमोकः । [पत्ने योक्त्रस्य] । पत्नीवृद्धिर्हिर्होमः । प्रणीताविमोकः । पूर्ववत्

हौत्रपद्धतिः ।

"अंशुरंशुष्टे देव सोमा प्यायतामिन्द्रायैकधनविदे ।

आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्व ।

आ प्याययास्मान्त्सखीन् सन्या मेधया स्वस्ति ते ।

देव सोम सुत्यामुदृचमशीयेति" ।

तत उरोभिमर्शनम् ।

"यमादित्या अंशुमा प्याययन्ति यमक्षितिमक्षितयः पिबन्ति ।

तेन नो राजा वरुणो बृहस्पतिरा प्याययन्तु भुवनस्य गोपाः" ।

इति पुनर्मदन्ती० ।

---

(१) दैवयाज्ञिकमते न सूक्तवाकप्रैषः ।

(२) उपसदिति सामान्यसंज्ञा । (३) अय इत्येति मन्त्रलिङ्गाद्विशेषसंज्ञा ।

(४) अनेकयजमानके एकस्यैवान्वारम्भः । पूर्णाहुतिप्रकृतित्वेनान्वारम्भः प्राप्त एव परिसङ्ख्यार्थं पुनरुक्तः । उपसत्स्वेवान्वारम्भो नान्येषु होमेष्विति ।

(५) सायं शब्देनात्रापराह्णो लक्ष्यते "स यत्सायंप्रातः प्रचरति तथा होव सम्पत्स्यध्वे स यत्पूर्वाह्णे प्रचरति तदयत्यथ यदपराह्णे प्रचरती" (श० ब्रा० ३।४।४।२१) ति श्रुतत्वात् "याः पूर्वाह्णे पुरोऽनुवाक्यास्ता अपराह्णे याज्याः करोति" (कौ० ब्रा० ८।१) "तदाः पूर्वाह्णेऽनुवाक्या भवन्ति ता अपराह्णे याज्या" (श० ब्रा० ३।४।४।२) "सुपूर्वाह्ण एव पूर्वयोपसदा प्रचरितव्य स्वपराह्णे परया" (ऐ० ब्रा० १।४।२३) इत्यादि श्रुतेश्च, सूत्रकारप्रत्याख्यानाच्च "उपसत्सु पौर्वाह्णिक्यापराह्णिक्यन्तरे चयनपुरोपनिवपने" (का० श्रौ० १८।७।३) इति । सु० पूजायाम् । प्रशस्तः पूर्वाह्णः सुपूर्वाह्णः । तस्य च प्रशस्तत्वं प्रथमावयवः = उदयानन्तरमेवेत्यर्थः ।

(६) पूर्वं (८६) पत्रे ।

शाध्वर्यवपद्धतिः ।

(१)उपसत्त्वयाभ्रेवगाने । इत्युपसदिष्टिः(२) सतन्त्रोपांशु ।

( अथ द्वितीयदिनस्यापराह्णिकः प्रवर्ग्यः । )

अपराह्णे द्वारापिधानम् । तानूनप्त्रमिश्रव्रतप्रदानमुभाभ्याम् । तत्र होत्रपद्धतिः ।

ततः प्रस्तरे निन्हुवते दक्षिणोत्तानान्पाणीन्कृत्वा(३) । यजुः—

ॐ पराय: प्रेदे भगाय ऋतमृतवादिभ्यो नमो द्यावापृथिवीभ्यामिति ।

इत्युपसदिष्टिः ।

( आरम्भाद्द्वितीयदिनस्यापराह्णिकः प्रवर्ग्यप्रचारः । )

अथापराह्णिके प्रचरणे विशेष उच्यते । "ऋचं वाचमि"त्यादि शान्ति-

---

( १ ) पूर्वे ( ८७-८८ ) पत्रे ।

( २ ) एकाहस्त्र्युपसत्कः (का० श्रौ० ८।२।३७)। एकाहः—एकसुत्यः क्रतुस्त्र्युपसत्को भवति । तिस्र उपसदो यस्यासौ त्र्युपसत्कः एकसुत्ये यज्ञे तिस्र उपसदो भवन्तीत्यर्थः । "स वै तिस्र उपसद उपेया"दिति ( श० ब्रा० ३।४।४।१७ ) श्रुतेः

"द्वादश वा" ( का० श्रौ० ८।२।३८ ) । अथवा द्वादशोपसदो भवन्ति "यद्य द्वादशोपसद उपेयादिति" (श० ब्रा० ३।४।४।१९ ) श्रुतेः ।

अपरे त्वन्यथा व्याचक्षते—एकाहस्त्र्युपसत्क इत्यत्र प्रक्रान्ते पूर्वैकाहे पुनरेकाहग्रहणं द्वादशोपसत्कस्यानेकाहविषयत्वज्ञापनार्थं तेनैकाहस्त्र्युपसत्क एव । द्वादशत्वं त्विह पठितमपि शाखान्तरीयवाक्यवशादुक्तम्याहीनविषयं व्याख्यायते । तथा च वाक्यम् । "तिस्र एव साह्नस्योपसदो द्वादशाहीनस्ये" (आप० श्रौ० ११।४।७ ) ति । अह्ना सह समाप्तिं प्राप्नोतीति साह्न एकाह इत्यर्थः ।

केचित्त्वेवं व्याचक्षते—एकाहस्त्र्युपसत्को ज्योतिष्टोमव्यतिरिक्तः तद्विकार एकाहस्त्र्युपसत्क एव भवति एकाहपठितः । "तिस्रः साह्नस्ये"ति वाक्यात् "द्वादश वा" वैकृते एकाहे तिस्रः स्थिता एव ज्योतिष्टोमे विकल्पो द्वादश वा तिस्रो वेति तत्प्रकरणे उभयस्य विकल्पेन श्रुतत्वात् "स वै तिस्र" ( श० ब्रा० ३।४।४।१७ ) इति "यद्य द्वादशे" ( श० ब्रा० ३।४।४।१९ ) ति च ।

( ३ ) एवमापराह्णिके प्रचारे सव्यानुत्तानान्दक्षिणाप्राचः कृत्वा निन्हुवीरन् । निन्हुवनं नाम द्यावापृथिव्योर्नमस्कारः । तथा च ब्राह्मणम्—"प्रस्तरे निन्हुवते द्यावापृथिव्यामेव तं नमस्कुर्वन्ती"ति । आप्यायनमुरोऽभिमर्शनं प्रस्तरे निन्हुवनमित्यादिपदार्थजातं पूर्ववद्वक्ष्यमाणलक्षणायामुपसद्युपसदि समाप्तायां कर्तव्यम् । तत्र पूर्वाह्णिक्यामुपसदि दक्षिणोत्तानधर्मः, आपराह्णिक्यामुपसदि सव्योत्तानधर्मः । अत्राप्यायने "यजमानषष्ठा सोममाप्याययन्ती" ( का० श्रौ० ८।२।६ ) ति शतपथश्रुते (३।४।३।१७) ब्रह्मोद्गातृहोत्रध्वर्य्वग्नीध्रयजमानानां षण्णामेवाधिकारः, तदङ्गत्वान्निन्हुवेऽपि । शाङ्खायनकल्पभाष्ये ( २३२ पत्रे ) ऽयमेव पक्षोऽभिहितः । तैत्तिरीयाणां सर्वेषामाप्यायनमभिहितं (आप०श्रौ० ११।१।११) तथैव शाङ्खायनानामपि सर्वेषामाप्यायनं पद्धतावभिहितमतश्चेच्छयानुष्ठानं विधेयम् ।

आध्वर्यवपद्धति ।

वर्ग्य पुन पूर्वाह्णप्रवर्ग्यवदपराह्णप्रवर्ग्यप्रचार शान्त्यादिशान्त्यन्त ।

तत्र विशव । रौहिणहामे—

'ॐ रात्रि कतुना जुषता ऽसुज्योतिर्ज्योतिषा स्वाहा' ( ३५।२१ )

इद घर्माय ।

अग्निहोत्रावृता होमे ( समिद्धामे ) 'अग्निर्ज्योतिष त्वा वायुमती प्राणवतीऽस्वर्ग्याऽस्वर्गायोपदधामि भास्वतीम्" ( कपवस० ३।२।१ का० श्रौ० ४।१४।१३ ) इति । प्रधानहोमे—

हौत्रपद्धति ।

पाठ पूर्ववत् (पत्रे ६१) कृत्वा ततो 'ब्रह्म यज्ञानमि"(१)त्यादि "कण्वा ना सवने सुतो३मि"त्यन्त पूर्ववदभिष्टुत्य 'प्रातर्यावाणे"(२)ति सूक्त स्य स्थाने "आ भात्यग्निरि"(३)ति सूक्तमभिष्टुयात् ।

( "आ भात्यग्निरुषसामनीकमुद्विप्राणा देवया वाचो अस्थुरर्वाञ्चा नूनं रथ्येह यात पीपिवासमश्विना घर्ममच्छो३म् ।

न संस्कृत प्रमिमीतो गमिष्ठान्ति नूनमश्विनोपस्तुतेह दिवाभिपि त्वेऽवसागमिष्ठा प्रत्यवर्तिं दाशुषे शंभविष्ठो३म् ।

उता यातं सङ्गवे प्रातरह्नो मध्यन्दिन उदिता सूर्यस्य दिवा नक्तमव- सा शन्तमेन नेदानीं पीतिरश्विना ततानो३म् ।

इदं हि वा प्रदिवि स्थानमोक इमे गृहा अश्विनेद दुरोणमा नो दिवो बृहत पर्वतादुभ्यो यातमिषमूर्जं वहन्तो३म् ।

समश्विनोरवसा नूतनेन मयोभुवा सुप्रणीती गमेमा नो रयिं वहत मोत,वीराना विश्वान्यमृता सौभगानो३म्" । )

तत "ईळे(४) द्यावापृथिवी"त्यादि "यमस्य योनौ शकुनस्भुरण्यो३मि" त्यन्त पूर्ववदभिष्टुत्याध्वर्युणा घर्मस्ययजे त्युक्त "अस्य पिवत" "यदु स्त्रियास्त्वाहुत"मित्यते द्वे अनवानं पठित्वा (द्वितीयस्या अन्ते वषट् कुर्या- त्यैवानुवषट् कुर्याच्च । भूभुर्व४ यजामहे ऽस्य पिवतमश्विना युव मदस्य चारुणो मध्वो रातस्य धिष्ण्या(५) यदुस्त्रियास्वाहुत घृत पयोऽय सु नामश्विना भाग आ गत माध्वी धर्तारा विदथस्य सत्पती तप्त घर्मं पिवतं रोचने दिवा (६) ४ वौ४षट् । ओज सह सह ओज स्व ।

( १ ) शा० श्रौ० ६।२।१। पूर्वे ९५-१०६ पत्रेषु ।
( २ ) ऋ० ६।७७।१-५ ( ३ ) ऋ० ५।७६।१-५ ।
( ४ ) ऋ० १।११२।१ । पृ० १०६-११९ पत्रेषु ।
( ५ ) ऋ० ८।६।१४ ।
( ६ ) शां० श्रौ० ६।१०।२१ ।

आध्वर्यवपद्धतिः।

"ॐ सजूर्देवेन सवित्रा सजू रात्र्येन्द्रवत्या। जुषाणो अग्निर्वेतु स्वाहा" (३।१०)

इदमग्नये न मम। इतरत्सर्वं पूर्ववत्। इत्यपराह्णप्रवर्ग्यः।

( आरम्भाद्द्वितीयदिनस्यापराह्णिक्युपसत् )

ततः पुनः पूर्ववत्सायमुपसत् ( पत्र १२७-१३६ )। न तत्र विशेषः।

हौत्रपद्धतिः।

भूर्भुवः घर्मस्याग्ने वीहौ ४ वौ४षट्। ओजः सहः सह ओजः स्वः।)

ततः "स्वाहाकृत" इत्यादि ( प० १२१-१२७ ) शान्तिपाठान्तः पूर्ववत्प्रवर्ग्य इति।

( आरम्भाद्द्वितीयदिनस्यापराह्णिक्युपसत्। )

तत उपसत्। आचम्यादि ब्रह्मन् सामि०।

हिं हिं हिं "(१)इमां मे अग्ने समिधमिमामुपसदं वनेरिमा उ पु श्रुधी गिरो३म्।

इमां मे अग्ने समिधमिमामुपसदं वनेरिमा उ पु श्रुधी गिरो३म्।
इमां मे अग्ने समिधमिमामुपसदं वनेरिमा उ पु श्रुधी गिरो ३-
मया ते अग्ने विधेमोर्जो नपादश्वमिष्ट एना सूक्तेन सुजातो३म्।
अया ते अग्ने विधेमोर्जो नपादश्वमिष्ट एना सूक्तेन सुजातो३म्।
अया ते अग्ने विधेमोर्जो नपादश्वमिष्ट एना सूक्तेन सुजातो३-
न्तं त्वा गीर्भिर्गिर्वणसं द्रविणस्युं द्रविणोदः सपर्येम सपर्येवो३म्।
तं त्वा गीर्भिर्गिर्वणसं द्रविणस्युं द्रविणोदः सपर्येम सपर्येवो३म्।
तं त्वा गीर्भिर्गिर्वणसं द्रविणस्युं द्रविणोदः सपर्येम सपर्येवो३"
मग्निमा४ वह सोममा४ वह विष्णुमा४वह।

ततो होता उपवेशनादि स्रुगासादनान्तं पूर्ववत् ( कुर्यात् )।

ततो याज्यापुरोनुवाक्ययोर्विपर्यासं कृत्वा पठेत्।

अग्नयेऽनुब्रूहीत्युक्ते—

"य उग्र इव शर्यहा तिग्मशृङ्गो न वंसगः। अग्ने पुरो रुरोजि-थो३म्"(२)।

अग्निं यजेत्युक्ते—

भूर्भुवर्ये३ यजामहेऽग्निं 'मग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया। समिद्धः शुक्र आहुता"श्वौ४ षट्"(३)। ओजः सहः सह ओजः स्वः।

---

(१) ऋ० ३।६।१-३ (२) ऋ० ६।१६।३९। (३) ऋ० ६।१६।३४।

आध्वर्यवपद्धतिः ।

अनस्तमिते याजमान्यप्रैषादि । त्रिस्तनमेकस्तनं वा(१) गोदोहनप्रैषो मेहनादिपूर्ववत् । अपरराते व्रतप्रदानं पूर्ववत् ।

इति द्वितीयाहः ।

औद्गात्रपद्धतिः ।

मध्यापराह्णे घर्मोपसदन्ते सोमाप्यायनं निह्नवनं सुब्रह्मण्याह्वानं च कार्यम् ।

हौत्रपद्धतिः ।

सोमायानुब्रूहि—

"अषाळ्हं युत्सु पृतनासु पप्रिं स्वर्षामप्सां वृजनस्य गोपाम् । भरेषुजां सुक्षितिं सुश्रवसं जयन्तं त्वामनु मदेम सोमो३म्"(२) ।

सोमं यज—

भूर्भुवर्ये४ यजामहे "त्वं सोम क्रतुभिः सुक्रतुर्भूस्त्वं दक्षैः सुदक्षो विश्ववेदाः । त्वं वृषा वृषत्वेभिर्महित्वा द्युम्नेभिर्द्युम्न्यभवो नृचक्षा"(३) वौ४ षट् । ओजः सहः सह ओजः स्वः ।

विष्णवेऽनुब्रूहि—

"तमु स्तोतारः पूर्व्यं यथा विद ऋतस्य गर्भं जनुषा पिपर्तन । आस्य जानन्तो नाम चिद्विवक्तन महस्ते विष्णो सुमतिं भजामहो३म्"(४) ।

विष्णुं यज—

भूर्भुवर्ये४ यजामहे विष्णुं "यः पूर्व्याय वेधसे नवीयसे सुमज्जानये विष्णवे ददाशति । यो जातमस्य महतो महि ब्रवत्सेदु श्रवोभिर्युज्यं चिदभ्यसा"(५)वौ४षट् । ओजः सहः सह ओजः स्वः ।

यावदादिष्टं कुर्यात् ।

ततो मदन्तीरुपस्पृश्य पूर्ववदाप्यायनोरोऽभिमर्शनानि च कृत्वा स-

---

(१) "त्रिस्तनं प्रथमायां दोहयति" (का० श्रौ०।८।३।१) प्रथमायामुपसदि त्रिस्तनं व्रतं दोहयेत् । उपपत्त्यन्तेन विशेषवचनाद्द्वाशासु न नियमः । "एकापचयेनोत्तरयोः" (का० श्रौ० ८।३।२) । उत्तरयोर्द्वयोरुपसदोरेकापचयेनैकैकस्तनापगमेन व्रतं दोहयति । द्वितीयायां द्विस्तनं तृतीयायामेकस्तनमिति भावः । अग्निचयनरहिते क्रतौ विपर्ययस्य वा प्रथमायां त्रिस्तनं द्वितीयायां द्विस्तनं तृतीयायामेकस्तनमित्येवं भवति । एवमपि हि श्रुतं "स यासामेकं प्रथमाहं दोग्ध्यथ द्वावथ त्रीनि" (श०ब्रा०३।४।४।२६) त्यादि । अनग्निचित्ये उभयथा श्रवणात् साग्निचित्ये तु नियमेन त्रिस्तनादेव व्रतं भवति । अत्र हि "अथातः पयो व्रतायाः" इति प्रकृत्य "त्रींस्तनानुपैति स द्वौ स्तना उपैति स एकस्तनमुपैतीति" पुनः श्रवणात् ।

(२) ऋ० १।९१।२१ । (३) ऋ० १।९१।२२ ।

(४) ऋ० १।१५६।३ । (५) ऋ० १।१५६।२ ।

आध्वर्यवपद्धतिः ।

## ( अथ तृतीयदिनकृत्यम् )

### ( तृतीयदिनस्य पौर्वाह्णिकः प्रवर्ग्योपसत्प्रचारः )

अथ तृतीयमहः । प्रातर्विबुद्धयाचनादि वाग्विसर्गान्तं पूर्ववत् ।
व्रतप्रैषे—त्रिस्तनं गावो धुक्ष्वेति । व्रतकरणम् ।
ततः पूर्ववत्प्रवर्ग्योपसदौ । पक्षे उपसदेव वा । तत्रोपसद्धोमे विशेषः
"ॐ या ते अग्ने रजःशया तनूर्वर्षिष्ठा गह्वरेष्ठा ।
उग्रं वचो अपावधीत्त्वेषं वचो अपावधीत्स्वाहा" (५।८) ।
इदमग्नये रजःशयायै तन्वै ।

औद्गात्रपद्धतिः ।

निह्नवने सव्यान् पाणीनुत्तानान् कृत्वा दक्षिणान्नीचैः कृत्वेति विशेषः ।
अथ तृतीयदिवसे घर्मोपसदन्ते आतिथ्यान्तवत्सोमाप्यायनं निह्नवनं सुब्रह्मण्याह्वानं च कार्यम् । सुब्रह्मण्याह्वाने द्व्यहे सुत्यामिति विशेषः ।

हौत्रपद्धतिः ।

सव्यान्पाणीनुत्तानान् कृत्वा प्रस्तरे निह्नुवीरन् । त्र्येकमुपसदहः ।

इति द्वितीयमहः ।

## ( अथ तृतीयमहः । )

### ( आरम्भात्तृतीयदिनस्य पौर्वाह्णिकः प्रवर्ग्योपसत्प्रचारः )

तत आरम्भात्तृतीयेऽहि द्वितीये चोपसदहि पूर्वाह्णे प्रवर्ग्योपसद्भ्यां चरन्ति ।
तत्र शान्त्यादिशान्त्यन्तः पौर्वाह्णिकः पूर्ववत् (पत्र९१-१२७) प्रवर्ग्यः। उपसदि विशेष उच्यते । ब्रह्मन् सामिधेनी० । त्रिर्हिङ्कृत्य ।
(१)इमां मे अग्ने समिधमिमामुपसदं वनेरिमा उ षु श्रुधी गिरो३म् ।
इमां मे अग्ने समिधमिमामुपसदं वनेरिमा उ षु श्रुधी गिरो३म् ।
इमां मे अग्ने समिधमिमामुपसदं वनेरिमा उ षु श्रुधी गिरो३
अया ते अग्ने विधेमोर्जो नपादश्वमिष्टे एना सूक्तेन सुजाता३म् ।
अया ते अग्ने विधेमोर्जो नपादश्वमिष्टे एना सूक्तेन सुजाता३
अया ते अग्ने विधेमोर्जो नपादश्वमिष्टे एना सूक्तेन सुजाता३
तन्त्वा गीर्भिर्गिर्वणसं द्रविणस्युं द्रविणोदः सपर्येम सपर्यवो३म् ।
तन्त्वा गीर्भिर्गिर्वणसं द्रविणस्युं द्रविणोदः सपर्येम सपर्यवो३म् ।
तन्त्वा गीर्भिर्गिर्वणसं द्रविणस्युं द्रविणोदः सपर्येम सपर्यवो३"
मग्निमावहेत्यादि सर्वं पूर्वदिनीयपौर्वाह्णिकयुपसद्वन्निह्नु(ह्न)वान्तम् ।

---

(१) ऋ० २।६।१—३

आध्वर्यवपद्धतिः।

## ( वेदिमानम् )

ततो वेदिमानम्। औपवसथ्यात्पूर्वेऽहनि पौर्वाह्णिक्या प्रचर्य वेदिं मिमीते।

आहवनीयस्य दक्षिणतो महावेदेश्च दक्षिणतो द्विर्द्विर्गार्हपत्याहवनीययोरुत्तरत एकैकमिति षडासनम्।

ब्रह्मा स्तम्बयजुर्हरिष्यत्याहवनीयदेशं दक्षिणेनास्ते वेदिसहित एवर्ष्ठ० सर्वत्र प्रागग्नीषोम(मीय)प्रणयनात्कर्मणः कर्मणो वा सहितस्तत्तद्देवान्वेति।

अत्र समन्वकमासनमिति देवः।

ततः प्रणीताप्रणयनं ( मदन्तीभ्यः ) कर्कमते।

याज्ञिकास्तु न प्रणयन्ति, यतस्तत्पक्षे ताभ्य एव प्रोक्षणीसत्त्वे अग्नीषोमीये प्रणीतानिषेधात्सप्राणीताप्राणीतप्रोक्षणीभेदेन प्रयोगकाठिन्यम्।

आहवनीयस्योत्तरतस्तासां निधानं कर्कमते प्रणयनपक्षे।

आहवनीयस्य पश्चादुत्तरतो वा पञ्चकासादनम्—अग्निहोत्रहवणी वज्रः पवित्रच्छेदनानि पवित्रे अन्तर्धानतृणञ्च।

उपकल्पनीयानि—रज्जुः शङ्कुः, शम्या, अग्निः, पुरीषाहरणम्, प्रोक्षणीः, सिकताः, आच्छादनबर्हिः।

पवित्रकरणम्। यथायथं प्रणीताभ्यो मदन्तीभ्यो वा प्रोक्षण्यः। यज्ञं प्रोक्ष्य तदुपग्रहे(णेन)णोत्तरप्रोक्षणम्। असञ्चरे प्रोक्षणीनिधानमग्नीषोमीयार्थं पवित्रयोश्च।

ततः पूर्वार्द्ध्यात्स्तम्भात्पुरस्तात् त्रिषु (१)प्रक्रमेषु शङ्कुं(२)निहन्ति

हौत्रपद्धतिः।

## ( वेदिमानम् )

ततोऽध्वर्यूणां महावेदिमानम्।

---

( १ ) प्रक्रमश्चात्र द्विपदः सोमत्वात्। तथा चोक्तं शुल्बकृता—

आधाने पदिकं कुर्यात् द्विपदः सौमिकी भवेत्।
अग्नौ च त्रिपदं कुर्यात् प्रक्रमं याज्ञिको बुधः॥(श्लो० शु०१।३४) इति।

अत्र परिमाणं प्रधानयोगादध्वर्योरेव न यजमानस्य, शुल्बसूत्रत्वादस्य इति कर्कमतम्। अन्ये तु "दान-वाचना-न्वारम्भण—वर-वरण-व्रत-प्रमाणेषु यजमानं प्रतीयादि" ( का० श्रौ०१।१०।१२ ) ति परिमापणाद्यजमानस्यैव प्रक्रमणमाहुः।

कात्यायनस्मृतावप्येवमेव—

मानक्रियायामुक्तायामनुक्ते मानकर्तरि।
मानकृद्यजमानः स्याद्विदुषामेष निश्चयः ( ६।११ )। इति।

( २ ) शुल्बसूत्रे शङ्कुपरिमाणमुक्तम्।

आध्वर्यवपद्धतिः।

सोऽन्तःपात्यः । तस्मात्पुरस्तात्षट्त्रिंश०शति शङ्कुः पूर्वार्धर्यसंज्ञः ।

---

षडङ्गुलपरीणाहं द्वादशाङ्गुलमुच्छ्रितम् ।
जरठं चाव्रणं चैव शङ्कुं कुर्याद्विचक्षणः ॥
द्विवितस्तिप्रमाणस्तु खादिरो मुद्गरस्तथा ।
शङ्कुस्तेन निखातव्यस्तस्मात्तस्य परिग्रहः ॥
एकतश्च ऋजुस्त्वोक्ष्णः खादिरः सम आयतः ।
शङ्कुः कार्यस्तु शुल्बज्ञैस्तस्याग्रं गमयेन्महीम् ॥
( शु०प०७।७-९ )

कात्यायनस्मृतावपि—

शङ्कुश्च खादिरः कार्यो रजतेन विभूषितः ।
शङ्कुश्चैवोपवेषश्च द्वादशाङ्गुल इष्यते ( १७।३ )। इति ।

हविर्यज्ञे तु—

प्रादेशमात्रो हविर्यज्ञे पूर्वलक्षणलक्षितः ।
शङ्कुरामशिराः कार्यस्तस्याप्यर्धं निखापयेत् ॥
चतुरश्रं मुद्गरं तत् षोडशाङ्गुलमायतम् ।
अविद्धं कमनीयं च दारमय्याच्च निर्मितम् ॥
(श्लो०शु०७।१०-११) इति )।

सर्वत्र मानादिसाधनोपयोगिनी रज्जुः कात्यायनोक्ता ग्राह्या । सेदृशी—

अजीर्णा ग्रथिनो सूक्ष्मा समा श्लक्ष्णा त्वरोमशा ।
रज्जुर्मानाधिका कार्या अध्वरे योगमिच्छता ॥
शाणी वा बाल्वजो चैव वैणवी वा विधीयते ।
रज्जुस्तूभयतपाशा त्रिवृत्ता यज्ञकर्मणि ।
रज्जुर्मुञ्जमयी कार्या शणैस्तु परिमिश्रिता ।
कात्यायनो वदत्येवमपोढा कुशवल्वजैः ।
(शु० प० ७।१२-१४ ) इति ।

अपोढा – अखण्डा ।

अत्रार्थे साधनोपायः । काठके-सौमिकीं वेदिं विधित्सन् पञ्चदशसु प्रक्रमेषु लक्षणं कुरुते त्रिपदः प्रक्रमोऽर्धंचतुर्थपदो वा पदं पञ्चदशाङ्गुलं द्वादशाङ्गुलं वा तत एकविंशतौ तत्त्रिषु ततो द्वादशसु पाशः पूर्वेण प्राग्वंशं त्रिषु प्रक्रमेषु शङ्कुं निहन्ति तस्मिन्पाशं प्रतिमुच्य प्राचीमायम्य यदेकविंशतौ तत्र शङ्कुं निहन्ति तस्मिन्पाशं प्रतिमुच्य पञ्चदशसु गृहीत्वा दक्षिणायम्य शङ्कुं निहन्त्येतेनोत्तरोऽन्तो व्याख्यातः। एवं पूर्वार्धं विदधाति त्रिषु गृहीत्वा द्वादशसु तत्र शङ्कुं निहन्तीति । परिशिष्टे च—

पञ्चदश(मथै)मेकविंशं त्रिकमपरं च परतस्त्रिकं चापि ।
द्वादशसु पाश उत्तमः सोमे रज्जुप्रमाणमेतत् ॥
( श्लो० शु० ७।१६ )।

रज्वां पञ्चदशसु प्रक्रमेष्वेकं लक्षणं श्रोण्यङ्कनार्थमाकर्षणार्थं च सदैव, ततः पञ्चदशसु कृताल्लक्षणात् परं एकविंशे प्रक्रमे द्वितीयं लक्षणं प्राच्यन्ताङ्कनार्थं, ततः परं त्रिषु प्रक्रमेषु तृतीयमाकर्षणार्थं ततोऽपि परं त्रिषु चतुर्थमंसोऽङ्कनार्थं ततः परं द्वादशसु प्रक्रमेष्वन्तिमः पाश इति । एवं चतुःपञ्चाशत्प्रक्रमा रज्जुर्भवतीति । तथा चोक्तं शुल्बकृता ।

आध्वर्यवपद्धतिः ।

अन्तःपात्याद्दक्षिणोत्तरौ च पञ्चदशसु पञ्चदशसु श्रोण्योः शङ्कू । अर्द्धसप्तदशेषु वा । पूर्वाध्याच्च द्वादशसु द्वादशसु अंसयोः ।

वेदिं परिसमूह्य वितृतीयेऽग्नीदुत्तरत उत्करं करोति । चतुरङ्गुलोच्चां वेदेर्मध्ये प्राक् संस्थां (१)पृष्ठ्यामायम्य अन्तःपात्यदेशे –

---

'प्रमाणार्द्धं वाऽन्यस्याम्यासचतुर्थे (षष्ठे) लक्षण करोति तन्निरुञ्छनमि" (शुल्व० १।१४) ति । तथा—"शाखवद्धे दीर्घचतुरस्रस्ये" (१।१०) त्युक्त्वा "एतेन प्राग्वर्द्धश्च—वेदिमानानि व्याख्यातानी०" (शु० प० १।१९) ति चोक्तम् ।

अत्र रज्जोः प्रथमं पाशमन्तःपाते प्रमुच्य प्राचीं निरायम्य "पञ्चदशमथैकविंश" मित्येकविंशे शङ्कुं निहत्य तस्मिन्नन्तिमं पाशं प्रतिमुच्य पञ्चदशे कृतेन लक्षणेन रज्जुं दक्षिणत आकृष्य पञ्चदशे एव शङ्कुं निखनेत् सा दक्षिणश्रोणिः । तेनैव गृहीत्वोत्तरत आकृष्य तत्रैव शङ्कुः सा उत्तरश्रोणिः ।' तत 'स्त्रिकमप' मित्यनेन गृहीत्वा दक्षिणतो रज्जुमाकृष्य 'परतस्त्रिकमि'त्यस्मिन् शङ्कुः स दक्षिणोंऽसः । ततस्तेनैव गृहीत्वोत्तरत आकृष्य तत्रैव शङ्कुः स उत्तरोंसः इति । अत्र यूपावटाच्छङ्कोः पश्चात्पदमात्रं पश्चादन्तराले मुक्त्वा युगमात्री यजमानदशपदप्रमाणा वोत्तरवेदिः साधनीया । प्रक्रमस्थानग्निके सोमे द्विपद इति पूर्वमुक्तम् । अयं च त्रिंशत्प्रक्रमा पश्चादिति पक्षे साधनोपायः ।

षट्त्रिंशत्पक्षे तु–षट्त्रिंशत्प्रक्रमां रज्जुं द्विगुणां द्वासप्ततिप्रक्रमां कृत्वा तस्यां सार्धषोडशे प्रक्रमे श्रोण्यङ्कनार्थं लक्षणं कृत्वा सप्तविंशतितमे निरुञ्छनं श्रोणिसाधने रज्ज्वाकर्षणार्थं षट्त्रिंशत्तमे च यूपावटशङ्क्वर्थं ततः परं नवसु प्रक्रमेषु अंससाधनकाले रज्ज्वाकर्षणार्थं ततोऽन्तिमात्पाशाद्द्वादशे प्रक्रमेंऽसाङ्कनार्थमित्येवं विधया रज्ज्वा साधनम् ।

अत्राहापस्तम्बः—"प्राग्वंशस्य मध्यमाल्ललाटिकात् त्रीन् प्राचः प्रक्रमान् प्रक्रम्य शङ्कुं निहन्ति । तस्मात्पञ्चदशसु दक्षिणतः । एवमुत्तरतस्ते श्रोणी । प्रथमनिहिताच्छङ्कोः षट्त्रिंशति पुरस्तात्तस्माद्द्वादशसु दक्षिणत एवमुत्तरतस्तावंसौ । विमिमेत्वा परस्वतीं देवानां धेनुं सुदुघामनपस्फुरन्तीम् । इन्द्रः सोमं पिबतु क्षेमो अस्तु नः । इति विमानः । सर्वतः स्पन्द्यया पर्यातनोति । मध्ये पृष्ठ्यामि"ति ( आप० श्रौ० ११।४।१२—१६)। संग्रमनं च मध्ये सङ्गृहीतत्वम् । तथा चोक्तं दर्शपूर्णमासयोः—"मध्ये संह्वारिता ( श० ब्रा० १।२।३।१६ ) "मध्येसन्नततरा भवती"ति अतो महावेद्यां संग्रहाभावः ।

( १ ) पृष्ठे भवा पृष्ठ्या वेदिलेखामायतां कृत्वेति पितृभूतिः । वरण्डकमिति कर्कः । पृष्ठ्येति संज्ञाकरणं संव्यवहारार्थं "मनुपृष्ठ्यो बर्हिस्तृणाती" (का०श्रौ०१।७।६) त्यादौ ॥

अत्रायं दैवोक्तः क्रमः—पूर्वं शालामध्यादिषु प्रक्रमेषु शङ्कुनिखननम् । ततो द्विरासनम् । प्रथमः समन्वकमुत्तरवेदिरेव दक्षिणतो बर्हिर्वेधुपवेशनं वेदिपृष्ठस्य यजमानस्य च । यजमान वाचं यच्छेति प्रैषः, ततोऽग्निहोत्रहवण्यादीनां वेदिमानोपयोगिनां पात्राणामासादनं शालाद्वार्यस्य पश्चादुत्तरतो वा, ततो वाग्यमः । पवित्रच्छेदनादि तेषां प्रोक्षणं प्रोक्षणीनां पवित्रयोश्च यत्नेन रक्षणं, ततो वेदिमानं परिसमूहनं, उत्करकरणं, पृष्ठ्याकरणं, ततः स्फ्यादानादि ।

आध्वर्यवपद्धतिः।

स्फ्यादि करोति (१)खादिरेणाच्छादनात्। उपरवदेशात्स्तम्बयजुर्हरति। अन्तःपात्ये उपविश्य पूर्वपरिग्रहमेव। यूपावटाधिदक्षिणत उत्तरतश्च परिग्रहः। उपरवदेशे एव त्रिरुल्लेखः। सम्मार्जनान्ते (संमर्शनान्ते) ऽन्तःपात्ये महावेद्यां प्रणीताग्निनयनमपरीत्यैव "कस्त्वा"(शु०य०सं०२।२३)ति। कर्ममते प्रणीताप्रणयनपक्ष एवैतत्।
सम्मर्शनान्ते चात्वालमानम्। महावेदेरुत्तरांसात्पश्चा(२)द्द्व्यर्धे पदे चात्वालं(३) यथोक्तं वा। शम्यामादाय चात्वालं मिमीते पूर्वेणोत्करं०सञ्चरं परिहाप्य। शम्यामुदीचीं निदधाति पुरस्ताच्च दक्षिणतः प्राचीमुत्तरतश्च स्फ्येनान्तर्लिखति तप्तायनीति प्रतिमन्त्रम्।

"ॐ तप्तायनी मेऽसि।
ॐ वित्तायनी मेऽसि।
ॐ अवतान्मा नाथितात्।
ॐ अवतान्मा व्यथितात्" (५।९)।
विदेदग्निरिति चात्वाले प्रहरति स्फ्येनान्वारब्धे यजमानेन।
"ॐ विदेदग्निर्नभो नाम" (५।६)।
अग्ने अङ्गिर इति पुरीषं०हरति हस्तेन च। चा(त्वाला)त्स्फ्येन।
"ॐ अग्ने अङ्गिर आयुना नाम्नेहि" (५।९)।
योऽस्यामिति निवपति पूर्वार्द्धे शङ्कुसहितम्।

---

(१) शाखान्तात्। स्फ्यादानमप्युपरवदेश एव कर्तव्यं तदर्थत्वात्, देशान्तरस्यानुपदेशाच्च।

ननु "खादिरः स्रुवः, स्फ्यश्च" (का० श्रौ० १।३।३३—३४) इति परिभाषितत्वात्खादिर एव स्फ्यः, किमर्थं पुनरुच्यते खादिरेणेति। अत्रोच्यते—"खादिरो यूपो भवति खादिरः स्फ्य" इति स्फ्ययूपयोरेकजातीयत्वं श्रुतम् (श० ब्रा० ३।६।२।१४) तत्र यदि खादिराभावे सोमे बैल्वो वा रौहितको वा (का० श्रौ० ६।१।९) यूपः स्यात्तदा स्फ्यस्यापि तज्जातीयत्वशङ्कानिवृत्त्यर्थं पुनः खादिरेणेत्युक्तम्।

(२) अत्र पितृभूतिस्तु—अध्यर्धे पदे अतिक्रम्य चात्वालं परिलिखेत्, पदशब्देन प्रक्रमस्तथा श्रुतत्वादिति वर्णितवान्।

(३) "यत्रैव स्वयं मनसा मन्येतापेणोत्करमि (श० ब्रा० ३।५।१।१६) इत्यादि श्रुतेः। चात्वालशब्देन पुरीषार्थं खातोऽभिधीयते। परिशिष्टे त्वेवमुक्तमस्ति—

चात्वालादुत्करं कुर्याद्युगवरेण रथान्तरम्।
उत्करादुत्तरं कुर्याद्यूपस्य रथान्तरम्॥
ऊवध्यात्पूर्वतः कुर्याच्छामित्रस्य रथान्तरमिति।

अत्र स्फ्यशम्यादानमुत्तरवेदि छादनान्तं इह कर्तव्यम्।

आध्वर्यवपद्धतिः ।

"ॐ योऽस्यां पृथिव्यामसि यत्तेऽनाधृष्टं नाम यज्ञियं तेन त्वा दधे" ( ५।६ ) ।

अग्नीदुत्करयत्तूष्णींᳪहतम् । एवं द्विरपरम् । मन्त्रे अस्यामिति पदस्थाने द्वितीयस्यां तृतीयस्यामिति विशेषः ।

ततस्तूष्णीमन्त्रया खात्वा अनुत्वेति चतुर्थं यथार्थमाहृत्य ।

"ॐ अनुत्वा देववीतये हरामि" ( ५।६ ) ।

सिᳪह्यसीति व्यूहत्युत्तरवेदिम् ।

"ॐ सिᳪह्यसि सपत्नसाही देवेभ्यः कल्पस्व" ( ५।१० ) ।

अपरेण यूपावटदेशं० सञ्चरमवशिष्य वेद्यां युगमात्रीं यजमानदशपद्यां चोत्तरवेदिं यथासम्भवमुच्चां करोति ।

युगमात्रिस्त्र्यरत्निः स्यादङ्गुलानि चतुर्दश ।
सञ्चारश्चार्थवांश्चापि शस्यतेऽपि दशाङ्गुलः ॥

इति युगमात्रीमानं परिशिष्टे ।

एवं तिर्यङ्मानी त्रिपदा पार्श्वमानी तस्याक्ष्णयारज्जुर्दशकरणी- ( का० शु० सू० २।८ ) ति दशपद्यामानम् ।

तस्या मध्ये नाभिं करोति प्रादेशसमां चतुःस्रक्तिमीषदुच्चाम् ।

लौकिकीभिरुपकल्पिताभिरद्भिः प्रोक्षत्युत्तरवेदिᳪसिकताश्च प्रकिरति सिᳪह्यसीति प्रतिमन्त्रम् ।

"ॐ सिᳪह्यसि सपत्नसाही देवेभ्यः शुन्धस्व ।
ॐ सिᳪह्यसि सपत्नसाही देवेभ्यः शुम्भस्व" ( ५।१० ) ।

एताᳪरात्रिं पलाशादिनैवा(१)च्छन्ना वसति ।

इति वेदिमानम् ।

## ( आरम्भात्तृतीयदिनस्यापराह्णिकः प्रवर्ग्योपसत्प्रचारः )

अपराह्णे शालाद्वाराण्यपिधाय यथोक्तं व्रतप्रदानम् ।

ततोऽपराह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य रौहिणहोमौ "रात्रिः केतुने"

औद्गात्रपद्धतिः ।

अथापराह्णे घर्मोपसदन्ते सोमाप्यायनं निह्नवनं सुब्रह्मण्याह्वानं च

हौत्रपद्धतिः ।

## ( आरम्भात्तृतीयदिनस्यापराह्णिकः प्रवर्ग्योपसत्प्रचारः । )

तत अपराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां चरन्ति ।

---

( १ ) छादने विशेष आपस्तम्बेनोक्तः "उदुम्बरशाखाभिः प्लक्षशाखाभिर्वा प्रच्छन्ना वसतै," ( श्रौ० ११।५।६ ) ति ।

आध्वर्यवपद्धतिः ।

( ३७।२१ ) ति ।

अग्निहोत्रहोमे रात्र्यग्निपदविशिष्टो मन्त्रः । उपसद्धोमे "रजःशये" ( ५।८ )ति विशेषः ।

अनस्तमिते प्रैषादि । द्विस्तनं गावौ धुक्ष्वेति प्रैषः । व्रतग्रहणम् । अपररात्रे व्रतप्रदानम् ।

इति तृतीयमहः ।

( अथ चतुर्थमहः । )

अथौपवसथ्यं चतुर्थमहः । विप्रुड्याचनादिव्रतकरणान्तं पूर्ववत्

मैत्रावरुणपद्धतिः ।

कार्यम् । निह्नवने सव्यान् पाणीनुत्तानान् कृत्वा दक्षिणान्नीचैः कृत्वेति विशेषः ।

( अथ चतुर्थमहः । )

अथ चतुर्थदिवसे घर्मोपसदन्ते आतिथ्यान्तवत्सोमाप्यायनं निह्न·

हौत्रपद्धतिः ।

तत्र शान्त्यादिशान्त्यन्तः पूर्वदिनापराह्णप्रवर्ग्यवत्प्रवर्ग्यः ।

उपसाद विशेष उच्यते—

ब्रह्मन्त्साम्नि० । हिंहिंहिं (१)"उपसद्याय मीळ्हुष आस्ये जुहुता हवि· र्यो नो नेदिष्ठमाप्यो३म् ।

उपसद्याय मीळ्हुष आस्ये जुहुता हविर्यो नो नेदिष्ठमाप्यो३म् ।

उपसद्याय मीळ्हुष आस्ये जुहुता हविर्यो नो नेदिष्ठमाप्यो३

म्यः पञ्च चर्षणीरभि निपसाद दमे दमे कविर्गृहपतिर्युवो३म् ।

यः पञ्च चर्षणीरभि निपसाद दमे दमे कविर्गृहपतिर्युवो३म् ।

यः पञ्च चर्षणीरभि निपसाद दमे दमे कविर्गृहपतिर्युवो३

स नो वेदो अमात्यमग्नी रक्षतु विश्वत उतास्मान्पात्वंहसो३म् ।

स नो वेदो अमात्यमग्नी रक्षतु विश्वत उतास्मान्पात्वंहसो३म् ।

स नो वेदो अमात्यमग्नी रक्षतु विश्वत उतास्मान्पात्वंहसो३"

अग्निमावहेत्यादि पूर्वदिनीयापराह्णिक्युपसद्वन्निह्नवान्ता ।

इति द्वितीयोपसद्दिनम् ।

इति तृतीयमहः ।

( अथ चतुर्थमहः । )

( आरम्भाच्चतुर्थदिनस्य पौर्वाह्णिकौ प्रवर्ग्योपसदौ । )

ततस्तृतीये उपसदह्नि = आरम्भाच्चतुर्थे उपवसथसंज्ञकेऽह्नि प्रातः

(१) ऋ० ७।१५।१—३ ।

आध्वर्यवपद्धतिः ।

( पृष्ठ ३३ ) । तत्र एकस्तनं त्रिस्तनं वेति व्रते विशेषः ।

## ( आरम्भाच्चतुर्थदिनस्य पौर्वाह्णिक्यौ प्रवर्ग्योपसदौ । )

ततः पौर्वाह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां ( प्रचरेत् ) प्रचर्य तत्रोपसद्धोमे विशेषः—

"ॐ या ते अग्ने हरिशया तनूर्वर्षिष्ठा गह्वरेष्ठा ।

उग्रं वचो अपावधीत्वेषं वचो अपावधीत्स्वाहा" ( ५।८ ) ।

इदमग्नये हरिशयायै तन्वै ।

## ( आरम्भाच्चतुर्थदिनस्यापराह्णिक्यौ प्रवर्ग्योपसदौ )

द्वारापिधानम् । (१)अर्धव्रतप्रदानम् ।

पुनस्तदानीमेवापराह्णिक्यौ प्रवर्ग्योपसदौ पूर्ववत् । (२)उभाभ्यां

औद्गात्रपद्धतिः ।

चनं सुब्रह्मण्याह्वानञ्च कार्यम् । सुब्रह्मण्याह्वाने श्वः सुत्यामिति विशेषः ।

अथापराह्णे घर्मोपसदन्ते सोमाप्यायनं निह्नवनं सुब्रह्मण्याह्वानञ्च

हौत्रपद्धतिः ।

प्रवर्ग्योपसद्भ्यां चरन्ति । तत्र शान्त्यादिशान्त्यन्तः पौर्वाह्णिकः पूर्ववत्प्रवर्ग्यः ।

उपसदपि प्रथमदिनपूर्वाह्णोपसद्वन्निह्नवान्ता ।

## ( आरम्भाच्चतुर्थदिनस्यापराह्णिक्यौ प्रवर्ग्योपसदौ । )

ततः पूर्वाह्ण एव अपराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां चरन्ति ।

---

( १ ) यजमानायार्धव्रतं प्रयच्छेत्, न्यायस्य च समानत्वात्पत्न्यै च । तथा च मानवे—"उत्तमायामुपसदि पूर्वाह्णिकीं कृत्वा शालामध्यैति । अर्धव्रते प्रदाय सद्यः कुर्यादापराह्णिकी" ( २।३।२।१ ) मिति । "अपराह्णे नैर्दि स्वोत्थां अर्धव्रतं प्रदाय सम्प्रयन्त्य" इति आम्नातत्वादर्धव्रतं प्रदेयमिति गम्यते । यजमानः पत्नी च तदानीमेव व्रतयतः । व्रतस्यार्द्धं समविभक्तं अर्धव्रतम् । "अर्द्धं नपुंसक" ( पा० २।२।२ ) मिति समासः । तेन यावद्दुग्धमर्थं दुग्धं भवति त्रिस्तनमेकस्तनं वा तस्य समविभक्तं अर्द्धं दद्यान्न न्यूनातिरिक्तं वा ।

( २ ) उभाभ्यामुपसद्भ्यां चरिते प्रवर्ग्यं महावीरं यथोक्तमुत्सादयति यथाप्रवर्ग्याध्याये उक्तं "उपसदन्ते प्रवर्ग्योत्सादन" ( का० श्रौ० २६।७।१ ) मित्यत्र । चेज्ज्योतिष्टोमेऽनूचानः प्रथमयज्ञेऽपि प्रवर्ग्यं कुर्यात् । "स वै तृतीयेऽहन् षष्ठे वा द्वादशे वा प्रवर्ग्योपसदौ समस्य प्रवर्ग्यमुत्सादयतो" ( श० ब्रा० १४।३।१।१ ) ति श्रुतेः ।

अग्नीचयने विशेषः । तत्र पौर्वाह्णिक्योपसदा प्रचर्य सर्वं वा व्रतं यजमानाय प्रयच्छेदर्धव्रतं वा । तथा च श्रवणात् "परेत्य प्रवर्ग्योपसद्भ्यां प्रचरति प्रवर्ग्योपसद्भ्यां प्रचर्याथास्मै व्रतं वार्धव्रतं वा प्रयच्छत्यथ प्रवर्ग्योपसद्भ्यामि" ( १।२।१।१८ )। ति अग्निचित्ये नियमेनार्धव्रतमेव, साग्निचित्ये तु विकल्पः ।

आर्त्विज्यपद्धतिः ।

चरिते सुब्रह्मण्यान्ते प्रवर्ग्यमुत्सादयति सप्रवर्ग्ये ।

औद्गात्रपद्धतिः ।

कार्यम् । निधनवति साम्नि पाणी उत्तानौ कृत्वा दक्षिणाञ्चीचैः कृत्वेति विशेषः ।

हौत्रपद्धतिः ।

तत्र शान्त्यादिशान्त्यन्तः आपराह्णिकः पूर्वाह्णवत्प्रवर्ग्यः ।
उपसदपि प्रथमदिनापराह्णिक्युपसद्वन्निवधान्ता ।
यथा प्रथमे तथा तृतीये । एवमेतास्तिस्र उपसदः(१) ।

---

(१) स्वश्रुतौ तिस्र उपसदः । श्रुत्यन्तरे तु ज्योतिष्टोम एव द्वादशाप्याम्नाताः । तत्र प्रथमेऽहनि या क्रिया सैव चतुरहं(प्रथमद्वितीयतृतीयचतुर्थदिवसेषु)भवति । तथा द्वितीयेऽहनि या क्रिया सा चतुरहं ( पञ्चमषष्ठसप्तमाष्टमदिनेषु) भवति । या तृतीयेऽहनि क्रिया सा चतुरहं ( नवमदशमैकादशद्वादशस्वहःसु ) भवति एवमेताः स्वकाला एव विवर्द्धेरन्नेवं क्रमो बाधितो न भवति । तदुक्तं जैमिनिकात्यायनाभ्याम्—"स्वस्थानात्तु विवृध्येरन् कृतानुपूर्व्यत्वात् (५।३।२) स्वस्थानविवृद्धि (८।३।९) रि"ति । न्यायमालायां च–

"आवृत्तिरुपसत्स्वेषा सर्वस्यैकैकगाऽथवा ।
त्रिरभ्यासं पठेत्स्यादावित्र स्यात्समुदायगा ॥
प्रथमा मध्यमान्त्येति प्राकृतक्रमसिद्धये ।
एकैकस्या द्विरभ्यासे षट् सङ्ख्यापि प्रसिद्ध्यति ॥ ( ५।३।३-४.) इति ।

अत्र शाङ्खायनः—अहरहर्वा विपर्यासः ( ५।१२।१६ ) यद्युपसदो विवर्धेरन् प्रत्यहं वा विपर्यासं कुर्यात् । एवमपि श्रुतत्वात् । केचित्तु श्रुतिमन्यार्थां मन्यमानाः पूर्वपक्षमेतदिच्छन्ति । सिद्धान्तसूत्रं तु स्वकालास्तु विवर्धेरन्" ( शां. श्रौ. ५।१२।१९ ) इति ।

एवमुपवसथे=सुत्यायाः पूर्वस्मिन्नहनि प्रातरेव पौर्वाह्णापराह्णिके उपसदौ समाप्य प्रवर्ग्यरहिते यज्ञेऽग्निप्रणयनं भवति, सप्रवर्ग्ये यज्ञे तु प्रवर्ग्योपसदौ समाप्य महावीरपात्रोद्वासनं भवति ततोऽग्निप्रणयनम् । तदुक्तं कात्यायनाचार्यैः—"उभाभ्यां चरिते प्रवर्ग्यमुत्सादयति यथोक्तं कुर्याच्चे ( ८।३।१८ ) द्" इति ।

यदाध्वर्युरन्तःपात्यदेशस्थापितानां प्रवर्ग्यपात्राणामुत्तरवेदौ निधानार्थमुद्वासनं करोति तदा ब्रह्मा दक्षिणतः प्रकृतिवन्मन्त्रेणोपविशेद्यजमानोऽप्यमन्त्रकः ।

ततो निष्क्रमणकालेऽध्वर्युः प्रस्तोतारं प्रेष्यति ततः प्रस्तोता 'इयमग्नायिरि'ति साम त्रिषु स्थलेषूद्गायति तत्र "ए३। विश्वं न्यत्रिणं न्दहा २३४५ । ए३। विश्वं न्यत्रिणन्दहा २३४६ ॥" इति निधनं त्रिषु स्थलेषु होता पठेत् । यद्यपि सौत्येऽहनि प्रवर्ग्यस्तदापि होतुर्निधनपाठः ।

यदा यजमानश्चतुर्थां होत्रे यजमानो ददाति तदा होता रुद्राये ( शां० श्रौ० ७।१७।२) ति तां प्रतिगृह्णीयात् । यदा च प्रवृञ्जनीयौ शतमानौ ब्रह्मणे ददाति तदा ब्रह्मा अग्नये त्वे ( शां० श्रौ० ७।१७।१ )त्यादिना प्रतिगृह्णीयात् । इति प्रवर्ग्योत्सादने होतृप्रयोगः ।

आश्वलायनपद्धतिः ।

## ( अथ प्रवर्ग्योत्सादनम् । )

अथ प्रवर्ग्योत्सादनम् । उपसदन्ते (१)प्रवर्ग्योत्सादनम् । अन्तःपात्ये वेदिमध्ये परिधयर्स्यं निधाय पूर्वापरौ खरावपि तत्रोत्तरतः दक्षिणेन निर्हृत्योच्छिष्टखरं दक्षिणतो विप्रकृष्ट निदधाति ।

दक्षिणेनाहवनीय तूष्णीं(२) ब्रह्मास्ते ।

आहवनीये त्रीन् शालाकान्प्रदीप्य प्रदीप्याग्नीध्रो धारयति शतरुद्रियवत्प्रतिलोम प्रमाणेषु ।

कौत्सप्रपद्धति ।

## ( अथ प्रवर्ग्योत्सादनम् । )

अथ प्रस्तोता प्रवर्ग्योद्वासनकाले उत्तरेण सम्राडासदङ्गत्वा पश्चात्तिष्ठन्नध्वर्युप्रेषितस्त्वयग्नायिरिति प्रवर्ग्यसाम सकृद्गायेत् ।

बृहस्पति ऋषिः, अत्यष्टिच्छन्दः, अग्निर्देवता ।

त्यग्नायिः । प्रतिदहति । ( संहितायान्तु दीर्घान्त. पाठ.) हाउ हो ५ हाउ । अग्निऽहो तारम्मा ३ न्ये ३ दास्वन्तम् । (३) (त्यग्नायि०) वसो सूनुꣳ सहसो जा ३ ता ३ वदसम् ( त्यग्नायिः०) विप्राम् । न जा ३ ता वदसम् ( त्यग्नायि०) य ऊ । ध्वया ३ सु ३ वध्वरः । ( त्यग्नायि०) देवो । देवा २ चो ३ याकृपा ( त्यग्नायि० । ) घृता । स्य विभ्राष्टिमनु शू ३ का शाचिषः ( त्यग्नायि ०) आजू । ह्वाना ३ स्या ३ सर्पिष । ( त्यग्नायिः ) प्रतिदहति। हा उ हा ६ हाउ । वा । ए ३ । विश्वꣳ समत्रिण दहा २ ३ ४ ५ । ए ३ । विश्व न्यत्रिणन्दहा २३४५ । ए ३ । विश्व न्यत्रिणं दहा २३४५ (४) ॥२४॥ (५)

---

( १ ) प्रवर्ग्यात्सादनमिति सज्ञा सम्यवहारार्था । अत्र प्रवर्ग्यशब्देन तत्सबन्धीनि पात्राणि लक्ष्यन्ते । तेषा तत्स्थानात् निष्कासनं प्रवर्ग्योत्सादनम् ।

( २ ) अत्र प्रवर्ग्ये दक्षिणाग्निमपरेण वा शकटस्य वा पूर्वेण परेण वा गार्हपत्यस्य दक्षिणत आहवनीयस्य वा दक्षिणत आसीत ब्रह्मा । तथा च कात्यायन.—दक्षिणाग्निमपरेण घर्मे ( ११।१।६ ) इति ।

( ३ ) कुण्डलिकाद्यान्तर्गतपाठा न दृश्यन्ते संहितायाम् ।

( ४ ) संहितायां तु नीचैर्लिखितवाम् पाठः ।

"ए ३ । विश्वꣳ समत्रिणन्दह । ए ३ । विश्व न्यत्रिणं दह । ए ३ । विश्व न्यत्रिणं दहा २ ३ ४ ५" इति ।

( ५ ) छ० आ० ६।२।३।१। ग गा १२।१।३८

आध्वर्यवपद्धतिः ।

तिसृभिः शलाकाभिरेकः शालाकः ।

(१)पूर्णाहुतिवदाज्यꣳसꣳस्कृत्य चतुर्गृहीतेनाभिजुहोति या ते घर्म दिव्या शुगिति प्रतिमन्त्रम् ।

अध्वर्युस्तिष्ठन्नाज्यतृतीयांशं (२)मुखसमीपे(सम्मिते)ऽग्नीधा धारिते प्रदीप्ते शालाके जुहोति ।

"ॐ या ते घर्म दिव्या शुग्या गायत्र्याꣳहविर्धाने ।
सा त आप्यायतां निष्ट्यायतान्तस्यै ते स्वाहा" (३८।१८) ।

इदं घर्माय ।

अग्नीत् शालाकमग्नौ प्रक्षिप्य द्वितीयं प्रदीप्य नाभिमात्रे धारयति ।

अध्वर्युस्तिष्ठन्नेव तत्र जुहोति ।

"ॐ याते घर्मान्तरिक्षे शुग्या त्रिष्टुभ्याग्नीध्रे ।
सा त आप्यायतां निष्ट्यायतां तस्यै ते स्वाहा" । (३८।१८)

इदं घर्माय ।

अग्नीच्छालाकमग्नौ प्रास्य तृतीयं प्रदीप्य जानुमात्रे धारयति ।

अध्वर्युः प्रास्याग्नौ शालाकं तृतीयं, उपविश्य जुहोति ।

"ॐ या ते घर्म पृथिव्याꣳशुग्या जगत्याꣳसदस्या ।
सा त आप्यायतां निष्ट्यायतान्तस्यै ते स्वाहा" । (३८।१८) ।

इदं घर्माय ।

अध्वर्योः क्षत्रस्य त्वेति निष्क्रमणं पुरस्तात्पत्नीमन्तर्धाय(३) ।

सर्वेषां तूष्णीं निष्क्रमणम् ।

"ॐक्षत्रस्य त्वा परस्पाय ब्रह्मणस्तन्वं पाहि ।
विशस्त्वा धर्मणा वयमनुक्रामाम सुविताय नव्यसे" (३८।१९) ।

अन्तःपात्ये तिष्ठन् साम प्रेष्यति । साम गाय । अवभृथवद्देशाः निधनं च(४) । सपत्नीयजमाना धर्मर्त्विजः सर्वेऽत्र निधनं ब्रुवुः ।

औद्गात्रपद्धतिः ।

एविश्वमित्यादीनि त्रीणि निधनानि घर्मोपयुक्ताः सर्वे ब्रूयुः । पत्नी च ब्रूयात् । पवमध्ये हवनीयस्थाने च गायेत् ।

---

(१) निरूप्याज्यं गार्हपत्येऽधिश्रित्य स्रुक्स्रुवं च सम्मृज्योद्वास्योत्पूयावेक्ष्य चतुर्गृहीतं समित्पूर्वकमिति भावः ।

(२) मुखमात्रादिप्रमाणं यजमानस्यैव "दान-वाचना-न्वारम्भण-वर-वरण-व्रत-प्रमाणेषु यजमानं प्रतीयात् (का. श्रौ० १।१०।१२) दित्युक्तेः ।

(३) "अथोपनिष्क्रमति क्षत्रस्य त्वेति" (१४।३।१।१९) श्रुतेः । पत्न्यन्तर्धानं शाखान्तरात् । (४) चकारादाहृतमार्गयोस्सादनदेशं गच्छन्तीत्येतदप्यवभृथवद्भवति ।

आश्वयैवपद्धतिः ।

(१)उत्सादनदेशं गच्छन्त्यनग्ना उत्तरवेदिम् ।

अर्द्धपथे स्थित्वा साम प्रैवो गातं निधनानि । ततस्तथैवोत्तरवेदिसमीपे । ततो जलेनोत्तरवेदिं त्रिः परिषिच्याचिक्रददिति(२) ।

"ॐअचिक्रदद्वृषा हरिर्महान्मित्रो न दर्शतः ।

सᳬ सूर्य्येण दिद्युतदुदधिर्निधिः" (३८।२२) ।

ईशानकोणादारभ्य सकृन्मन्त्रेण द्विस्तूष्णीम् ।

मन्त्रक्रमेण वाऽग्ने परिषेचनम् । अन्ते इतरथावृत्तिः ।

महावेदेर्दक्षिणतः समन्त्रं ब्रह्मास्ते ।

अध्वर्युर्नाभिस्पृष्टं प्रवृञ्जनीय महावीरं निदधाति चतुःस्रक्तिरिति ।

"ॐचतुः स्रक्तिर्नाभिर्ऋतस्य सप्रथाः ।

स नो विश्वायुः सप्रथाः ।

स नः सर्वायुः सप्रथाः ।

अपद्वेषो अप ह्वरो ऽन्यव्रतस्य सश्चिम" (३८।२०) ।

प्राश्त्रावितरौ तत्पुरतः। प्रत्येकं मन्त्रः। उपयमनीं च तत्पुरतस्तूष्णीम् । परीशासावभितः। रौहिणहवन्यौ चावरुष्टे वाह्ये। अग्निमुत्तरतः।आसन्दीं दक्षिणतः। कृष्णाजिनमुत्तरतः। सर्वतो धवित्राणि प्राग्वज्रे परिधींश्च तथा रज्जुसन्दानं वेदमुपयमन्यामाधाय पश्चात् पिन्वने चाभितो दण्ड स्थूणामयूखं पश्चाद्रौहिणकपाले धृष्टी च मध्येऽयस्स्रुवकूर्चादि । खराबुत्तरतः पूर्वापरौ । दक्षिणतो मार्जालीयदेशं (३)वहिर्वेदुच्छ्रिप्रसरं आ-

औद्गात्रपद्धतिः ।

प्रस्तोता परिषिच्यमाने धर्मे परिषेकजलमुपस्पृश्याचिक्रददिति वर्षाहराम्निगायेत् ।

---

(१) उत्सादनं = महावीराणं परित्यागः । तस्य देशोऽग्निचयने परिस्यन्दो विहितः।(श०ब्रा०९।२।१।१९) स च जलपरिवृतो द्वीपो निर्जलो भूभागः । अनग्निचिते उत्तरवेदिरेव उत्सादनदेशः ।

(२) आपस्तम्बे विशेष —"अपां मध्य उद्वासयेन्नदीद्वीपे चोद्वासयेद्यदि नदी द्वीप उद्वासयेन्न परिषिञ्चे (१६।१६।२-३) दिति । तेन परिष्यन्दस्य परिषेको न भवति स्वत एव तस्याद्भिर्वेष्टितत्वादिति ।

(३) ननु "आग्नीध्राद्दक्षिणार्द्धं सम्प्रति वेद्यन्ते दक्षिणामुखो मर्जालीय (का० श्रौ० ८।३।२०) मिति वेद्यन्त एव मार्जालीयस्य विधानान्मार्जालीयं दक्षिणत इत्येतावतैव बहिर्वेदित्वसिद्धेर्व्यर्थं बहिर्वेदिरिति । सत्यं अत एव वेद्यन्तसंश्लिष्टं न भवतीति प्रतीयते । अत एव सूत्रकारेण सम्प्रतीति वचोक्तम् । सम्प्रति = सन्निहितं न संश्लिष्टमिति । अत एव महाव्रते छन्दोगसूत्रे—"शूद्रार्यौ चर्मणो" (तां० ब्रा०५।६।१४) ला०श्रौ०४।३।५) दक्षार्यस्य मार्जालीयं दक्षिणेनाऽन्तर्वेद्यवस्यानमुक्तम् । "मार्जालीयन्दक्षिणेनान्तर्वेदि आर्यो बहिर्वेदि शूद्र" इति ।

माध्यर्न्दिनपद्धतिः।

सेचनवन्ति पयसः पूरयति घर्मं तप्त इति ।

ॐघर्मंतत्ते पुरीषं तेन वर्धस्व चा च प्यायस्व ।

वर्धिषीमहि च वयमा च प्यासिषीमहि (३८।२१)।

महावीरत्रयं—(पिन्वन)(द्वे)-स्रुक्-स्रुवाणां सप्तानां सशेषं पूरणं प्रत्येकं मन्त्रः ।

शेषं व्रतमिश्रं दीक्षिताय प्रयच्छति व्रतं चेत्केवलम् ।

अत्र वा परिषेचनम् ।

वार्षाहरेष्टाहोत्रीये सामनी गायेति प्रेष्यति ।

वार्षाहरठं० साम गाय ।

नात्र निधनपाठः सर्वेषाम् ।

इष्टाहोत्रीयठं साम गाय ।

निधनपाठः सर्वेषाम् ।

औद्गात्रपद्धतिः ।

वृषाहरि ऋषिः गायत्रीछन्दः सोमोदेवता—

अचिक्रदा३त् । आचिक्रदा३त । अचिकदा५दे । वृषाहरा ३ यि । वार्षाहरा३यि । वृषाहरा३५ । महान्मित्राः ३ । माहान्मित्राः ३ । महान्मित्राः ५५ ।नदर्शताः ३ । नादर्शता ३ः । नदर्शता५५ । सठं०सूरिया३यि । साऽंसूरिया३ई । संऽंसूरिया५५ । णादिद्युता३यि । णादिद्युता३यि । णदा५यिद्युताउ । वा(१) ॥ २५ ॥

परिषिक्ते घर्मे इष्टाहोत्रीयं त्रिर्गायेत् ।

अप्सराऋषिः गायत्रीछन्दः आपोदेवता ।

इष्टा होत्राः । आसृदा २३४ ता । इन्द्रं वृधा । तौ २ च्चा २३४ रा· यि । आहा३वोमृ । धर्मो३जा५ सा ६५६ । प ३। उद्धिर्णिधौ(२) ॥२६॥

घर्मोपयुक्ताः सर्वे निधनं ब्रूयुः ।

प्रस्तोतापत्नीशालां प्रत्याव्रजन्नभिप्रव इति श्यैतं तृचे गायेत् ।

श्यैतऋषिः बृहतीछन्दः इन्द्रो देवता—

अभिप्रवः सुरा । धसा २४ ओहो वा । आयिन्द्रमर्चे । यथाविदा

(१) छ० आ० ६।१।२।१—गे० गा० १४, १, १,

(२) छ० आ० २,२, १, ७,—गे० गा ४, २, १२ ।

आध्वर्यवपद्धतिः ।

चात्वाले मार्जयन्ते सपत्नीकाः सुमित्रिया न (१) इति घर्मर्त्विजः पाणिनैवाद्भिः ।

"ॐ सुमित्रिया न आप ओषधयः सन्तु ।

दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यं च वयं द्विष्मः" (३८।२३)

उद्वयमित्युत्क्रामत्युत्तरपूर्वार्द्धे यजमानः ।

"ॐ उद्वयं तमसस्परि स्वः पश्यन्त उत्तरम् ॥

देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम्" ( ३८।२४ ) ।

अनपेक्षमेत्यैधोऽसीति समिधमादाय यजमानः ।

"ॐ एधोऽस्येधिषीमहि" (३८।२५ ) ।

आहवनीयेऽभ्याद्धाति समिदसीति ।

"ॐ समिदसि तेजोऽसि तेजो मयि धेहि" ( ३८।२५ ) ।

पत्नी च गार्हपत्ये तूष्णीम् (२) ।

औद्गात्रपद्धतिः ।

२३४ इ । ओ३हा । योजरितृभ्यः । माया २३ वा । पुरुतू २ वा २३४ सू । सहस्रेणायिवा ३ शा । हुम्मायि । क्षा २ ता २३४ औहो वा ॥ + ॥ सहस्रेणे वशि । क्षता ३४ औ हो वा । साहस्रेणे । वशायिक्षता २३४ यि । शतानीकेव । प्राजा २३ यिगा । तिधा २ । ष्णू २३४ या । हन्ति वृत्रा-णी ३ दा । हुम्मायि शु२षा २३ औ हो वा ॥ + ॥ हन्तिवृत्राणिदा । शुषा ३४ औ हो वा । हान्तिवृत्रा । णिदाशुषा २३४ यि । ओ३ हा । गिरे रिवप्र । रासा २३ आ । स्य पारियि । न्वा २३४ यि रायि । दशोणिपुरू ३ भैं । हुम्मायि । जा २ सा २३४ औहोवा । या २३४ सु(३) ॥ २७ ॥

---

(१) "अथ चात्वाले मार्जयन्ते सुमित्रिया न" ( श०ब्रा०१४।३।१।२७ ) इति श्रुतेः । अत्र "अञ्जलिनाऽप उपसिञ्चति, दुर्मित्रिया" इति प्रकृत्य "यामस्य दिशं द्वेष्यः स्यात्तां दिशं परासिञ्चे" (श०ब्रा०१४।३।१।२७ ) दित्येतच्छ्रौत्रामणीवच् ( श०ब्रा०१२।९।२।६ ) छ्रुतिपठितमपि सूत्रकृता पद्धतिकृता च कथमपि नोपनिबद्धमिति न ज्ञायते । (२) शाखान्तरात् ।

(३) उ० आ० ३, १, १३, १-२ = ऊ० गा० ३, १, ३ ।

आध्वर्यवपद्धतिः ।

यजमानः-स्वासने उपविश्य प्रवृञ्जनीये शतमाने ब्रह्मणे ददाति(१)। घर्मदुघामध्वर्यवे(२), यजमानव्रतदुघां होत्रे पत्न्या उद्गातृभ्यः(३)। अग्नीधेऽजाम्(४)। घर्मभेदे यथोक्तमुत्सायश्चान्यं कुर्यादभिन्नेन चरेत् ।

इति प्रवर्ग्योत्सादनम् ।

औद्गात्रपद्धतिः ।

श्यैतस्य यजमानो निधनं ब्रूयात् ।

प्रस्तोता पूर्व्यया द्वारा प्रपत्योत्तरेणाग्नीन् गत्वा पश्चाद्गार्हपत्यस्य तिष्ठन् प्रवर्ग्यस्थानं प्रेक्ष्यमाणो वामदेव्यं तृचे गायेत् ।

वामदेव्यऋषिः गायत्रीछन्दः इन्द्रोदेवता—

३ ५ ८ ४ २ ४८ ५ १ ८ २ १८ २ १

का ५ या । न श्चा ३ यिश्रा ३ आभुवात् । ऊ । ती सदा वृधः स ।

२ ३ २ १ २ ३ २ १८ — १

खा । औ ३ हो हा यि । कया २ ३ शचायि । यौ हो ३ । हुम्मा २ वाऽ

२ ३ ३ ४ २ ४ ५ १

२ तों ३५ हायि ॥ + ॥ काऽ ५ स्त्वा । सत्यो ३ मा ३ दानाम् । मा ।

२८ १ २ १ २ ३ २ १ २ ३ ३

हिष्ठोमात्सा दन्ध । सा । औ ३ हो हायि । दृढा २ ३ चिदा । रु जो

२ १ — १ ^ २ ३ ३ ४ २

हो ३ । हुम्मा २ वा २ सोऽ ५ हायि ॥+॥ आऽ ५ भी । षुणा ३ः स

४ ५ १ २८ १ २८ १ ८ २ १

३ खीनाम् । आ । विता जरायितृ । णाम । औ २ ३ हो हा यि । शता २३

२ ३ ८ २ १ — १ ^ २

म्भवा । सि यौ हो ३ हुम्मा २ । ताऽ २ यो ३ ५ हायि(५) ॥ २८ ।

---

(१) 'इच्छतो मन्त्रवचन' (का०श्रौ०१०।२।३०) मित्युक्तेर्मन्त्रवचनेच्छा चेत्तदा-ब्रह्मा "अग्नये त्वा मह्यं वरुणो ददातु सोऽमृतत्वमशीयायुर्दात्र एधि मयो मह्यं प्रतिगृहीत्रे" (य० सं० ७।४७) (शां० श्रौ० ७।१८।१) इति प्रतिगृह्णीयात् ।

(२) अध्वर्युः "रुद्राय त्वा मह्यं वरुणो ददातु सोऽमृतत्वमशीय प्राणोदात्र एधि मयो मह्यं प्रतिग्रहीत्रे" (य० सं० ७।४७ ।) (शां० श्रौ० ७।१८।२) इति प्रतिगृह्णीयात् । एवं होता उद्गाता च रुद्रायेति प्रतिगृह्णीयाताम् ।

(३) यद्यपि "उद्गात्रे" (का०श्रौ०२६।७।४४) इति सूत्रे एकवचनं तथापि त्रिभ्योऽपि दानम् । "अथ यैषा पत्न्यै व्रतदुघा तामुद्गातृभ्यो ददातीति (श० ब्रा०१४।३।१।३५) श्रुतौ बहुवचनश्रुतेः । "सा विभक्ता च विक्रीता दातारं पातयत्यथ" इत्यस्य श्रुत्या बाधः ।  (४) अजामग्नीधे ददाति शाखान्तरात् ।

(५) २८—उ०आ०१,१,१२,१—३ = ऊ०गा०१,१,५॥

आध्वर्यवपद्धतिः ।

## ( अग्निप्रणयनम् । )

अथाग्निप्रणयनम् । अग्निं (१)प्रणयत्यौपनिवपनात्कृत्वा त्रियूनयद्वं द्वाविंशतिकाष्ठमयमिध्ममाहवनीये प्रज्वाल्य निरूप्याज्यं गार्हपत्येऽधिश्रित्य स्रुक्स्रुवं सम्मृज्य उद्वास्योत्पूयावेक्ष्य पञ्चगृहीतं गृहीत्वा, आज्यं स्रुक्स्थं लौकिकप्रोक्षणीश्चोद्यम्येत्यायान्यस्मै प्रदाय सोपयमनीकमग्निᳪ स्वयं गृहीत्वाह—

अग्नये प्रणीयमानायानुब्रू३ हि एकस्फ्ययानुदेहि ।

मैत्रावरुणपद्धतिः ।

अथाग्निप्रणयने अभिमनुगच्छन्नग्नेर्मूर्द्धवतं त्रिर्गायेत् । अग्निं ऋषिः गायत्री छन्दः अग्निर्देवता ।

हौत्रपद्धतिः ।

## ( अग्निप्रणयनम् । )

अथाग्निप्रणयनम्(२) । होताऽऽचम्य सञ्चरेण(३) प्रविश्याग्नये प्रहि-

---

( १ ) अत्र महावेदिमुत्तरेणैवेध्मनयनं कर्तव्यं दर्शप्रयाजे पशौ ( आ०श्रौ०७।७।१ ) वापस्तम्बलौगाक्षिसूत्रयोस्तथादर्शनात् । "इध्ममन्वाद्धती" ( श०ब्रा०३।५।२।१ ) यत आरभ्योत्तरवेदावग्निनिधानान्तस्येह श्रुतत्वात् ।

अत्र "एकविंᳪशतिं वा" ( का०श्रौ०१।३।१९ ) इति सूत्रेण एकविंशतिसङ्ख्यकाष्टकेध्मप्राप्तौ "अपरिमितं प्रणयनीयं त्रियून" ( का०श्रौ०१।३।२१ ) मित्यपरिमिते उक्ते अपरिमितशब्देन पूर्वोक्तपरिमाणप्रतिषेधः उताथमपि सङ्ख्यान्तरविधिरिति संशयः । अत्र अपरिमितशब्दगतेन नञा परिमाणं निषिध्यते । तथासत्यपरिमितशब्दव्युत्पत्त्या ( भाव ) द्रव्यस्य परिमाणशून्यता प्रतीयते इति पूर्वः पक्षः । अपरिमितशब्दस्य रूढ्या बहुत्वमर्थः । तथैव प्रयोगबाहुल्यात् । ततः सङ्ख्यान्तरं विधीयत इति सिद्धान्तः । तथा च जैमिनिकात्यायनौ—"अपरिमाणे शिष्टस्य सङ्ख्याप्रतिषेधस्तच्छ्रुतित्वात् । कल्पान्तरं वा तुल्यवत्प्रसङ्ख्यानात्" ( ६।७।२१–२२ ) । "अपरिमितं प्रमाणाद्भूय" ( का०शु०१।२३ ) इति ।

अधिकप्रमाणता च एकेनैव सम्पादनीया न तु द्वित्रादिना, अनवस्थाप्रसङ्गात् । अत एव पद्धतौ द्वाविंशतिकाष्ठकमिध्ममित्युक्तं युक्तमेवेति ।

( २ ) अत्र यक्ष्यजमानौ दक्षिणत उपविशेयाताम् ।

( ३ ) "चात्वालोत्करावन्तरेण सञ्चरः प्रणीतोत्करावित्येके" ( का०श्रौ०१।३।४१–४२ ) ( शां०श्रौ०१।४।१ ) वि .परिभाषोक्तेरन्तरेण चात्वालोत्करौ प्रपद्याहवनीयस्योत्तरतस्तूष्णीमुपविश्याह ।

चात्वालोत्करलक्षणप्रतिपादकः श्लोकः—

चात्वालो नाम पश्चादौ वेद्यर्थं क्रियतेऽवटः ।।

देशः स उत्करो ज्ञेयः कीर्यन्ते यत्र पांसवः । इति ।

आध्वर्यवपद्धतिः ।

ब्रह्मयजमानौ चानुगच्छतः ।

ब्रह्माहवनीये प्रणीयमाने अप्रतिरथस्य द्वादश (१७।३३-४४) ब्रुवन्नग्नो सर्वश्चैके ।

( अप्रतिरथसूक्तम् । )

( आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् ।

सङ्क्रन्दनो निमिष एकवीरः शतꣳ सेना अजयत्साकमिन्द्रः ॥१।

सङ्क्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना ॥

तदिन्द्रेण जयत तत्सहद्ध्वं युधो नर इषुहस्तेन वृष्णा ॥२॥

स इषुहस्तैः स निषङ्गिभिर्वशी सꣳस्रष्टा स युध इन्द्रो गणेन ॥

औद्गात्रपद्धतिः ।

२८ ^ १८ २८ १८ ८ २ ८ ६ १ २
हाउ २ हाउ । ग्ना जा ओ वा । ३ । अग्निर्मूर्द्धा दी ३ वाः का १ कू

र १ २ र र र १
२ त् । पति पृथिवी ३ यात्रा १ या २ मं । अपा ꣳ रेताꣳसी ६ जांयि-

२ २र १ ३८ २८ ३८ ८ ३८ २ ४
न्वा १ ती २३ । हाउ २ हाउ । ग्ना जा ओ वा । २ । ग्ना जा ३ ओ ५ वा

हौत्रपद्धतिः ।

प्रमाणायानुब्रूहीत्युक्ते आसीनः प्रथमाम् ।

(१) "प्र देवं देव्या धिया भरता जातवेदसम् ।

हव्या नो वक्षदानुषे ३ म् ।

प्र देवं देव्या धिया भरता जातवेदसम् ।

हव्या नो वक्षदानुषो ३ म् ।

प्र देवं देव्या धिया भरता जातवेदसम्"(२) ।

तत उत्थाय अनुगच्छन् ।

"हव्या नो वक्षदानुषो ३ म् ।

अयमुष्य प्र देवयुर्होता यज्ञाय नीयते ।

रथो न योरभीवृतो घृणीवाञ्चेतति त्मनो ३ म

---

(१) ऋ०१०।१७६।२-४

(२) अत्राधेर्वे विरमेद्यावदध्वर्यवो न गच्छन्ति, गच्छत्सु तेषु शिष्टमर्धर्चमासीन एवोक्त्वा तत उत्थाय उत्तरे द्वे ऋचावनुगच्छन्पठेत् "आसीनः प्रथमामुत्तरे अनुसंयन्" (शां० श्रौ० ३।१४।९-१०) इत्युक्तत्वात् ।

आग्वमेधपद्धतिः ।

सर्ठ० सृष्टजित्सोमपाबाहु शर्द्ध्युग्रधन्वा प्रतिहिताभिरस्ता ॥३॥
बृहस्पते परि दीयारथेन रक्षोहा मित्राँ२ऽअपबाधमानः ॥
प्रभञ्जन्त्सेनाः प्रमृणो युधाजयन्नस्माकमेध्यविता रथानाम् ॥४॥
बलविज्ञायस्थविरः प्रवीरः सहस्वान्वाजी सहमानऽउग्रः ॥
अभिवीरोऽअभिसत्वा सहोजा जैत्रमिन्द्र रथमातिष्ठ गोवित् ॥५
गोत्रभिदङ्गोविदं वज्रबाहुञ्जयन्तमज्मप्रमृणन्तमोजसा ॥
इमर्ठ० सजाताऽअनुवीरयद्ध्वमिन्द्रर्ठ० सखायोऽअनुसर्ठ०रभद्ध्वम् ६
अभिगोत्राणि सहसा गाहमानोदयोव्वीरः शतमन्युरिन्द्रः ।
दुरश्च्यवनः पृतनाषाडयुद्ध्योस्माकर्ठ० सेनाऽअवतु प्रयुत्सु ॥७।
इन्द्रऽआसान्नेता बृहस्पतिर्दक्षिणा यज्ञः पुरऽएतु सोमः ।
देवसेनानामभिभञ्जतीनाञ्जयन्तीनाम्मरुतो यन्त्वग्रम् ॥ ८ ॥

सौत्रामणपद्धतिः ।

२८ १ २ १ २८ १८ ३ १ १ १
६ ५ ६ । प । वि श्व स्य जगतो ज्यो ती २ ३ ४ ५:(१) ॥ ५९ ॥

हौत्रपद्धतिः ।

अयमग्निरुरुष्यत्यमृतादिव जन्मनः" (२) ।
तत इध्मे साधमाने—
"सहसश्चित्सहीयान्देवो जीवातवे कृतो ३ म् ।
इळायास्त्वा पदे वयं नाभा पृथिव्या अधि ।
जातवेदो निधीमह्यग्ने हव्याय वोळहवो ३ म् (३) ।
अग्ने विश्वेभिः स्वनीक देवैरूर्णावन्तं प्रथमः सीद योनिम् ।
कुलायिनं घृतवन्तं सवित्रे यज्ञं नय यजमानाय साधो ३ म् । (४)
सीद होतः स्व उ लोके चिकित्वान्त्सादया यज्ञं सुकृतस्य योनौ ।

---

(१) २१७०आ०१,१,२,७—आ०गा०६,१,१, ॥
(२) "सन्तानार्थोऽर्धर्चेन कालक्षतो" ( शां० श्रौ० १।१।२६ ) इति परिभाषगाथा-वद्ग्निमाछादनमत्र विरामः कार्यः ।
(३) ऋ० ३।२९।४। (४) ऋ० ६।१५।१६

माध्यपद्धतिः।

इन्द्रस्य वृष्णो वरुणस्य राज्ञऽआदित्यानाम्मरुताᳩँशर्द्धऽउग्रम्।
महामनसाम्भुवनच्यवानाङ्घोषो देवानाञ्जयतामुदस्थात्॥ ९॥
उद्धर्षय मघवन्नायुधान्युत्सत्वनाम्मामकानाम्मनाᳩँसि।
उद्वृत्रहन्वाजिनां वाजिनान्युद्रथानाञ्जयतां यन्तु घोषाः॥१०॥
अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं याऽइषवस्ता जयन्तु।
अस्माकं वीराऽउत्तरे भवन्त्वस्माँ२ऽउदेवाऽअवता हवेषु॥ ११॥
अमीषाञ्चित्तम्प्रति लोभयन्ती गृहाणाङ्गान्यप्वे परेहि।
अभिप्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम्॥१२॥)

प्रथमायां त्रिरक्तायामावेदिहरणम्।

( रेखाकरणम्। )

प्रतिप्रस्थाता स्फ्येन लिखत्याग्नेयीं दिशोत्तरवेदेर्वा।

( उत्तरवेदिप्रोक्षणम्। )

उत्तरवेदिं प्राप्य अग्निमग्नीधे प्रदाय तद्दक्षिणतस्तिष्ठन्नुदङ्मुख उत्तरवेदिं प्रोक्षतीन्द्रघोष इति प्रतिमन्त्रं प्रतिदिशं यथालिङ्गम्।

"ॐ इन्द्रघोषस्त्वा वसुभिः पुरस्तात्पातु।
ॐ प्रचेतास्त्वा रुद्रैः पश्चात्पातु।
ॐ मनोजवास्त्वा पितृभिर्दक्षिणतः पातु।
ॐ विश्वकर्मा त्वादित्यैरुत्तरतः पातु" (५।११)।

(प्रोक्षणीशेषनिषेचनम्।)

दक्षिणाᳩँसहितं वहिर्वेदिशेषं निषिञ्चति, इदमहं तप्तं वारमुमित्यभिचरन्।

हौत्रपद्धतिः।

देवायोर्देवाहविषा यजास्यग्ने बृहद्यजमाने वयोधो ३ म्।(१)
निः होता होतृषदने विदानस्त्वेषो दीदिवाँ असदत्सुदक्षः।
अदब्धव्रतप्रमतिर्वसिष्ठः सहस्रम्भरः शुचिजिह्वो अग्नो ३ म्।
त्वं दूतस्त्वमु नः परस्पास्त्वं वस्य आ वृषभ प्रणेता।

(१) ऋ०३।२९।८।

आज्यपर्यग्निकरणादि ।

"ॐ इदमहं तप्तं वार्बहिर्धा यज्ञान्निःसृजामि" ( ५।११ ) ।

( पञ्चगृहीताज्यस्य होमः । )

जुहोतिस्थाने उपविश्य मध्ये च हिरण्यं निधाय नाभ्याः श्रोण्यꣳ-सेषु पञ्चगृहीतं जुहोत्यदक्षिणया दक्षिणेꣳसे श्रोण्याꣳश्रोण्यामꣳसे मध्ये च हिरण्यं पश्यन् सिꣳहासीति प्रतिमन्त्रम् ।

"ॐ सिꣳह्यसि स्वाहा" ( ५।१२ ) ।

इदꣳसिꣳह्यै० ।

"ॐसिꣳह्यस्यादित्यवनिः स्वाहा" ।

इदꣳसिꣳह्यै आदित्यवन्यै० ।

"ॐ सिꣳह्यसि ब्रह्मवनिः क्षत्रवनिः स्वाहा" ।

इदꣳसिꣳह्यै ब्रह्मवन्यै क्षत्रवन्यै० ।

"ॐ सिꣳह्यसि सुप्रजावनी रायस्पोषवनिः स्वाहा" ।

इदं सिꣳह्यै सुप्रजावन्यै रायस्पोषवन्यै० ।

"ॐसिꣳह्यस्यावह देवान्यजमानाय स्वाहा" ।

इदं सिꣳह्यै० ।

सर्वत्र एवमेव वा त्यागः ।

भूतेभ्यस्त्वेति स्रुचमुद्यच्छति ।

"ॐभूतेभ्यस्त्वा उद्यच्छामि" ( ५।१२ )

(नाभेः पश्चिमे दक्षिणे उत्तरे च क्रमेण परिधिनिधानम् ।)

नाभिं पैतुदारवैः परिदधाति पूर्ववद्ध्रुवोऽसीति प्रतिमन्त्रम् ।

"ॐ ध्रुवोऽसि पृथिवीन्दृꣳह" । मध्यमम् ।

"ॐ ध्रुवक्षिदस्यन्तरिक्षन्दृꣳह" । दक्षिणम् ।

होत्रपद्धतिः ।

अग्ने तोकस्य नस्तने तनूनामप्रयुच्छन्दीद्यद्बोधि गोपो ३ म (१) ।

त्वं दूतस्त्वमु नः परस्पास्त्वं वस्य आ वृषभ प्रणेता ।

अग्ने तोकस्य नस्तने तनूनामप्रयुच्छन्दीद्यद्बोधि गोपो३म ।

---

(१) ऋ०२।१।१-२ "अवसाने मकारान्तं सर्वेष्वृग्गणेषु सप्लुतोऽनुवाक्येष्विति" (शां० श्रौ० १।१।२२) इति सूत्रात्सर्वत्रावसाने मकारान्तः प्रणवो भवति ।

कात्यायनानुक्रमितशाङ्खायनसूत्रानुसारिसोमहौत्रप्रयोगेऽपि सर्वत्र मकारान्त एव प्रणवः ।

"प्रथमोत्तमयोस्त्रिर्वचनमिति" ( शां०श्रौ०१।१।१८ ) परिभाषितत्वात्प्रथमोत्तमयो-स्त्रिर्वचनं सर्वत्र वेदितव्यम् ।

आध्वर्यवपद्धतिः ।

"ॐ अच्युतक्षिदसि दिवं दृꣳह" ( ५।१३ ) । उपरम् ।

## ( नाभेरुपरि संभारनिधानम् । )

अग्नेः पुरीषमिति निवपति गुग्गुलुसुगन्धितेजनवृष्णेस्तुकाश्चोपरिशीर्षण्या अमावेऽन्याः ।

"ॐ अग्नेः पुरीषमसि" ( ५।१३ ) ।

तेष्वग्निं निदधाति तूष्णीं उपरत उपयमनीरुपनिवपति ।

इत्यग्निप्रणयनम् ।

## ( हविर्धानप्रवर्तनं हविर्धानमानादि च । )

अथ हविर्द्धानप्रवर्तनं हविर्द्धानमानादि च ।

हविर्द्धाने चात्वाले प्रक्षाल्य उत्तरवेद्याः पुरस्तात्स्थापिते, तयोर्मध्येऽध्वर्युः प्रतिप्रस्थाता लघुशकटं गृहीत्वा, विहारं शालां च दक्षिणेनाऽध्वर्युः प्रतिप्रस्थाता चोत्तरेण विहारं शालां पश्चिमत आगत्य शकटयोर्मुखे सन्धाय आस्मानामभित अघर्त्य(वृत्य) तथैव प्रत्यावृत्य यथागतं शालापूर्वभागे वेदिमध्ये पृष्ठ्यामुभयतो छदिरन्तरे स्थापयतः । तत्र घर्षोयो दक्षिणं(१) तयोश्छदिरध्यस्यति भित्तिं वाऽभावे, अन्यत्रापि रराट्यां पुरस्तादासजत्यैषीकी(२) ए सर्वत उच्छ्रायीभ्यां परिधार्य

हौत्रपद्धतिः ।

त्वं दूतस्त्वमु नः परस्पास्त्वं वस्य आ वृषभ प्रणेता ।

अग्ने तोकस्य नस्तने तनूनामप्रयुच्छन्दीद्यद्बोधि गोपो३म्"

ततः प्रदक्षिणमावृत्य तथैव प्रत्येत्य सव्यावृत्पूर्वस्थाने स्थित्वा उत्सृज्यते ।

इत्यग्निप्रणयनम् ।

---

( १ ) अत्र मानवश्रौतसूत्रे विशेषः—"हविर्धानयोः प्रथमकृतान् ग्रन्थीन् विस्रंस्य प्रक्षाल्याभ्यज्याभिनद्धाभितः पृष्ठ्यामरत्निमात्रेऽवस्थापयन्ति । बहिर्वेदि चक्राण्यन्तर्वेद्युपस्तम्भयन्ती" ( २।२।२।१२-१३ ) ति ।

काठके—"स छदिष्कयोर्हविर्धानयोर्ग्रन्थीन् विवृत्य प्रक्षाल्याभ्यज्याभितः पृष्ठ्यामवस्थाप्येति ।

आपस्तम्बे च—"प्रक्षाल्य तयोः प्रथमग्रथितान् ग्रन्थीन् विस्रंस्य नवान् प्रज्ञातान् कृत्वाऽक्षेण प्राग्वंशमभितः पृष्ठ्यामव्यवनयन्परिश्रिते सच्छदिषी अवस्थापयती (११।६।१३)ति ।

( २ ) इषिकामयीमिति शाखान्तरात् । रराटी हविर्धानस्य पूर्वद्वारे उपरिष्टात्स्कटिकेति धूर्तस्वामिनः ।

आध्वर्यवपद्धतिः ।

छदिः(१) पश्चाच्च पुरस्ताच्च निदधाति ।

शालाद्वार्यस्य दक्षिणतस्तूष्णीं ब्रह्मास्ते ।

अध्वर्युर्गार्हपत्ये पूर्णाहुतिवदाज्यꣳ सꣳस्कृत्य चतुर्गृहीतं गृहीत्वा शालाद्वार्ये समित्पूर्वकं जुहोति युञ्जत इति ।

"ॐ युञ्जते मनऽउत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । वि होत्रा दधे वयुनाविदेकऽइन्मही देवस्य सवितुः परिष्टुतिः स्वाहा" (५।१४) ।

इदं सवित्रे न मम ।

स गार्हपत्योऽतः(२) ।

पुनः शालाद्वार्ये पूर्णाहुतिवदाज्यꣳसꣳस्कृत्य चतुर्गृहीत्वा पूर्वया द्वारा निष्क्रम्य अपरं दक्षिणे वर्त्मनि दक्षिणस्यानसो हिरण्यं निधायाऽभिजुहोतीदं विष्णुरिति समिद्वर्जं सशेषम् ।

दक्षिणस्य शकटस्य दक्षिणतस्तूष्णीं ब्रह्माऽऽस्ते ।

"ॐइदं विष्णुर्विचक्रमे त्रेधा नि दधे पदम् ।

समूढमस्य पाꣳसुरे स्वाहा" । (५।१५)

इदं विष्णवे० ।

अध्वर्युणा दक्षिणया द्वाराऽऽनीता (३)पत्नी पाणिभ्याꣳशेषं प्रति-

---

(१) छदिस्तुल्यं वा किलिञ्जं राव्या तेजनीत्यनर्थान्तरमिति पितृभूतिः ।

वाजपेयेऽत्र उच्छ्रायोऽविदारणेन कुद्दारं कुर्यात् (का० श्रौ०१४।१।११) । अत एव सुगद्रूपाणि प्रवेशयेत् (का० श्रौ० १४।१।२७) ।

(२) अस्याग्नेर्गार्हपत्यत्वमुदयनीयावतः (का० श्रौ०१०।९।११ वृ०) पूर्वमेव, उदयनीयामारभ्य तु आहवनीयत्वमेव भवति। नन्वेवं कौण्डपायिनामयनेऽ (का०श्रौ०२४।४।२४–२६) ग्निहोत्रदर्शपूर्णमासादौ हवि श्रपणमपि शालाद्वार्ये एव स्यात्। चोदकेन तत्रापि शालाद्वार्यस्य गार्हपत्यत्वात्। सत्यं चोदकादेवं, अग्निहोत्रादिनामधेयात्तु नैयमिकाग्निहोत्रवन्मुख्य एव गार्हपत्ये श्रपणं प्राप्तिं तच्च चोदक बलीय इत्युक्तम् । एतच्च ज्योतिष्टोमप्रकरणे पठितत्वात् ज्योतिष्टोमार्थं, प्रसङ्गादग्नीषोमीयेऽपि गार्हपत्यकार्यमगार्हपत्ये क्रियते तस्यापि ज्योतिष्टोमपरतन्त्रत्वात् । अतः स्वतन्त्रेषु निरूढादिष्वेवन्न भवति अत एवाग्नीषोमीयोपभोगेऽपि निरूढादिषु वेदिरपि सोमवन्न भवति। आपस्तम्बेन च (श्रौ० ७।७।३) पशुबन्धेऽप्येवमुक्तम् । 'एष पशुबन्धस्याहवनीयो यतः प्रणयति स गार्हपत्य" इति देवः ।

(३) "दक्षिणया द्वारा पत्नीं निष्क्रामयन्ती" (श० ब्रा० ३।५।३।१३) ति श्रुतत्वादानीत्युक्तम् । अतश्च बाहुं गृहीत्वा शालाया दक्षिणद्वारेण पत्नी निष्कासनीया "पत्नि निष्क्रमस्वे" त्यन्येषणया, वा उभयथापि शिष्टसंपत्तेः । तथा "सꣳस्तं पत्न्यै पाणा वानयति साऽनन्य सत्तापस्रुपानक्ति देवस्तुवाति" (श० ब्रा० ३।५।३।१३) ति श्रुत-

आध्वर्यवपद्धतिः।

गृह्याक्षधुरायमक्ति दक्षिणेन हस्तेनोत्तानेनेोभयत्रोदक्संस्थं पराग्देव-श्रुताविति।

"ॐ देवश्रुतौ देवेष्वा घोषतम्" (५।१७)।

दक्षिणं धुरमङ्क्त्वा सव्यहस्तेऽवस्थितमाज्यं दक्षिणहस्ते कृत्वोत्त-रामनक्ति पूर्ववत्।

"ॐ देवश्रुतौ देवेष्वा घोषतम्" (५।१७)।

युगपत्तद्वचनत्वात् भेदे मन्त्रावृत्तिः सान्निपातित्वात्। स्रुक्स्था-ल्यौ प्रतिगृह्य प्रतिप्रस्थातोत्तरस्येरावतीति पूर्ववत् चतुर्गृहीतं गृही-त्वोत्तरस्य दक्षिणे वर्त्मनि हिरण्यं निधाय जुहोति।

"ॐ इरावती धेनुमती हि भूतꣳ॰ सूयवसिनी मनवे दशस्या।

व्यस्कम्ना रोदसी विष्णवे ते दाधर्थ पृथिवीमभितो मयूखैः स्वाहा"(१) (५।१६)।

इदं विष्णवे॰।

प्रतिप्रस्थात्रा नीयमाना दक्षिणद्वारेण शालां प्रविश्य पत्नी चापरेणा ग्नीन्परीत्य पूर्वया द्वारा निष्क्रम्योत्तरस्यानक्ति पूर्ववत्। भेदे मन्त्रावृत्तिः।

अध्वर्युर्हविर्धानाभ्यां प्रवर्त्यमानाभ्यामनुवाचयति।

ॐ हविर्धानाभ्यां प्रवर्त्यमानाभ्यामनुब्रूहि।

हौत्रपद्धतिः।

## (हविर्धानप्रवर्तनम्।)

अथ हविर्धानप्रवर्तनम्। यहि होतरित्यामन्त्रितो होताऽऽचम्य दक्षि-णस्य हविर्धानस्योत्तरं वर्त्मोत्तरस्य च दक्षिणमन्तरेण तिष्ठन्।

ॐ हविर्धानाभ्यां प्रवर्त्यमानाभ्यामनुब्रूहीत्युक्ते—

"ॐ अपेतो जन्यं भयमन्यजन्यं च वृत्रहन्।

---

त्वात्। सन्तापमिति यस्मिन्प्रदेशे चक्रेणाक्षे घृष्यमाणः सन्तप्यते चक्रस्य धुरिकायाः सन्तापः। आपस्तम्बः—"द्विर्दक्षिणामक्षधुरां दक्षिणेन हस्तेनोत्तानेन प्राचीनं न चहस्त-मावर्तयती"ति (११।६।९-१)। अक्षधुरामक्षशल्यं प्राचीनं प्रागपवर्गमनक्ति न च निवर्तयति हस्तमिति धूर्तस्वामिनः।

(१) "उपविष्टहोमाः स्वाहाकारप्रदाना जुहोतय" (श्रौ॰ १।२।७) इति कात्या-यनपरिभाषया स्वाहाकारे प्राप्ते—संहितायां स्वाहाऽन्तत्वेन पठिते मन्त्रे तु स्वाहाकारं नाकुर्यात्।।तथा हि पुरश्चर्यार्णवे मन्त्रप्रकाशवचनम्—

"नमोऽन्ते न नमो दद्याद् द्विठान्ते द्विठमेव च।

पूजायामाहुतौ चैव सर्वत्रायं विधिः शिवे" इति॥

शिवे इति सम्बोधनम्। द्विठः स्वाहाकार इति साम्प्रदायिका इत्यपि तत्रोक्तम्।

आध्वर्यवपद्धतिः ।

होत्रा त्रिकायामुद्गृह्णेव(१) वर्तनमुभयोः ।

प्राचीप्रेतमिति वाचयति यजमानम् ।

"ॐ प्राची प्रेतमध्वरङ्कल्पयन्तीऽ ऊर्ध्वं यज्ञं नयतं मा जिह्वरतम्" (५।१७) । इति ब्रूहि ।

यजमानः—

"ॐ प्राची प्रेतमध्वरङ्कल्पयन्तीऽ ऊर्ध्वं यज्ञं नयतं मा जिह्वरतम्" (५।१७) ।

स्वङ्गोष्ठमिति खर्जति ।

"ॐ स्वङ्गोष्ठमा वदतन्देवी दुर्येऽ आयुर्मा निर्वादिष्टम्प्रजाम्मा निर्वादिष्टमि"ति ब्रूहि ।

यजमानः—

"ॐ स्वङ्गोष्ठमा वदतन्देवी दुर्येऽ आयुर्मा निर्वादिष्टं प्रजाम्मा निर्वादिष्टम्" (५।१७) ।

हौत्रपद्धतिः ।

अप चक्रा अवृत्सत(२)" ।

इति दक्षिणेन प्रपदेन प्रत्यञ्चं लो(ष्ठ)गमपास्य ततो पाणिपादौ प्रक्षाल्याचम्य ततस्तिष्ठ(३)न्ननूच्य ।

"प्रेतां यज्ञस्य शम्भुवा युवामिदा वृणीमहे ।

अग्निं च हव्यवाहनो३

म्प्रेतां यज्ञस्य शम्भुवा युवामिदा वृणीमहे ।

अग्निं च हव्यवाहनो३

म्प्रेतां यज्ञस्य शम्भुवा युवामिदा वृणीमहे(४) ।

अग्निं च हव्यवाहनो३म्(५) ।

द्यावा नः पृथिवी इमं सिध्रमद्य दिविस्पृशम् ।

यज्ञं देवेषु यच्छतो३ (६) ।

---

(१) आपस्तम्बः "उद्गृह्णन्तः प्रवर्तयन्ती" (११।६।११) ति । काठके च—"त्रिरनूक्तेऽनुद्गृह्णन्तो वर्तयन्ती"ति । मानवे "उद्गृण्हन्तोऽ नुमजन्ती"(श्रौ० २।२।१।१९) ति

(२) सोत्रमन्त्राऽयम् (शां० श्रौ० ५।१३।३।) ।

(३) "आसीनन्यायं वानूच्यन्" (शां० श्रौ० ११।१।१९) अस्य प्रतिषेधार्थं पुनस्तिष्ठद्वचनम् ।

(४) अत्र विरमेषावदध्वर्येवं न गच्छन्ति, गच्छत्स्वध्वर्य्वादिषु तिष्ठन्नेव शिष्टमर्धर्चमुक्त्वा दक्षिणस्य हविर्धानस्योत्तरचक्रप्रवाहिकासंलग्नोऽनुगच्छन् "द्यावा न पृथिवी" तयोरिदत्तवस्पयो" "यमे इव यतमाने" इत्येवास्तित्रः पठेत् ।

(५) ऋ० ३।४१।१९। (६) ऋ० ३।४१।२० ।

आध्वर्यवपद्धतिः।

(१) अत्र कालाहुतिः।

अध्वर्युः पश्चादुत्तरवेदेरिषु प्रक्रमेषु मात्रया वा नातिदूरे नातिसमीपे युगपत्स्थापिते नभ्यस्थे अभिमन्त्रयते अत्र रमेथामिति युगपत्।

"ॐ अत्र रमेथां वर्ष्मन्पृथिव्याः" (५।१७)।

द्वे अपि हविर्धाने उत्तरेण परिक्रम्य दक्षिणं हविर्धानमुपस्तभ्नाति विष्णोर्नुकमिति।

"ॐ विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजाꣳसि।

होतृपद्धतिः।

तयोरिद्घृतवत्पयो विप्रा रिहन्ति धीतिभिः।
गन्धर्वस्य ध्रुवे पदो३म्(२)।
यमे इव यतमाने यदैतं प्र वां भरन्मानुषा देवयन्तः"।
विरमेत्।

ततश्छदिष्याधीयमाने—

"आ सीदतं स्वमु लोकं विदाने स्वासस्थे भवतमिन्दवे नो३(३)म्।
अधि द्वयोरदधा उक्थ्यं वचो यतस्रुचा मिथुना या सपर्यतः"।
विरमेत्।

ततः परिश्रीयमाणयोः(४)।

"असंयत्तो व्रते ते क्षेति पुष्यति भद्रा शक्तिर्यजमानाय सुन्वतो३म्(५)
विश्वा रूपाणि प्रति मुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे"।
विरमेत्।

ततो नभ्यस्थयोः(६)।

"वि नाकमख्यत्सविता वरेण्योऽनु प्रयाणमुषसो वि राजतो३म्(७)
आ द्यामुपस्थमद्रुहा देवाः सीदन्तु यज्ञियाः।
इहाद्य सोमपीतये३म्"(८)।

---

(१) नैमित्तिकमिदम्। अतश्च वरुणायेति कालाहुतिरपि भवति। "यद्युत्सर्जेतामेतद्वाचयेत्स्वश्लोक्ष (श० ब्रा० ३।५।३।१८) मित्यादि श्रुतत्वात्। यदि तादृशेन प्रयत्नेन प्रवर्तमाने अप्युत्सर्जेतां तत एतद्वक्ष्यमाणं वाचयेदित्यर्थः।

(२) ऋ० १।२२।१४। (३) ऋ० १०।१३।२।

(४) रज्जुभिर्बध्यमानयोर्हविर्धानयोरित्यर्थः। (५) ऋ० १।१८१।२।

(६) नाभिर्वेत्स्मिन्फलके छिद्रमयं तत्स्थयोः चक्रमध्यफलकाधारे स्थापितयोरित्यर्थः। तादृशयोर्हविर्धानयोः सतोरा द्यामुपस्थमित्यनुब्रूयात्

(७) ऋ० ५।८१।२। (८) ऋ० २।४१।२१

आध्वर्यवपद्धतिः ।

यो ऽअस्कभायदुत्तरꣳसधस्थं विचक्रमाणस्त्रेधोरुगायः" (५।१८)।

हविर्द्धानमण्डपदेशाद्दक्षिणतः समन्त्रं ब्रह्मास्ते ।

## ( हविर्द्धाननिर्माणम् । )

अथ मानकरणम् ।

हविर्द्धानालयं दशहस्तं पूर्वपश्चिमद्वारं छदिस्त्रयं च, हविर्द्धानमण्डपाग्नेयकोणे स्थूणामुपनिहन्ति विष्णवे त्वेति ।

"ॐ विष्णवे त्वा उपनिहन्मि" ( ५।१८ ) ।

दिवो वेत्युत्तरꣳ हविर्द्धानमुपस्तभ्नाति प्रतिप्रस्थाता ।

"ॐ दिवो वा विष्ण उत वा पृथिव्या महो वा विष्ण उरोरन्तरिक्षात्।
उभा हि हस्ता वसुना पृणस्वा प्रयच्छ दक्षिणादोत सव्यात्"(५।१९)।

मण्डपस्योत्तरतो हविर्द्धानयोः पश्चिमेन गत्वा ईशानकोणे स्थूणां पूर्ववदध्वर्युर्निहन्ति ।

"ॐ विष्णवे त्वा उपनिहन्मि" ( ५।१९ ) ।

ततः पश्चात्कोणयोः क्रमेण तथैव तूष्णीम् । यद्वा, उभे वा दक्षिणतः । प्रथमं मन्त्रेण इतरतस्ततस्तूष्णीं चतस्रोऽपि प्रादक्षिण्येनोपनिहताः स्युः । यद्‌ वै मानुष इति श्रुतेः ( ३।५।३।२१ ) ।

होत्रपद्धतिः ।

कर्मविपर्यासे यथाकर्मेति(१) ।

"परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतः ।
वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयो३म् ।
परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतः ।
वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयो३म् ।
परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतः ।
वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयो३म्"(२) ।

इति परिधाय, यत्र तिष्ठन्प्रथमामन्ववोचत्तत्र स्थित्वोत्सृज्यते ।

इति हविर्द्धानम् ।

---

( १ ) अत्र केषाञ्चिद्‌ऋचां प्रथमं नम्यस्यकरणं ततो मध्यमस्य छदिष आरोपणं, ततो रज्जुभिर्बन्धनम् । तत्र कर्मविपर्यासे यथाक्रमं कुर्यात् ।

"आवामुपस्थ" ( ऋ० २।४१।२१ ) मिति पूर्वां "भद्रयो" ( ऋ० १।८३।३ ) रित्युत्तरा, ततो "विश्वा रूपाणी"ति ( ऋ० ५।८१।२ ) ततः "परि त्वा गिर्वणो" ( ऋ० १।१०।१२ ) इति परिधानीया ।     ( २ ) ऋ० १।१०।१२

आध्वर्यवपद्धतिः ।

प्रतद्विष्णुरिति वाचयति यजमानं मध्यमं छदिरालभ्य(१) ।

मध्यमं छदिरालभस्व ।

"ॐ प्र तद्विष्णुस्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः ।

यस्योरुषु त्रिषु विक्रमणेष्वधि क्षियन्ति भुवनानि विश्वा"(५।२०)।

इति ब्रूहि ।

यजमानः मध्यमं छदिरालभ्य—

"ॐ प्रतद्विष्णुस्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः ।

यस्योरुषु त्रिषु विक्रमणेष्वधि क्षियन्ति भुवनानि विश्वा"(५।२०)।

उत्तरे च द्वे वाचने इति कर्कः ।

विष्णोररराटमिति रराट्यामालभ्य वाचयति ।

रराट्यामालभस्व ।

"ॐ विष्णोरराटमसी"ति ब्रूहि ।

यजमानो रराट्यामालभ्य ।

"ॐ विष्णो रराटमसि" ( ५।२१ ) ।

आलम्भनस्य युगपत्कर्तुमशक्यत्वात् भेदेन प्रत्येकं रराट्योरुच्छ्रा-यायोश्च वाचनप्रैषालम्भनानि भवन्तीति कर्कः ।

अध्वर्युः विष्णोः स्नप्त्रे स्थ इत्युच्छ्राय्यावालभ्य वाचयति ।

उच्छ्राय्यावालभस्व ।

"ॐ विष्णोः स्नप्त्रे स्थ" इति ब्रूहि ।

यजमानः उच्छ्राय्यावालभ्य(२) ।

"ॐ विष्णोः स्नप्त्रे स्थः" ( ५।२१ ) ।

उदगग्राणि त्रीणि छदींष्यपि पश्चात्प्रभृतेः । अध्वर्युस्तूष्णीं करोति ।

द्वार्योः परिसीव्यति लस्पूजनिप्रतिहतया रज्वा विष्णोः स्यूर-सीति । विष्णोर्ध्रुवोऽसीति ग्रन्थिं करोति । उपक्रान्ते प्रमुञ्चति ।

तदित्थम् । पूर्वद्वारस्य दक्षिणद्वार्यायां दर्भमुष्टिं निधाय तत्र वरुण-सूच्या रज्जुमुपगूहति ।

---

( १ ) ननु च स्पृशतेः परो णिच् श्रूयते न स्पर्शयतेः । ततश्च स्वयमेवाध्वर्युः स्पृष्ट्वा वाचयेदित्यवगम्यते । न मन्त्रलिङ्गविरोधात् । मन्त्रो ह्यालब्धस्याभिधायकः तं च यजमानो ब्रवीति नाध्वर्युस्तु केवलं अनुवक्ते । अध्वर्युणाऽऽलब्धे यजमानो मन्त्रो न समर्थः स्यात् । तस्मात्स्पर्शयित्वा यजमानं वाचयतीत्ययमर्थः । एतेन सर्वे एवं जातीयका "अ-थैवमभिपद्य वाचयती"त्यादयो निर्देशा व्याख्याता इति हरिस्वामी ।

( २ ) अनेकयजमानके स्पर्शनमेकस्य वाचनं सर्वेषामिति सर्वत्र ज्ञेयम् ।

माध्यन्दिनपद्धतिः ।

"ॐ विष्णोः स्यूरसि" ( ५।२१ ) ।

ततस्तयैवरज्वा प्राग्दक्षिणेन सर्वास्थूणा अवशिष्टं द्वारान्तरयं च परिवीय पूर्वद्वारदक्षिणद्वार्यायां ग्रन्थिं कृत्वा तत्रैवोपकान्तेऽग्रं प्रतिमुञ्चति ।

"ॐ विष्णोर्ध्रुवोऽसि" ( ५।२१ ) ।

उत्तरपूर्वस्यां द्वार्यायां परिवीवणसमाप्तिरिति सम्प्रदायः ।

प्रागुदर्ठं०शर्ठ० हविर्द्धानं(१) निष्ठाप्य वैष्णवमसीत्यालभते ।

"ॐ वैष्णवमसि विष्णवे त्वा आलभे" ( ५।२१ )

मोजनभक्षणे चास्मिन्न(२)कुर्युः । अद्वारेण सदोहविर्द्धाने प्रेक्षमाणं ब्रूयात्मा प्रेक्षथा इति । पृष्ठ्यामुभयतो द्वार्यं ।

( इति हविर्द्धाननिर्माणम् । )

( उपरवसंस्कारः । )

अथोपरवसंस्कारः । तत्रोपकल्पनम् । अभ्रिः, दर्भमुष्टिः, यवाः, उदकम्, मृत्तिका, अधिषवणफलके, आनडुहं चर्म, सोमकण्डनार्थं प्रस्तरः, पञ्च ग्रावाणः, दक्षिणस्यानसोऽधः प्रउगं खनत्युपरवान् ।

तुर्ये प्राङ्मध्यरेखायां मध्यतश्चतुरस्रके ।

द्विप्रादेशमिते क्षेत्रे कोणेपूपरवान्विदुः ॥

दक्षिणतः समन्त्रं ब्रह्माऽऽस्ते ।

अध्वर्युः प्राङ्मुख उपविश्य अभ्र्यादिकरोत्यवटवदा परिलेखनाचतुरः । देवस्य त्वेत्यभ्रिमादाय ।

"ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । आददे नार्यसि" ( ५।२२ ) ।

अवटं परिलिखतीदमहमिति ।

"ॐ इदमहर्ठ० रक्षसां ग्रीवा अपिकृन्तामि" ( ५।२२ )

उदकोपस्पर्शः । अवणया व्याघारणवत् ।

अत्र पक्षे प्रथमं दक्षिणपूर्वस्य तत उत्तरापरस्य ततो दक्षिणापरस्य

---

( १ ) अत्र कठसूत्रम् । द्विपुरुषाया पक्षम्या हविर्धानं विदध्यादनः सम्मितं वैव स्याद्रूदि प्रादेशघा पश्चाद्धयोपरवान्विदध्याद्द्विप्रादेशान्तरेषु षष्ठयाप्रादेशं द्वैधं संमुञ्याधंप्रादेशेन पार्ष्णिरेत्सत्या पश्चाद्धयोत्तरवेदिं विदध्याच्चतुः शम्या पश्चाद्धयाग्नीध्रीयं धिष्ण्याग्निः षट्या पश्चाद्धया धिष्ण्यान्विदध्याद्दशादश शम्यापश्चाद्धया सदो विदध्यादिति ।

( २ ) व्यतिक्रमे निन्दार्थवादश्च "स यो ह तत्रानन्तो याद्या मस्येद्गा मूर्धास्य विपतेदिति ।

शाख्यंवपद्धति ।

तत उत्तरपूर्वस्येति(१) क्रमः ।

उत्तरापरं वा प्रथमम् । अत्र पक्षे उत्तरापरदक्षिणपूर्वदक्षिणापरोत्तरपूर्वाणामिति क्रमः(२) ।

सम्यग्वा । अत्र पक्षे दक्षिणपूर्वदक्षिणापरोत्तरापरोत्तरपूर्वाणामिति क्रमः(३) ।

सर्वेषोत्तरपूर्वं त्वन्त्यम् ।

प्रादेशमात्रोऽन्तदन्तरान् ।

बृहन्नसीति यथापरिलिखितं खनति । भेदे मन्त्रावृत्तिः ।

"ॐ बृहन्नसि बृहद्रवा बृहतीमिन्द्राय वाचं वद ।

रक्षोहणं वलगहनं वैष्णवीम्" (५।२२—२३) ।

इदमहमित्युत्किरति यथाखातं प्रतिमन्त्रम् ।

"ॐ इदमहं तं वलगमुत्किरामि यं मे निष्ट्यो यममात्यो निचखान" (५।२३) ।

इति प्रथमम् ।

---

(१) प्रथमपक्षे—

ई० ४ पूर्वा १ आ०

उत्तरा दक्षिणा

२ ३

वा० पश्चिमा नै०

(२) अत्र पक्षे—

ई० ४ प्राची— २ आ०

उदीची अवाची

१ ३

वा० प्रतीची— नै०

(३) सम्यग्वेति पक्षे—

ई० ४ पू० १ आ०

उ० द०

३ २

वा० प० नै०

आध्वर्यवपद्धतिः ।

"ॐ इदमहं तं वलगमुत्किरामि यम्मे समानो यमसमानो निचखान" (५।२३)।

इति द्वितीयम् ।

"ॐ इदमहं तं वलगमुत्किरामि यम्मे सबन्धुर्यमसबन्धुर्निचखान" (५।२३)।

इति तृतीयम् ।

"ॐ इदमहं तं वलगमुत्किरामि यम्मे सजातो यमसजातो निचखान" (५।२३)।

इति चतुर्थम् ।

उत्कृत्याङ्किरामीति पश्चात्सर्वेभ्यः प्रादक्षिण्येन किरति पूर्वस्यामुत्तरस्यां वा दिशि ।

"ॐ उत्कृत्याङ्किरामि" (५।२३)।

ततस्तूर्ष्णीं खननोत्किरणाभ्यां बाहुमात्रानधः सम्पाद्य अवटया सम्भिन्द्यात्(१), अशक्तौ सम्यक् ।

अत्र पक्षे पूर्वयोः परस्परमसम्भेदनमिति सम्प्रदायः ।

स्वराडसीत्यभिमर्शयति यजमानं यथाखातं प्रतिमन्त्रम् । उपरवा नवमृशत्र ।

यजमानः खातक्रमेणावमृशति(२) चतुर्भिर्मन्त्रैः ।

"ॐ स्वराडसि सपत्नहा ।

ॐ सत्रराडस्यभिमातिहा ।

ॐ जनराडसि रक्षोहा ।

ॐ सर्वराडस्यमित्रहा" (५।२४)।

अवटयोरन्तर्हस्तौ प्रक्षिप्य परस्परमध्वर्युयजमानौ सम्मृशेते पूर्वदक्षिणेऽध्वर्युरपरोत्तरे यजमानः ।

अध्वर्युः पृच्छति यजमान किमत्र इति ।

भद्रमि(३)त्याह यजमानः ।

---

(१) अत्राहापस्तम्ब—"अधस्तात्संतृण्णा भवन्ति उपरिष्टादसम्भिन्ना" इति (११।११।६) काठके च "बाहुमात्रान् खनन्त्यसम्भिन्दन्तोऽधस्तात्संभिन्दन्ति ।

(२) अनेकयजमानके चैक एवावमृशति ।

(३) अत्रैव मीमांसा—

भद्रं तन्नौ सहेत्येवत्कस्मिन् स्वानिनि युज्यते ।
द्वित्वश्रुत्या द्वयोरत्राध्वर्युयजमानयो ।
(जै० न्या० मा० ३।८।२२ )

आध्वर्यवपद्धतिः।

तन्नो सहेत्यध्वर्युरुपांशु(१)।

पुनर्दक्षिणापरेऽध्वर्युः पूर्वोत्तरे यजमानः।

यजमानः पृच्छति, अध्वर्यो किमत्र इति।

अध्वर्युणा भद्रम्, इति प्रोक्ते तन्म इति यजमानो ब्रूयात्।

ॐ तन्मे अस्तु।

अध्वर्युः (२)प्रोक्षत्येनान् रक्षोहण इत्याग्नेयादिक्रमेण। भेदे मन्त्रावृत्तिः सान्निपातित्वात् (३)।

"ॐ रक्षोहणो वो वलगहनः प्रोक्षामि वैष्णवान्" (५।२२)।

अवनयनावस्तरणे चावटयद्रक्षोहणोरक्षोहण इति। प्रातक्रमेण प्रत्येकमुदकासेकः।

"ॐ रक्षोहणो वो वलगहनोऽवनयामि वैष्णवान्" (५।२५)।

तथैव दर्भैस्स्तरणम्।

"ॐ रक्षोहणो(४) वो वलगहनोऽवस्तृणामि वैष्णवान्" (५।२५)।

तन्नुपरि कुशान् कृत्वा आधिषवणे फलके द्व्यङ्गुलान्तरे धैंकङ्कते(५) प्रक्षालिते प्राची अरत्निमात्रे सन्तृण्णेत्रोपदधाति,

पर्यूहति च रक्षोहणौ रक्षोहणाविति।

तत्राग्निष्टोमे असन्तृण्णे (६)एव, अतो भेदादुभयत्र मन्त्रः। उक्थ्यादौ तु सन्तृण्णत्वेन मन्त्रः। सन्तृण्णे कीलकैः परस्परं संधिते इत्यर्थः।

---

(१) प्रश्नप्रतिवचनसम्बन्धादुच्चैः प्राप्ते वचनादुपांशुत्वमुच्यते। अथवा वागन्वपक्षेऽप्युपांशुत्वप्राप्त्यर्थमुपांशित्युक्तम्।

अयं च चोदितार्थाभिधायी, अनेकयजमानके "तन्नः सहे"त्येवमूह्यते।

(२) प्रोक्षणमुक्तं परिशिष्टे—

"उत्तानेन तु हस्तेन प्रोक्षणं समुदाहृतम्।

तिरश्चावोक्षणं प्रोक्तं नीचेनाभ्युक्षणं स्मृतम्" इति।

(३) नन्वनडुधाजने (का० श्रौ० ७।९।११) अक्षोपाञ्जने (का० श्रौ० ८।३।१८) चायं न्यायो वर्णितः। सत्यं—तथापि प्रत्युदाहरणमुच्यमानमादर्शसम्माजेनवन्निर्मलं भवतीति।

(४) अत्रेयं मीमांसा—

सन्त्रेणोपरवे मन्त्रो भिद्यते वा, बहूक्तितः।

सन्त्रं, बहूक्तिः पूजार्था भिन्नोऽसौ खेयभेदतः।

(जै० न्या० मा० ११।४।२६)।

(५) श्येनयागे शवनम्ये अधिषवणफलके भवतः (का० श्रौ० २२।३।१२)।

(६) अत्रार्थं विचारः—

सन्तृण्णे दीर्घसोमे तत्प्रकृतौ विकृतावुत।

आध्वर्यवपद्धतिः ।

"ॐ रक्षोहणौ वां वलगहनाऽउपदधामि वैष्णवी" (५।२५)।

खातवालमृद्भिः पर्यूहणम् ।

"ॐ रक्षोहणौ वां वलगहनौ पर्यूहामि वैष्णवी" (५।२५)।

तयोरानडुहं (१)चर्माधिषवणं परिकृत्त्य(२) सर्वरोहितं निदधाति वैष्णवमसीति।

"ॐ वैष्णवमसि" (५।२५)।

तस्मिन् ग्राव्णः पञ्च वैष्णवा स्थेति। भेदे मन्त्रावृत्तिः।

"ॐ वैष्णवा स्थ" (५।२५)।

खरं पञ्चचत्वारिंशदङ्गुलावकाशे उपरवाणां पुरस्तात् करोति, उद्धतावोक्षने सिकतोपकीर्णं चतुरस्रं चतुरङ्गुलोच्छ्रमथेपरिमाणम्। अत्र संस्कारत्रयमेव।

इति हविर्द्धानसम्बन्धिकरणम्।

## ( औदुम्बरीमानम् । )

अथ सदःसम्बन्धि औदुम्बरीकरणम्। अन्तःपात्यात् षट् प्रक्रमान् प्राङ् यात्वा दक्षिणा सप्तमं महान्तं त्रिपदप्रक्रमं मीत्वा, तत्रौदुम्बरीं(३)

दीर्घस्य सोम इत्युक्ते प्रकृतावस्तु वर्द्धनम्।
सामानाधिकरण्यस्य वाधोतो बलवत्त्वतः।
दैर्घ्यंयुक्तोत्कर्षसंख्यादावुत्कर्षोऽन्यत्र बाधनात्।
(जै० न्या० मा०३।३।३९-४०)।

(१) प्राग्ग्रीवमुत्तरलोमेति परिभाषायामुक्तमेव, "चर्माण्युत्तरलोमानि प्राग्ग्रीवाणी"(का० श्रौ० १।१०।४) ति।

(२) सर्वरोहितमिति वचनाद्गोचर्म। गोविषयो हि रक्तो वर्णो रोहित इत्युच्यते मन्त्रवर्णाच्च। "अंशुं दुहन्तो अध्यासते गवी" (ऋ० सं० १०।९४।९)ति।

(३) औदुम्बरी निखननप्रदेशादूर्ध्वं यजमानमात्री कार्या। निखननार्हप्रदेशस्तु ततोऽधिकः।

तदुक्तमापस्तम्बेन—"ऊर्ध्वं निखाताद्यजमानसम्मिते" (११।१०।१) ति।युक्तं चैतत्। यदि चापरेण सह यजमानप्रमाणा क्रियते तदा सदसो नीचतया आरूवे शुव"सुस्थिता ह्युपसर्पन्तो" स्येतद्विरुध्यते। औदुम्बरीति सदसो मध्यस्थूणा विवक्षिता भवति। "उदरमेवास्य सदः" इति "तन्मध्य औदुम्बरीं मिनोती"(श०ब्रा०३।६।१।२) ति च प्रकृत्य "अथ य एष मध्यमः शङ्कुर्भवति येदेऽवधनार्धं" (श०ब्रा०१।६।१।३) इत्यादि श्रुतत्वात्।

मानवे—उदग्वंशं सदोऽन्तर्मायु मिनोति। औदुम्बरी वर्षिष्ठा स्थूणानां हसी यस्योऽप्या अस्या इत्यिष्ठाः (२।२।३।२२—२३) इति।

आध्वर्यवपद्धतिः।

मिनोति यजमानमाग्नीध्रम्। तत्पुरस्ताद्यूपवच्छेते।

दक्षिणतः समन्त्रं ब्रह्मास्ते।

(१)अभ्र्यादि करोत्याच(८)स्तरणात्।

देवस्य त्वेत्यभ्रिमादाय।

"ॐदेवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम्। आददे नार्यसि" (५।२६)।

अवटं परिलिखतीदमहमिति।

"ॐइदमहꣳ रक्षसो ग्रीवा अपि कृन्तामि" (५।२६)।

उदकोपस्पर्शः। तूष्णीमभ्र्या खात्वा प्राचः पांꣳसूनुद्वपति। पुरःस्थितायामौदुम्बर्यां कुशमुष्टिस्थापनम्। यवोऽसीत्यप्सु यवानोप्य।

"ॐ यवोऽसि यवयास्मद्द्वेषो यवयारातीः" (५।२६)।

तेन प्रोक्षत्यग्रमध्यमूलानि दिवे त्वेति प्रतिमन्त्रम्। प्रोक्षामीति सर्वत्र साकाङ्क्षत्वात्।

"ॐदिवे त्वा प्रोक्षामि"।

अग्रम्।

"ॐअन्तरिक्षाय त्वा प्रोक्षामि"।

मध्यम्।

"ॐपृथिव्यै त्वा प्रोक्षामि"।

मूलम्।

अवटे शेषमासिञ्चति शुन्धन्तामिति।

"ॐशुन्धन्ताल्लोकाः पितृषदनाः" (५।२६)।

उदकोपस्पर्शः। अवटोपरि बर्हींꣳषि प्राञ्च्युदञ्चि च प्रास्यति षदनमसीति।

"ॐपितृषदनमसि" (५।२६)।

उदकोपस्पर्शः।

---

(१) अभ्र्यादानादेः सर्वस्यात्र पुनः श्रवणादभ्र्यादानाद्यवटमध्ये प्रागुदग्बर्हिःप्रासनपर्यन्तं सर्व कर्म कुर्यात्। तथा हि श्रुतिः—

"तदवटं परिलिखति" (श० ब्रा० ३।६।१।३) ति प्रकृत्य "सोऽभ्रिमादत्ते देवस्य त्वेति(४)। अथावटं परिलिखतीदमहमिति(५)। अथ खनति प्राञ्चमि(६)ति। अथ यवमत्यः प्रोक्षण्यो भवन्ति(७)। स यवानावपति यवोऽसीति (११)। स प्रोक्षति (१२)। अथ याः प्रोक्षण्यः परिशिष्यन्ते (१३)। अथ बर्हींꣳषि (१४)"। इत्यादि।

औदुम्बरीमुद्दिवमित्युच्छ्रयति(१) सहोद्गात्रा ।
"ॐउद्दिवꣳ स्तभानान्तरिक्षं पृण दृꣳहस्व पृथिव्याम्" (५।२७)।
द्युतान इति मिनोति(२) पञ्चमांशादधिकाम् ।
"ॐद्युतानस्त्वा मारुतो मिनोतु मित्रावरुणौ ध्रुवेण धर्मणा"(५।२७)।
ब्रह्मवनित्वेति पांꣳशुभिः पर्यूहति ।
"ॐब्रह्मवनि त्वा क्षत्रवनि रायस्पोषवनि पर्यूहामि" (५।२७)।
ब्रह्मदृꣳहेति मैत्रावरुणदण्डेन समन्तं त्रिः पर्यूहति । सकृन्मन्त्रेण द्विस्तूष्णीम् ।
"ॐब्रह्म दृꣳह क्षत्रं दृꣳहायुर्दृꣳह प्रजान्दृꣳह" (५।२७)।
समं( मां ) भूमि(मि)कृत्वाद्भिरुपलिप्य उपसिच्य यजमानं ध्रुवासीति वाचयत्यौदुम्बरीमालभ्य ।
औदुम्बरीमालभस्व ।
"ॐध्रुवासि ध्रुवोऽयं यजमानोऽस्मिन्नायतने प्रजया भूयादि"ति ब्रूहि ।
यजमानः—औदुम्बरीमालभ्य ।
"ॐध्रुवासि ध्रुवोऽयं यजमानोऽस्मिन्नायतने प्रजया भूयात्"(५।२८)।

औद्गात्रपद्धतिः ।

अथोद्गाता औदुम्बरीमुच्छ्रयिष्यन् देवयजनं पूर्वेण गत्वा(३)आग्नीध्रेण तीर्थेन प्रविशेत् यद्युद्गातुर्गृहं देवयजनस्य दक्षिणस्यां दिशि स्यात् । यदि देवयजनस्य प्राच्यामुदीच्यां प्रतीच्यां वा उद्गातुर्गृहं स्यात्तदा देवयजनमुत्तरेण गत्वा आग्नीध्रेण तीर्थेन प्रविशेत् ।

सदसः पूर्वद्वारे खातावन्तरेण प्रविश्य प्रागग्रामौदुम्बरीं पूर्वेण गत्वा दक्षिणत उदङ्मुखस्तिष्ठति ।

अध्वर्युणा सहोच्छ्रयेद्दक्षिणोत्तराभ्यां पाणिभ्यामौदुम्बरीं गृहीत्वा ।
'द्युतानस्त्वा मारुत उच्छ्रयतूद्दिवꣳ स्तभानान्तरिक्षं पृण दृꣳह पृथिवीमि'ति
औदुम्बरीं खाते प्रक्षिपेत् ।
'अयेण्य सदने सादयाम्ययतश्छायायाꣳ समुद्रस्य हृदय' इति निधाय जपेत् ।"

---

(१) "प्राचीनकर्णाꣳ सहोद्गात्रोच्छ्रये" (११।१।१३) दित्यापस्तम्बः।

(२) "प्राक्कर्णीमवदधाती" (२।२।३।१६) ति मानवसूत्रे विशेषः।

(३) अन्तरेण चात्वालोत्करौ सञ्चरः सर्वप्रामाद्देर्वे तदाम्नातं तीर्थम् (द्रा० श्रौ०२।१।१)।

प्रजया भूयादिति पशुभिरिति वा संसृज्य ब्रूयात् । प्रजया पशुभिरिति यावत् ।

अध्वर्युः पूर्णाहुतवदाज्यꣳसꣳस्कृत्य औदुम्बरीकर्णे हिरण्यं निधाय तत्र (१)स्रुवेण विशाखे जुहोति घृतेन द्यावापृथिवी इति । (२) भूमिप्राप्ते स्वाहा करोति सर्वत्र मन्त्रवत्तु (३)जुहोत्युपदेशादनाम्नातप्रतिषेधाच्च ।

औद्गात्रपद्धतिः ।

'नमः समुद्राय नमः समुद्रस्य चक्षसे मा मा यूनर्वाहासीदर्गस्यूर्जोदा ऊर्जम्मेधेह्यूर्जं मेधेधेह्यन्नं मे धेह्यन्नम्मे धेहीऽति यावदध्वर्युरैन्द्रमसीति छदिभिरवच्छादयति तावदौदुम्बरीं न विसृजेत् ।

अध्वर्युणा होमे कृते तस्यैव प्रकारेण ( उद्गाता ) विशाखयोर्मध्ये स्रुवेण जुहुयात् ।

'घृतेन द्यावापृथिवी आप्रीणाथाꣳ स्वाहे'ति पूर्वामाहुतिं यथा भूमिमाज्यं प्राप्नोति तथा जुहुयात् ।

द्यावापृथिवीभ्यामिदं न मम ।

प्रजातये स्वाहेत्युत्तराम ।

प्रजापतय इदं न मम ।

विशाखस्याधस्तादौदुम्बरीं हस्तद्वयेन परिगृह्य जपेत् ।

'दिवि देवां दृꣳह मयि प्रजामि'ति ।

मध्ये परिगृह्य जपेत् ।

'अन्तरिक्षे वयाꣳसि दृꣳह मयि पशूनि'ति ।

---

( १ ) स्रुवेणेति जुह्वा निवृत्यर्थम् । अतश्चात्र स्रुवस्यैव सम्मार्गः । "अथ स्रुवेणोपहत्याज्यं विटपमभिजुहोती" ( श०ब्रा०३।६।१।२० ) ति श्रुतेः । विटं निविष्टं उपरिस्थापितं वल्कादि पाति रक्षति अधःपतनाद्वारयतीति विटपं विशाखं तदभिजुहोतीत्यर्थं इति हरिस्वामी ।

मानवे विशेषः—"अन्तरा कर्णौ हिरण्यं निधाय घृतेन द्यावापृथिवी आपृणेत्यभिजुहोति । आमूलादभिस्रावयती" ( २।२।३।२०–२१ ) ति च ।

आपस्तम्बः—"तस्या विशाखे हिरण्यं निधाय घृतेन द्यावापृथिवी आपृणेथामिति स्रुवेण जुहुदन्त्यमौदुम्बरीमन्ववस्रावयत्येषा सदसः स्थूणानां वर्षिष्ठे"(११।१०।४–६)ति ।

( २ ) भूमिप्राप्ते स्वाहा करोतीति शाखान्तरात् ।

( ३ ) वषट्कारेण वै स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते । तत्र वषट्कारस्य यजतौ नियतत्वात्परिशेषात्स्वाहाकारस्य जुहोतौ निवेशः । नियतो हि वषट्कारो यजतौ "ता वा एताः पञ्च व्याहृतयो भवन्त्योश्रावयेत्यादेः ( श०ब्रा०१।५।२।१६ ) याज्याया अधिवषट् करोतीति श्रुतेश्च ।

आध्वर्यवपद्धतिः ।

"ॐ घृतेन द्यावापृथिवी पूर्येथाꣳस्वाहा" (५।२८)।

इदं द्यावापृथिवीभ्याम् ।

इत्यौदुम्बरीमानम् ।

## ( सदोनिर्माणम् । )

अथ सदोमानम्(१)। (२)नाभिदघ्नꣳसदः । मत्या वा । उदग्वꣳशम् । अष्टादशारत्न्येकविꣳशतिश्चतुर्विꣳशतिर्वा दीर्घ नव तिर्यक् दैर्घ्यस्य अर्द्धायामो वा ।

औदुम्बरीं मध्ये पृष्ठ्यामेके ।

इन्द्रस्य छदिरिति दक्षिणा त्रिवर्गस्य मध्यमं छदिरारोप्य ।

"ॐ इन्द्रस्य छदिरसि विश्वजनस्य च्छाया" (५।२८) ।

औद्गात्रपद्धतिः ।

मूले परिगृह्य जपेत् ।

'पृथिव्यामघ्योपधीꣳह मयि सजातामि'ति ।

छदिषा छद्यमानकाले जपेत् ।

'दिव्यं छद्माꣳसि सन्तनिनाम विश्वजनस्य छाया नमस्तेऽस्तु मा माहिꣳसीः' ।

---

(१) नवके लक्षणं कुर्याद्दोषि कुर्यात्त्रिषु त्रिषु ।
 इवतो नवकः पाद्य सद्सोमानमुच्यते ॥

(२) नाभिप्रमाणं यस्य तन्नाभिदघ्नं—नाभिमात्रम् । "प्रमाणे द्वयसज्दघ्नञ्मात्रच" (पा०५।२।३७) इति प्रमाणे दघ्नच् प्रत्ययः । नाभिप्रमाणं सदः प्रान्तेषूच्चं भवति दानान्तराद् । मध्ये तूच्चमेव ; औदुम्बर्या मध्यस्थूणाया यजमानमात्रोत्वोपदेशात् ।

तथा चाह पितृभूति —सदसो यन्मध्य उच्चैस्त्वं तदौदुम्बरीप्रमाणमेव, ।इष्टार्थत्वादौदुम्बर्युच्छ्रयणस्येति । अन्यथा छदिषो छादमर्पति यदुद्गाताऽऽर्मने इति विरुध्येत अत्रेयं मीमांसा—

वृष्टिकामः सदो नीचैरिति कामोऽस्ति वा न वा ।
विधेः स्पर्शवदत्रास्ति नास्त्येतत्तस्यतो न हि ॥
(जै० न्या० मा० १०।२।२४)

वृष्टिकामो सदो नीचैर्मिनुयादिति कामना ।
अध्वर्योः स्वामिनो वाऽऽद्यो वाक्यान्मातुस्तदोच्यते ॥
परस्मैपदतोऽध्वर्युव्यापारस्य परार्थता ।
प्रतीताऽतो वाक्यवाधे वपोवत्स्वामिनोऽस्तु तत् ॥
(जै० न्या०मा० ३।८।१-१०)

आध्वर्यवपद्धतिः।

औदुम्बरीं विसृज्य प्रवेशमार्गेण निष्क्रामेत्।

अपरपूर्वे च छदिषी मन्त्रेण त्रिवर्गां चोत्तरतः पूर्ववत् क्रमेण सम्मौ एवं च नवकृत्वो मन्त्रशङ्कुदिषां तावत्यात्।

पूर्वदक्षिणादिक्रमेण षड्भिः कटैः परिव्येति परिवार्य।

"ॐ परि त्वा गिर्वणो गिर इमा भवन्तु विश्वतः।

वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयः"। (५।२९)।

प्रतिकटं मन्त्रावृत्तिः।

पश्चिमपूर्वोभयद्वारम्।

हविर्द्धानवत्परिषीवणग्रन्थ्यभिमर्शनान्यैन्द्रैः। परिषीवणम्।

"ॐ इन्द्रस्य स्यूरसि" (५।३०)।

ग्रन्थिकरणम्।

"ॐ इन्द्रस्य ध्रुवोऽसि" (५।३०)।

अभिमर्शनम्।

"ॐ ऐन्द्रमसि"।

इति सदोमानादिकरणान्तम्।

## ( धिष्ण्यनिवपनम्। )

अथाग्नीध्रमण्डपधिष्ण्यनिर्मितिः।

हविर्द्धानापरान्तमुत्तरेणाग्नीध्रमग्न्यागारद्वारमन्तर्वेद्यर्धं भूयः सर्वं वा पूर्वदक्षिणोभयद्वारं निष्पाद्य वैश्वदेवमसीत्यालभते।

"ॐ वैश्वदेवमसि" (५।३०)।

ततो धिष्ण्यान्निवपति सर्वत्र प्राङ्मुखः। पञ्च भूसंस्कारान्कृत्वा पुनरुद्धतावोक्षिते पुरीषं निवपति यजमाने स्पर्शेनान्वारब्ध उदङ्ङुपविश्य विभूरसीति प्रतिमन्त्रम्।

तत्रा(१)ग्नीध्रीयं पूर्वं होतृधिष्ण्यवर्जमुदङ्मुखः। सिकताश्चोपरि सर्वत्र निवपति। मन्त्रे रौद्रेणेति सर्वत्रानुषजति (२)।

आग्नीध्रीये दक्षिणतः समन्त्रं ब्रह्मास्ते। ततश्च सदसि स्वस्थाने।

"ॐ विभूरसि प्रवाहणो रौद्रेणानीकेन पाहि(३) माऽग्ने पिपृहि

---

( १ ) सदो मध्यमरेखायां तत्रोदीर्चो निशामय।
तस्याः प्राञ्चं पदं त्यक्त्वा ततो धिष्ण्यानि कारयेत्॥

( २ ) स च मन्त्रः शाखान्तरादेकवचनान्तः पठितः।

( ३ ) अयं च शाखान्तरीय एकवचनान्तः। स्वशाखीयस्य बहुवचनान्तस्य ( ५।३४ ) तु धिष्ण्योपस्थाने विनियोग आम्नातः—"अग्नयः सगरानिति धिष्ण्या ( का० श्रौ० ९।८।२३ ) निगति।

आध्वर्यवपद्धतिः ।

माऽग्ने गोपाय मा नमस्ते ऽअस्तु मा मा हिꣳसीः" ( ५।३१ ) ।

(१)सिकताप्रकिरणमन्ते प्राङ्मुखेन पट् सदसि धिष्ण्याः । तत्र किंचिद्विशेषः ।

प्रत्यङ्मुखो द्वारमपरेण होतुः। पुरीष(सिकता)निवापः पूर्ववत्सर्वम्।

"ॐ वह्निरसि हव्यवाहनो रौद्रेणानीकेन पाहि माऽग्ने पिपृहि माऽग्ने गोपाय मा नमस्ते ऽअस्तु मा मा हिꣳसी" ( ५।३१ ) ।

तत आग्नीध्रीयमुत्तरेणोत्तरवेदिं पूर्वेण हविर्धानं दक्षिणेनागत्य पूर्वद्वारेण सदः प्रविश्य दक्षिणपूर्वेणौदुम्बरीं मैत्रावरुणस्य धिष्ण्यम् ।

"ॐ श्वात्रोऽसि प्रचेता रौद्रेणानीकेन पाहि माऽग्ने पिपृहि माऽग्ने गोपाय मा नमस्ते ऽअस्तु मा मा हिꣳसीः" ( ५।३१ ) ।

ततो यथागतं सदसि प्रत्यागत्य होतृधिष्ण्यमुत्तरेण चतुरः समान्तरान् ब्राह्मणाच्छꣳसि-पोतृ-नेष्ट्रच्छावाकानां पूर्ववत्सर्वम् ।

"ॐ तुथोऽसि विश्ववेदा रौद्रेणानीकेन पाहि माऽग्ने पिपृहि माऽग्ने गोपाय मा नमस्ते ऽअस्तु मा माहिꣳ सीः" ( ५।३१ ) (२) ।

"ॐ उशिगसि कवी रौद्रेणानीकेन पाहि माऽग्ने पिपृहि माऽग्ने गोपाय मा नमस्तेऽ अस्तु मा मा हिꣳसीः" ( ५।३२ ) (३) ।

"ॐ अङ्घारिरसि बम्भारी रौद्रेणानीकेन पाहि माऽग्ने पिपृहि माऽग्ने गोपाय मा नमस्तेऽ अस्तु मा माहिꣳसीः" (५।३२) । (४) ।

"ॐ अवस्युरसि दुवस्वान् रौद्रेणानीकेन पाहि माऽग्ने पिपृहि माऽग्ने गोपाय मा नमस्तेऽ अस्तु मा माहिꣳसीः" ( ५।३२ ) । (५) ।

तत आग्नीध्रीयादुत्तरेण पूर्वेणोत्तरवेदिं च गत्वा आग्नीध्राद्दक्षिणꣳसम्प्रति वेद्यन्ते दक्षिणामुखो मार्जालीयं निवपति ।

"ॐ शुन्ध्यूरसि मार्जालीयो रौद्रेणानीकेन पाहि माऽग्ने पिपृहि माऽग्ने गोपाय मा नमस्ते ऽअस्तु मा माहिꣳसीः" ( ५।३२ ) ।

यथेनमेत्य सदोद्वारं पूर्वेण तत्तन्मुखस्तिष्ठन्ननुदिशत्याहवनीय—बहिष्पवमानदेश-चात्वाल-शामित्रौदुम्बरी-ब्रह्मासन-शालाद्वार्य-प्राजहितोत्करान्-सम्राडसीति प्रतिमन्त्रं क्रमेण प्राङ्मुखः सम्राट् (इति) ।

आहवनीयम्—

(१) अत्र भूसंस्काराः पुरीषनिवापः सिकतोपकिरणं चेत्येते पदार्थाः सर्वधिष्ण्येष्वेकस्यामेव दिश्युपविश्य कर्तव्याः । आग्नीध्रीये उदङ्मुखेन द्वार्यीये प्रत्यङ्मुखेन मार्जालीये दक्षिणामुखेन शेषेपूदङ्मुखेनेति ।

(२) इति ब्राह्मणाच्छंसिनः । (३) इति ब्राह्मणाच्छंसिन उत्तरतः पोतुः ।

(४) इति तत उत्तरं नेष्टुः । (५) इति नेष्टुरुत्तरमच्छावाकस्य ।

आध्वर्यवपद्धतिः ।

"ॐ सम्राडसि कृशानू रौद्रेणानीकेन पाहि माऽग्ने पिपृहि माऽग्ने गोपाय मा नमस्ते ऽस्तु मा माहिꣳसीः" ( ५।३२ ) ।

(१)बहिष्पवमानदेशम्—

"ॐ परिषद्योऽसि पवमानो रौद्रेणानीकेन पाहि माऽग्ने पिपृहि माऽग्ने गोपाय मा नमस्तेऽ अस्तु मा माहिꣳसीः" ( ५।३२ ) ।

चात्वालम्—

"ॐ नभोऽसि प्रतक्वा रौद्रेणानीकेन पाहि माऽग्ने पिपृहि माऽग्ने गोपाय मा नमस्ते ऽस्तु मा माहिꣳसीः" ( ५।३२ ) ।

शामित्रम्—

"ॐ मृष्टोऽसि हव्यसूदनो रौद्रेणानीकेन पाहि माऽग्ने पिपृहि माऽग्ने गोपाय मा नमस्तेऽ अस्तु मा माहिꣳसीः" ( ५।३२ ) ।

औदुम्बरीम्—

"ॐ ऋतधामासि स्वर्ज्योती रौद्रेणानीकेन पाहि माऽग्ने पिपृहि माऽग्ने गोपाय मा नमस्ते ऽस्तु मा माहिꣳसीः" ( ५।३२ ) ।

ब्रह्मासनम्—

तच्च प्रशास्तृधिष्ण्यनैर्ऋत्यामिति बहवः ।

दक्षिणतो महावेदेर्बहिरिति रामः ।

शालामुखीयाद्दक्षिणत इति महादेवयाज्ञिकाः ।

"ॐ समुद्रोऽसि विश्वव्यचा रौद्रेणानीकेन पाहि माऽग्ने पिपृहि माऽग्ने गोपाय मा नमस्तेऽ अस्तु मा माहिꣳसीः" ( ५।३३ ) ।

शालाद्वार्यम्—

"ॐ अजोऽस्येकपाद्रौद्रेणानीकेन पाहि माऽग्ने पिपृहि माऽग्ने गोपाय मा नमस्ते ऽस्तु मा माहिꣳसीः" ( ५।३३ ) ।

(२)प्राजहितम्—

"ॐ अहिरसि बुध्न्यो रौद्रेणानीकेन पाहि माऽग्ने पिपृहि माऽग्ने गोपाय मा नमस्ते ऽस्तु मा माहिꣳसीः" (५।३३ ) ।

उत्करम्—

"ॐ समूह्योऽसि विश्ववेदा ऊनातिरिक्तस्य प्रतिष्ठा रौद्रेणानीकेन पाहि माऽग्ने पिपृहि माऽग्ने गोपाय मा नमस्ते ऽस्तु मा माहिꣳसीः"

इति सदोमार्जालीयधिष्ण्यानुदेशमन्त्राः ।

इति विहाराकृतिः ।

---

( १ ) चात्वालस्य दक्षिणतोऽन्तर्वेदि बहिष्पवमानदेशः ।

( २ ) प्राजहितमिति आद्यस्य गार्हपत्यस्य यौगिकं नाम ।

आश्वलायनपद्धतिः।

## ( अग्नीषोमीयः पशुः । )

अथाग्नीषोमीयः (१)पशुः ।

उत्करे द्विर्महावेदेर्दक्षिणतो बर्हिश्च द्विरिति चतुरासनम् ।

उत्करे वाचस्पतिप्रैषः ।

वेदेर्बर्हिः समन्त्रं ब्रह्मोपवेशनम् ।

यजमान वाचं यच्छेति प्रैषः ।

तस्य वाग्यमनम् ।

आहवनीयशालाद्वार्यदक्षिणाग्नीनां परिस्तरणम् ।

शालाद्वार्यस्य पश्चादुत्तरतो वा पात्रासादनम् ।

अग्निहोत्रहवणी-चत्रं—एते आसन्ने एव । शम्या, दृषदुपलम्, पवित्रे पूर्वे एव, आज्यस्थाली, कुशमुष्टिः, अभ्रिः, महान्त्यन्यानि सन्नहनावच्छादनानि ।

(२)( एते—योक्त्रम्,

स्रुवः, जुहूपभृत्, आतिथ्यायां स्तृतानि सन्नहनावच्छादनानि । ) परिधयो विधृत्यौ च, आज्यम्, होतृषदनम्, वपाश्रपण्यौ, शूलम्, उखासिः, वसाहोमहवनी, प्राशित्रहरणे, इडापात्री, अन्तर्धानकटश्च ।

उपकल्पनीयानि—इध्मा, महावेदेस्तरणार्थं शकटबर्हिः,

(३)( आतिथ्यसन्नहनेनातिथ्यप्रस्तरोपसन्नद्धमातिथ्यबर्हिः )

दधिपृषदाज्यपात्रद्वयम्, एकं संयोजनार्थमपरं ग्रहणार्थम्, प्लक्षशाखा

---

(१) अत्रैता मीमांसा द्रष्टव्याः ।

अग्नीषोमीयकः कोऽपि छाग एवोत चोदिते ।
अविशेषेण कोऽपि स्याच्छागो मन्त्रो विशेषणात् ।
( जै०न्या०मा० ६।८।११ )।

पशुरालभ्य इत्यत्र एकैक्ये यजनाङ्गता ।
नास्त्यस्ति वाऽऽद्यः स्वपदे द्रुत्या पशुङ्गतागतेः ।
आदौ स्वप्रत्ययोपात्त भासप्रवरकारके ।
योगः क्लौ एको चेति क्से ऽव्याङ्गत्वोचिता ॥
( जै० न्या० मा० ४।१।१२-१३ )

न पुंल्लिङ्गे विवक्षा वा विवक्षाऽनुपयोगतः ।
आद्योऽनुष्ठित्यपेक्षत्वात्सङ्ख्यावत्तद्विवक्ष्यताम् ।
( जै० न्या० मा० ४।१।१४ )।

(२) रेखान्तर्गतः पाठः "ख" पुस्तके नास्ति ।

(३) रेखान्तर्गतः पाठः "क" पुस्तके नास्ति ।

आध्वर्यवपद्धतिः।

यूपः,

प्रथमशकलं चषालं स्वरुश्चेतियूपचतुष्टयम्।

यवाः, आपः, अवटकुशाः, अवटार्थमाज्यम्, यूपाञ्जनीयञ्चेति। दीक्षितदण्डो मैत्रावरुणाद्गृहीत्वा, त्रिगुणरशना।

पशौ उपाकरणतृणम्।

शकलं कुशतरुणावरणिद्वयं चेति मन्थनचतुष्टयम्।

द्विगुणरशना, पशुः, शमिता।

पशौ परिवशव्याज्यम्।

पान्नेजन्य आपः, हिरण्यशकलानि षट्।

द्विपशुपक्षे—

शूलोखासिधपाश्रपणीद्विगुणरशनापशूनां द्वयं द्वयम्। हिरण्यशकलानि (१)द्वादशेति विशेषः।

वाग्यमनमध्वर्योः।

पूर्वेद्युः संस्कृताभिर्मदन्तीप्रोक्षणीभिः पात्रप्रोक्षणम्।

"ॐ दैव्याय कर्मणे शुन्धध्वं देवयज्यायै यद्वोऽशुद्धाः पराजघ्नुरिदं वस्तच्छुन्धामि" (१।१३)।

अन्तःपात्ये प्रोक्षणीनिधानम्।

वाग्विसर्ग उभयोः।

कुक्कुटाहननम्।

"ॐ कुक्कुटोऽसि मधुजिह्व इषमूर्जमावद त्वया वयꣳ संघातꣳ संघातं जेष्म" (१।१६)।

अध्वर्योराज्यनिर्वापः। वेदबन्धः। महावेदिखननम्।

(२) उत्तरपरिग्रहः सप्रैषः।

---

(१) हिरण्यशकलप्रमाणं परिशिष्टे—

हिरण्यशकलार्थे तु हिरण्यं यस्य नोच्यते।
कृष्णलेनव तद्व्याख्या यज्ञे सिद्ध्यति याज्ञिकी॥
कृष्णलं त्रियवं मानं ताम्रायसमतः परम्।
सुवर्णार्धं च माषाणां सुवर्णाश्च त्रिसप्ततिः।
( श्लो०सु०२७-२८। )

(२) अत्र सूत्रम्—परिस्तरण-पात्रसंसादन-प्रोक्षणाज्यनिर्वपणानि कृत्वोत्तरपरिग्रहादिकरोति। ( का०श्रौ० ८।६।२९ ) ति। अस्यार्थः—आहवनीयशालाद्वार्यदक्षिणाग्नीनां परिस्तरणं पाशुकानां पात्राणामासादनं तेषामेव प्रोक्षणं पाशुकस्यैवाज्यस्य निर्वपणम्। अत्रानुक्तमप्याज्यनिर्वापात्पूर्वं कुक्कुटाहननं, आज्यनिर्वापानन्तरं च वेदकरणं कर्तव्यम्, ततो महावेदेरुत्तरपरिग्रहादि करोति। महावेदेः सम्मार्जनान्तं प्राकृत-

साध्वर्यवपद्धतिः ।

"ॐ ब्रह्मन्नुत्तरं परिग्रहं परिग्रहीष्यामि" ।

"ॐ बृहस्पते परिगृहाण वेदिं॰ सुगावो देवाः सदनानि सन्त्वस्यां बर्हिः प्रथताᳬ साध्वन्तर्हिᳬस्ना पृथिवी देवी देव्यस्तु [उपांशु-] देवता-वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु । सप्तऋषीणाᳬसुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेहि ।

ॐ परिगृहाणेति ब्रह्मानुज्ञातः—

"ॐ सुदमाचासि शिवाचासि ।

ॐ स्योनाचासि सुषदाचासि ।

ॐ ऊर्जस्वतीचासि पयस्वती च" ( १।२७ ) ।

अन्तःपात्यसहितमनुमार्जनम् ।

"ॐ पुराक्रूरस्य विसृपो विरप्शिन्नुदादाय पृथिवीं जीवदानुम् ।

यामैरयंश्चन्द्रमसि स्वधाभिस्तामु धीरासो ऽअनुदिश्य यजन्ते" ( १।२८ ) ।

बर्हिरन्तं प्रेष्यति ।

प्रोक्षणीरासादयेध्मं बर्हिरुपसादय । (१)( आप्रणीताः प्रोक्षण्यः । प्रादणीपात्रे यदि स्युस्तर्हि ताः पात्रान्तरे कृत्वा तत्र पूर्वदिनसᳬस्कृत-प्रणीताप्रोक्षणीनां निधानम् । )

अन्तःपात्ये प्रोक्षणीनां सादनम् । न स्फ्योदक्प्रहारः। पाण्योरवनेज-नम् । अन्तःपात्ये इध्मशकटबर्हिषोरासादनम् । अनुज्ञातोऽप्राणीतेनेध्मं

---

मधुना खननस्यावसरस्तन्निषेधाभावात्खननादि करोतीत्यर्थः । उत्तरपरिग्रहस्यादौ यत्ख-ननं तदादि करोतीत्यर्थः ।

ननु कथमेतज् ज्ञायते परिस्तरणपात्रासादनादि सर्वं पाशुकमिति ।

उच्यते, धिष्ण्यनिर्वपनानन्तरमग्नीषोमीयस्य पशोः प्रक्रमस्य श्रुतत्वात् "सोऽपराह्णे वेदिं॰ स्तीर्त्वे" ( श०ब्रा०३।६।३।४ ) स्त्रुप्रकम्याज्यमधिश्रयति स्रुचः सम्मार्ष्टीति । प्रागाज्याधिश्रयणात्पूर्वाह्ण एव कृतमिति गम्यते महावेदेरपि ( कम ) खननात्प्राक् पूर्वेद्युरेव कृतं इदानीं खननाद्येव कर्तव्यम् ।

अन्त्रश्रुतत्वाद्वेदिसंस्काराणामपूर्वत्वाच्च सोमे दार्शपौर्णमासिका वेदिसंस्करा इह नैव प्राप्नुवन्तीति । सत्यमपूर्वः सोमः। तथापि तु वेदिशब्दस्य तु संस्कारवचनत्वाद्वेदिशब्दे-नाक्षिप्ता इति कृत्वा क्रियन्ते । ननु चादकेन प्रापिता इति कथं पुनः संस्कारवचनो वेदि शब्द इति । लोके कस्मिंश्चिद्द्रव्ये वेदिशब्दस्याप्रसिद्धत्वादेव संस्कारसम्बन्धस्य श्रुत-त्वाद्पूर्ववत्संस्कारवचन इति गम्यते । तेन "सोपराह्ण" इत्यपराह्णे स्तरणस्य विधानात् स्तरणात्प्राग्वेदिसंस्कारास्ते पूर्वाह्णे एव कर्तव्या इत्यभिप्रायेणोक्तमुत्तरपरिग्रहादि-करोतीति ।

( १ ) रेखान्तर्गतः पाठः ख पुस्तके नास्ति ।

आध्वर्यवपद्धतिः ।

प्रोक्षति, सप्रणीतेन वेदेः । अनुयातः सप्रणीतेन शकटबर्हिः ।

पयस्यापक्षे बर्हिरसि स्रुग्भ्यस्त्वेति ।

वशापक्षे बर्हिरसि त्वा जुष्टमित्येव ।

साग्नौ वशा नित्या ।

. प्रणीतानां निःशेषो मूलावसेकः ।

अप्रणीतानां तु सशेषः ।

ताः सपवित्रा अग्निहोत्रहवण्यां कृत्वाऽन्तःपात्ये पश्चार्धे निदधाति । स्रुगुप इध्मं निधायाग्नीषोमीयाय अपराह्णे शकटबर्हिर्विस्रंसय सन्नहनं विस्रंस्य दाक्षिणस्यां महावेदिश्रोण्यां निधाय पृहदन्यैरवच्छायापन्नं स्तृणं निरस्येत् ।

ऊर्णम्रदसमित्युपपत्या मन्त्रावृत्या वेदिं स्तृणाति शकटबर्हिषोत्तरवेदिखरोपरवधिष्ण्यवर्जम् ।

ब्रह्मा स्तीर्णायां यथेतमेत्यास्ते दक्षिणतः शालाद्वार्यस्य ।

सप्रवर्ग्ये प्रवर्ग्योत्सादनपयःशेषमित्थं द्वारापिधानपूर्वं व्रतप्रदानम् । अप्रवर्ग्ये केवलं दैवीन्धियमित्यादि ।

अर्धव्रते प्रचे(१) ।

---

(१) अर्द्धव्रते प्रचे प्रविश्य प्रणयनीयाधानम् ( का० श्रौ० ८।६।३० ) । वेदिस्तरणानन्तरं पत्नीयजमानाभ्यामर्धव्रते प्रचे सति प्रविश्य पत्नीशालां पत्नीशालाद्वारेणैव प्रणयनीयस्येध्मस्याधानं कर्तव्यम् । "सोऽपराह्णे वेदिं स्तीर्त्वेत्यादि (श०ब्रा०३।६।३।४) श्रुतेः अपराह्णे स्तीर्त्वेति ब्रुवन्स्तरणात्प्राचः पदार्थान् पूर्वस्मादेव कृतान्दर्शयति । अर्द्धव्रतं प्रदायेति ब्रुवन् पूर्वाह्णेऽप्यर्धव्रतमेव प्रचं दर्शयति । सम्प्रपद्यन्ते समुदिताः प्रपद्यन्तेऽग्नीषोमप्रणयनाय, तदर्थमेवेध्माधानादि कुर्वन्तीति ।

एतच्चेध्माधानमाग्नीषोमीयप्रणयनार्थम् । अयमपीध्मोऽपरिमितकाष्ठकस्त्रिवृन्नद्धः स्यात् । अपरिमितं प्रणयनीयं त्रिवृत् ( का० श्रौ० सू० १।३।११ ) मित्युक्तत्वात् ।

प्रविश्येति प्रवेशनेन निष्क्रमणं लक्ष्यते तच्च शाखाच्छेदनार्थम् । यतोऽत्रो आम्नायते परिवाप्यार्थे दोहन ( का० श्रौ० ८।१।२४ ) मिति । अत्र च सान्नाय्यधर्मप्रवृत्त्या शाखाछेदनवत्सापाकरणादिकमपराह्णे प्रकृतिवत्प्राप्नोति तस्य चावसरो न ज्ञायते तेन प्रवेशनेन लक्षितस्य निष्क्रमणस्याज्ञातप्रयोजनस्यैतत्प्रयोजनं कल्प्यते यच्छाखाछेदनार्थमेतन्निष्क्रमणमिति । तेनात्र शाखाछेदः प्रगुणितकरणं, तत्र सप्रवर्ग्ये चतुर्णां दोहानां वत्सापाकरणम् । तत्र प्रथमतृतीयचतुर्थवत्सापाकरणे इन्द्राय साम्नतिवते भागमिति गोरुपस्पर्शनमन्त्रे विशेषः । द्वितीये त्विन्द्राय भागमिति दधिघर्मस्य । अप्रवर्ग्ये तु त्रय एव दोहाः तत्र दधिघर्मो न भवति । ततः शाखापरिवासन्मुपवेषकरणशाखोद्गूहनं चेति एतावत्कृत्वा शालां प्रविश्य प्रणयनीयाधानमिति ।

मानवश्रौतसूत्रे च स्तरणानन्तरं अर्द्धव्रते प्रदायोत्तरत आहवनीयस्येध्माबर्हिरुप-

आध्वर्यवपद्धतिः।

## ( पलाशशाखाछेदनादिदोहधर्माः। )

निष्क्रम्य (१) पर्णशाखां छिनत्ति शामिलीं वेपेत्वेत्यूर्जेत्वेति वा, छिन द्मीति वाभयोः साकाङ्क्षत्वात्।

---

सादयती (२।२।४।१३) ति। काठके च-वत्सापाकरणस्य कालान्तरमुक्तम् 'वत्सानपाकृत्य प्रवर्ग्यंवति पात्राण्युद्वास्याग्निकर्रुणाग्नि प्रणीयेत्'ति। उपसत्समासानन्तरं प्राक् प्रवर्ग्योत्सादनादित्यर्थः। मानवे च "उत्तमायामुपसदि पौर्वाह्णिकीं कृत्वा शाखामच्छेत्स्यर्धमते प्रदाय सद्यः कुर्यादापराह्णिको (२।१।२।११) मिति। आपस्तम्बे चोत्तरपरिग्रहानन्तरमुक्तम् "उत्तरं परिग्रहं परिगृह्णात्यत्र प्रतिप्रस्थाता शाखामाहृत्य मन्नावरुण्यायाः पयस्यायाः वत्सानपाकरोति प्रोक्ष्य बर्हिस्त्रिर्वेदिं प्रोक्षति नाप्रोक्षितामभिचरन्त्यथैनां बर्हिषा बहुलं प्राचीनं स्तीर्त्वे (११।५।११) ति।

प्रतिप्रस्थातुः सवनीयनिर्वापविधानान्तस्यैव शाखाहरणं वत्सापाकरणं च युक्तम्। एवं कात्यायनेनाग्नीदैन्द्रमेकादशकपालं निर्वपती (श्रौ० ९।१।१५) त्यादिनाग्नीध्रस्य पुरोडाशधानाकरम्भदधिपयस्यारूपसवनीयकरणविधानात्तत्करणरूपं शाखाछेदन—वत्सापाकरण—दोहादिकं तेनैव कर्तव्यम्। सवनीयानामलङ्करणान्तस्याङ्गकलापस्य तत्कर्तृकत्व विधानात्।

सूत्रान्तरेषु शाखाछेदनादेः कालान्तरे दृष्टत्वात् भाष्यकार (पद्धतिकारै) स्यं कारः किं मूलं दृष्ट्वा कल्पित इति न ज्ञायते न च प्रविश्येत्यस्यान्यथानुपपत्त्या कल्पयितुं शक्यते अस्यान्यथैवोपपत्तेः "नादीक्षितो व्रतयन्तं पश्यती"ति निषेधाद् व्रतकरणान्तरं प्रविश्येत्यस्य सार्थकत्वात् तेन प्रविश्येत्यनेनैव ज्ञायते नादीक्षितो व्रतयन्तं पश्यतो'वि न च शाखाछेदनाद्यध्वर्युकर्तृकं तस्याग्नीत्कर्तृकत्वात् येन प्रविश्यप्रणयनीयाधानं मित्यनेन शाखाछेदनार्थं निष्क्रान्तस्य प्रवेशेन न समानकर्तृकमिध्माधानं विधीयते। न चेदमेककर्तृकं प्रवेशनं येनैककर्तृकं शाखाछेदनार्थं निष्क्रमगमनेन लक्ष्यते श्रुतौ "अर्धमसं प्रदाय संप्रपन्त' इति बहुवचनदर्शनात्। तेन एतत्प्रवेशनं बहुकर्तृकं नैकस्य निष्क्रमणं ज्ञापयति प्रवेशनमग्नीषोमप्रणयनार्थं युक्तमेव तत्र बहूनामुपयोगात् अतः प्रवेशनेन शाखाछेदनार्थंनिष्क्रमणं लक्ष्यत इति यत्किंचिदेव। तेन प्रागुक्तसूत्रान्तरोक्तकालेषु शाखाछेदनादि कर्तव्यमिति युक्तं स्वशाखायां कालस्यानुक्तत्वात्। तेन प्रातः प्रथमोपसदोऽनन्तरं वा उपसत्समासानन्तरं वा उत्तरपरिग्रहानन्तरं वा बर्हिः प्रोक्षणात्प्रागाग्नीध्रेण शाखाछेदनादिकं वत्सापाकरणान्तं कर्तव्यमिति देवः।

(१) अत्र पर्णशाखा "बहुलपलाशामशुष्काग्रां प्रागुदीचीमन्यतमां वे" (का० श्रौ० ४।२।४) ति सूत्रोक्ता ग्राह्या। तन्मावे—

प्रागुदीच्यादिका शाखा बहुपर्णादियोगिनी।
नास्ति चेत्तत्र पर्णादिगुणान् हित्वा दिगादरः।

(त्रि० भं० २।६६) इति।

अत्र मीमांसा—

प्राचीमाहरतीत्यत्र दिक् शाखा वाऽस्तु दिक्श्रुतेः।
आहार्यत्वं दिशो नास्ति शाखा तेनोपलक्ष्यते॥

(जै० न्या० मा० ४।२।३)।

आध्वर्यवपद्धतिः।

"ॐइषे त्वा छिनद्मि(१)" ( १।१ )। सन्नमयामीति घोच्चरे।

"ॐ ऊर्जे त्वा सन्नमयामि"। ( १।१ )

मातृभिर्वत्सानसंसृज्य वत्सर्ठ० शाखयोपस्पृशति वायव इति षट्कृत्वः।

"ॐवायवस्थ" ( १।१ )

देवो व इति मातृणामेकां व्याकृत्य।

"ॐदेवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण ऽआप्यायध्वमघ्न्या इन्द्राय सरस्वातपते भागम्प्रजावतीरनमीवाऽअयक्ष्मा मा वस्तेनऽईशत माऽघशर्ठ०सो ध्रुवाऽअस्मिन गोपतौ स्यात बह्वीः" ( १।१ )।

ततोऽन्यासां पशूनां तूर्णी पृथक्करणम्। इत्येकस्यापाकरणम्। एवमेव(२ त्रयाणामपाकरणम्।

तत्र सप्तवर्ग्ये सोमे द्वितीयोपाकरणे इन्द्राय भागमिति विशेषः। एवं चतुर्णां षड्वर्गाणां क्रमेण वायवस्थेत्यादिमन्त्रावृत्याऽपाकरणम्।

अग्रवर्ग्ये इन्द्राय सरस्वतिवत इत्येव त्रयाणामेवोपाकरणं न चतुर्णाम्।

( उपवेशकरणादि। )

अग्रतः प्रादेशमितां शाखां(३) परिवास्य मूलादुपवेषं करोत्यरत्निमात्रम्।

---

(१) अत्रेयं मीमांसा द्रष्टव्या—

इषे त्वादिर्मन्त्र एको लिङ्गो वैकः क्रियापदे।
असत्यर्थास्मारकत्वादेकादृष्टस्य कल्पनात्।
छेदने मार्जने चैतौ विनियुक्तौ क्रियापदे।
अध्याहृते स्मारकत्वान्मन्त्रभेदोऽर्थभेदतः। ( जै०न्या०मा०२।१।३२-३३ )।

(२) अत्र त्रिकाण्डमण्डने विशेषः—

गवां सान्नाय्यदोग्ध्रीणां पडादीनामसंभवे।
द्विर्दुह्यन्तेऽत्र गास्तिस्त्र एकां पटकृत्व एव वा। ।१६३ )। इति।

(३) अत्र मीमांसा—

शाखां छित्वोपवेषं च मूले कुर्वीत शाखया
नुदेद्वत्सान्कपालानि स्थापयेदुपवेषतः।
द्वयं प्रयोजकं छित्तेर्वत्सापाकृतिरेव वा।
आद्योऽग्रमूलयोरत्र विभज्य विनियोगतः
उपवेषं करोतीति साकाङ्क्षोऽन्यार्थमूलतः।
पूयतेऽतोऽनुनिष्पादी स तस्मादुच्यतेऽन्तिः

आध्वर्यवपद्धतिः।

ॐ येपेऽस्युपवेषो ध्रियतो ग्रीवा उपवेषिद्धि स्वेशाँ अग्ने सुभग धारयेह्।

अग्राः कर्मण्या अनपायिनो यथाऽसन्निति।

वसोः पवित्रमिति पवित्रमस्यां बध्नाति कुशौ त्रिवृता।

"ॐ वसोः पवित्रमसि" (१।२)।

यजमानस्य पशून्पाहीत्यन्यगारस्यान्यतरस्य पुरस्ताच्छालामुपगूहति।

"ॐ यजमानस्य पशून्पाहि" (१।१)।

## ( अग्नीषोमप्रणयनम् )

अथाग्नीषोमप्रणयनम्।

ब्रह्मा स्वासनादुत्थाय पूर्वेणोत्तरवेदिमाग्नीध्रीयर्द०सदश्चोत्तरेण पूर्वेण शालाद्वार्यमागत्य तद्दक्षिणतस्तूष्णीमुपविशति।

तदुत्तरतो यजमानश्च।

अध्वर्युः प्रविश्य प्रणयनीयाधानर्द० शालाद्वार्ये।

इषे त्वेत्याज्यमधिश्रयति(१)शालाद्वार्ये।

अग्नीदिति देवः।

अध्वर्युरिति कर्कः।

"ॐइषे त्वा" (१।१२) अधिश्रयामि। पर्यग्निकरणम्।

"ॐअन्तरितर्द०रक्षोऽन्तरिता अरातय" ( का० श्रौ०२।५।२२ )।

उदकोपस्पर्शः।

औद्गात्रपद्धतिः।

अग्नीषोमप्रणयनकाले प्रस्तोता अनुव्रजन्नग्निर्मूर्द्धेत्यग्नेर्व्रतं त्रिर्गायेत्। तदनन्तरमेव अनुव्रजन्सन्ते पयांऽसि इति सोमं त्रिर्गायेत्।

सोमऋषिः त्रिष्टुप्छन्दः सोमोदेवता।

सोमं पूर्वं नयन्ति चेत्सोमव्रतं प्रथमं गायेत्पश्चादग्नेर्व्रतम्।

हौत्रपद्धतिः।

## ( अथाग्नीषोमप्रणयनम्। )

मितेषु यज्ञागारेषु अग्नीषोमौ प्रणयन्ति। तत्प्रभृत्यानूबन्ध्यायाः संस्थानादन्तरेण चात्वालोत्करौ तीर्थम्। तेन प्रपद्योत्तरेणाग्नीध्रीयं धिष्ण्यं सदश्च गत्वोत्तरेणाध्वर्यू यज्ञपात्राणि च पूर्वया द्वारा शालां

(१) अग्नेर्ग्रहणम्। आज्याधिश्रयणस्रुक्संमार्जनोद्वासनानेक्षणानि कृत्वा (का० श्रौ० ८।३।२१) इति।

आध्वर्यवपद्धतिः ।

अन्तःपात्ये प्रोक्षणीप्रैषासादने—

"ॐप्रोक्षणीरासादय, बर्हिरुपसादय, स्रुचौ सम्मृड्ढि, पत्नीᳪसन्नह्य आज्येनोदेहि" इति प्रैषः ।

पक्षे—पत्नी ( शब्दाभावः ) सन्नहनाभावः ।

स्फ्योदक्प्रहारः ।

न पाण्योरवनेजनं कृतत्वात् ।

अन्तःपात्ये स्फ्यातिश्यर्वाह्वः प्रस्तरपरिधिविधृतीनामासादनम् ।

वेदाग्रनिष्पत्तिः ।

स्रुवसम्मार्गः, तद्द्वरोः, जुह्वाः, तूष्णीं वसाहोमहवन्याः, उपभृतः, प्राशित्रहरणे, इडापात्रां च सम्मृज्य सम्मार्जनानां यत्नेन रक्षणम् ।

पक्षे पत्नीसन्नहनम् ।

आज्योद्वासनम् ।

"ॐऊर्जे त्वा" ( २।३० ) उद्वासयामि ।

पत्न्याज्यावेक्षणम् ।

"ॐअदब्धेन त्वा चक्षुषाऽवपश्यामि ।

अग्नेर्जिह्वासि सुहूर्देवेभ्यो धाम्नेधाम्नेमे भव यजुषे यजुषे"(२।३०) ।

आज्यमन्तःपात्ये करोत्यपरं प्रोक्षणीभ्यः । शालाद्वार्यमपरेणास्ते(१) यजमान उपस्थे सोमं कृत्वा ।

अध्वर्युः शालाद्वार्यमपरेण सोमक्रयणीपदं परिकिरति सर्वम् ।

चतुर्द्धके आहवनीयस्यापयमनीश्वाग्नीध्रीयस्याहोपांशने च ।

आज्यप्रोक्षणीरन्तः(२)पात्यदेश उत्पूय सवितुस्त्वेति सवितुर्व इति ।

"ॐसवितुस्त्वा प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः"(१।३१) । "ॐसवितुर्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः" (१।३१ ) ।

आज्यमवेक्षते तेजोऽसीति यजमानो वा ।

ईक्षणान्ते नानाऽज्यकरणम् ।

आज्ये दधिप्रक्षेपः । विपरीतं वा ।

---

(१) अनेकयजमानके एक एवोपविशेत । "उपस्थे सोमं कृत्वे" ति क्त्वाप्रत्यय आनन्तर्यमात्रे । पदार्थानां भिन्नकर्तृकत्वात प्रणयनीयाधानानन्तरमाज्याधिश्रयणा- ( श० ब्रा०३।६।३।१४ ) देरेव श्रुतत्वात्

(२) उत्पवनस्यान्तःपात्यदेशनियमः शाखान्तरात् ।

आध्वर्यवपद्धतिः ।

स्रुवेणाज्यग्रहणं चतुर्गृहीतं धामनामेति सकृन्मन्त्रः । उपभृति चतुर्गृहीतम् ।

ततः पृषदाज्यं (आज्यं) दधिमिश्रं पञ्चगृहीतं ज्योतिरसीति सामिदन्तेन पृषदाज्यपात्रे सकृन्मन्त्रेण चतुस्तूष्णीं न ध्रुवा ।

"ॐ ज्योतिरसि विश्वरूपं विश्वेषां देवानाᳬसमित्" ।

ऋत्विजो धारयन्त्याज्यानि । अपिव्रताश्चान्वारभन्ते(१) यजमानं, वाससाच्छाद्य(२)त्येनान् । चरस्तु नाद्रियेत(३) ।

( वैसर्जनहोमः । )

अध्वर्युः शालाद्वार्ये पूर्णाहुति(४)वदाज्यᳬ सᳬस्कृत्य प्रदीप्तामध्मं त्वᳬसोमेति (५)प्रचरण्याभिजुहोति शालाद्वार्ये सकृद्गृहीतᳬ समिद्वर्जम् ।

पालाशी स्रुक् प्रचरणीति देवः ।

अग्निहोत्रहवणीति कर्कः ।

'ॐ त्वᳬ सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्यः उरु यन्तासि वरूथᳬस्वाहा"(५।३५) ।

इदᳬ सोमाय० ।

पुनस्तथैव जुपाणो अप्तुरितिद्वितीयाम् ।

---

( १ ) अनेकयजमानके सर्वेषां यथास्वमपिव्रतान्वारम्भः । अपिव्रतास्ते उच्यन्ते येषां येषां यजमानेन सह अपित्वमस्ति । दायत्वेनाविभक्ता इति पितृभूतिः । अपिव्रता गोत्रजा इति कर्कः । अपीति संसर्गे । व्रतमिति कर्म नाम । संसृष्टं साधारणं कर्म येषां ते अपिव्रता अविभक्तदायादास्ते ह्येकेनापि कृष्यादिकर्मकृतं सर्वे उपजीवन्तीति हरिस्वामिनः । व्रतं भोजनं यजमानेन सह प्राप्तभोजनः स्यात् बन्धुवर्गः स्यादिति माधवः ।

( २ ) वस्त्रेणाच्छादनं ध्यानान्तरात् । अनेकयजमानके सर्वेषां छादनम् । "प्राग्दशेन वाससाऽमात्यं यजमानं च प्रच्छादयन्ति पुमांसो यजमानमन्वारभन्ते स्त्रियः पत्नीमिति (२।२।४।२३)मानवश्रौतसूत्रे विशेषः ।

( ३ ) अतश्चापचारे प्रायश्चित्ताभावः ।

( ४ ) पूर्णाहुतिविधानम्—"निरूप्याज्यं गार्हपत्येऽधिश्रित्य स्रुक्स्रुवं च सम्मृज्योद्वास्योत्पूयावेक्ष्य गृहीत्वाऽन्वारब्धपूर्वᳬ सर्वत्र स्वाहेति" ( का०श्रौ०४।१०।१ ) ।

( ५ ) अस्या आसादनादि सहैव कर्तव्यम् । प्रचरणी वसाहोमहवनीतः पृथग् भवति यतोऽनूबन्ध्यायां गर्भसद्भावे प्रतिप्रस्थाता वशावदानकाले "प्रचरण्यां मेदसश्च पत्नी" इत्यत्र वसाहोमहवन्यां व्यापृतायां प्रचरणी दृश्यते । तथा च मानवश्रौतकल्पे—"प्राग्वंशे पाशुकानि पात्राणि प्रयुनक्ति स्रुवादक्षिणां च प्रचरणीं तस्याः प्रथमं तूष्णीं सम्मार्जनम्" ( २।२।४।१९ ) मिति ।

आध्वर्यवपद्धतिः।

"ॐ ध्रुवाणोऽअन्तुराजयस्य श्रेतु स्वाहा"(५।२५)।

इदमग्नये(१)।

अध्वर्युः सोपयमनीकमादायाग्निमुद्यम्य अग्नये प्रह्रियमाणायानुवाचयति।

अग्नये प्रह्रियमाणायानुब्रू३हि।

सोमाय प्रणीयमानायेति(२)वा।

अध्वर्युपुरुषा आहवनीयं गच्छन्त्यादाय ग्रावद्रोणकलशसोमपात्राणि(३)मन्थनचतुष्टयञ्च सबद्धं, वपाश्रपण्यौ, रशने, शकलवृषणमरणी

होतृपद्धतिः।

प्रपद्य शालामुखीयस्य पश्चादुपविश्य आचम्य,

अग्नीषोमाभ्यां प्रणीयमानाभ्यामनुब्रू३ही(४)त्युक्ते—

"ॐ(५)सावीर्हि देव प्रथमाय पित्रे वर्ष्माणमस्मै वरिमाणमस्मै।

---

(१) अयमेव होमो वैसर्जनहोम इत्युच्यते। अत्रैव मीमांसा—

वैसर्जनाख्यहोमीयवाससो ग्रहणस्मृतिः।
प्रमा न वा श्रुत्यबाधात्प्रमा स्यादष्टकादिवत्।
दृष्टलोभैकमूलत्वसम्भवे श्रुत्यकल्पनात्।
सर्ववेष्टनवद्बाधहीनाऽप्येषा न हि प्रमा॥
(जै० न्या०१।३।३।११)

(२) शाखान्तरे (शां० श्रौ०३।१४।७) त्वग्नीषोमाभ्यां प्रणीयमानाभ्यामित्येवं-विधः प्रैष उक्तोऽस्ति।

(३) कठसूत्रे एतेषां सर्वेषामग्नीषोमीयपशोः सहासादनं प्रोक्षणं नयनं च विहित-मस्ति। स्वसूत्रे (का०श्रौ०८।७।१) द्रोणकलशस्य पृथगुपादानं श्रुत्य (श०ब्रा०३।६।३।१०) नुकरणमात्रम्।

इध्मं—विंशतिकाष्ठकं परिध्यादि चतुष्टयं च सन्नद्धं सम्यग्बद्धं, चतुष्टं च प्रागुक्तम्। आश्ववालः प्रस्तरः ऐक्षव्यौ विधृती बर्हिश्चेतदेवाग्नीषोमीयोपसत्स्वपि चतुष्टय (का०श्रौ०८।१।११) मिति। तदेवेह नेयं, वपाश्रपण्यौ वपा श्रप्यते याभ्यां ते वपाश्रपण्यौ काश्म-र्यमय्यौ विशाखाविशाखे। द्वे रशने द्विगुणरशना पश्वर्थो, यूपार्था, त्रिगुणरशना च, शकल एकः। वृषणौ द्वे दर्भतृणे। अरणी द्वे अधरारणिरुत्तरारणिश्चेति मन्थनचतुष्टयम्। मानव श्रौतसूत्रेऽग्नीषोमीयमजं (१।२।४।२६) चेति पठ्यते। एतानि सर्वाण्यादायाहवनीयं प्रति गच्छन्ति ब्रह्मयजमानाध्वर्य्वादयो बहवः। आज्यानि च यैः पूर्वं स्थानि त एव नयन्ति दृष्टार्थत्वात्। अतस्तानि पृथङ्नोक्तान्यर्थप्राप्तत्वात्। आददते ग्राव्णः द्रोणकलशं वाय-व्यानीध्मं काश्मर्यमयान्परिधीनाश्ववालं प्रस्तरमैक्षव्यौ विधृती तद्बर्हिरुपसन्नद्धं भवती- (श०ब्रा०३।६।३।१०) त्यादि श्रुतत्वात्। अत वायव्यानि—सोमपात्राणि। यद्यप्य-ग्नीषोमीये मन्थनस्य विकल्पः, तथापि मन्थनचतुष्टयं नीयत एव सवनीयार्थम्। पश्वादीनामप्युत्तरेद्युरेवोपयोक्ष्यमाणानां नयनविधानात्।

(४) अग्नये प्रह्रियमाणायानुब्रू३हि। सोमाय प्रणीयमानायानुब्रू३हीति वाऽध्व-र्युवचनात् (का०श्रौ०८।७।३) प्रेषितो वक्ष्यमाणा ऋचः पठेत्। (५) शां०श्रौ० ५।१४।८

आध्वर्यवपद्धतिः ।

च, आज्यानि स्रुवादीनि च ।

ब्रह्मा हुते च सोममादायाग्निमन्वेति ।

यजमानो वा सोमॅ० हरेत् ।

अध्वर्युर्गच्छन् अग्ने नयेति वाचयति यजमानम् ।

"ॐअग्ने नय सुपथा राये ऽअस्मान् विश्वानि देव वयुनानि विद्वान्।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नम ऽउक्तिं विधेमे"ति ब्रूहि ।

यजमानः—

"ॐ अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमऽ उक्तिं विधेम" (५।३६) ।

पूर्वद्वारेण निष्क्रम्योत्तरेण सदो(१)हत्वाऽऽग्नीध्रेऽग्निं निदधाति ।

ब्रह्मा च सोममन्वस्मै प्रदायानिहितेऽग्नौ आग्नीध्रमुत्तरेण गत्वा पूर्व-

हौत्रपद्धतिः ।

अथास्मभ्यं सवितः सर्वताता दिवे दिव आसुवा भूरि पश्वो३म् ।
सावीर्हि देव प्रथमाय पित्रे वर्ष्माणमस्मै वरिमाणमस्मै ।
अथास्मभ्यं सवितः सर्वताता दिवे दिव आसुवा भूरि पश्वो३म् ।
सावीर्हि देव प्रथमाय पित्रे वर्ष्माणमस्मै वरिमाणमस्मै" ।

इत्यासीनोऽनूच्य, विरमेत् ।

ततोऽनुगच्छन्नपरा अष्टौ ऋचोन्वाह ।

"अथास्मभ्यं सवितः सर्वताता दिवे दिव आसुवा भूरि पश्वो३म् ।
उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे । उप प्रयन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचो३म्(२) ।

प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता । अच्छा वीरं नर्यं पंक्तिराधसं देवा यज्ञं नयन्तु नो३म्(३) ।

होता देवो अमर्त्यः पुरस्तादेति मायया । विदथानि प्रचोदयो३म्(४)।
वाजी वाजेषु धीयतेऽध्वरेषु प्रणीयते । विप्रो यज्ञस्य साधनो३म्(५) ।
धिया चक्रे वरेण्यो भूतानां गर्भमादधे(६) । दक्षस्य पितरं तनो३म्(७) ।

---

(१) "हत्वाग्नीनि" इति ख पाठः ।

(२) ऋ० १।४०।१। (३) ऋ० १।४०।३। (४) ऋ० ३।२७।७।

(५) ऋ० ३।२७।८।

(६) "होता देवो अमर्त्य" इत्यस्य तृचस्य तृतीयायामृचि "भूतानां गर्भमादध" इति पः पादस्तं ब्रुवन् गर्भकामायै गर्भमियं लभतामिति ध्यायादुत्तरेण सदोऽनुसंयन् । सदो सद इति सामान्यात् । (७) ऋ० ३।२७।९।

आध्वर्यवपद्धतिः।

द्वारेण प्रविश्य धिष्ण्यस्य दक्षिणत उपविशति तूष्णीम्।

यजमानश्च तत्पश्चिमतः निहितेऽग्नौ प्रायश्चित्तोदककलशसोमपात्राणि च तत्र निदधाति। सोमासन्दीं च आग्नेयकोणे। अग्नीषोमीयं पशुमप्यानीय तत्र बध्नाति शाखान्तरात्।

सᳪस्कृतेनैवाज्यशेषेण प्रचरयां सकृद्गृहीतेन समिद्वतीमयन्न इति जुहोत्यस्मिन्।

"ॐअयन्नोऽग्निर्वरिवस्कृणोत्वयम्मृधः पुर एतु प्रभिन्दन्।

अयं वाजाञ्जयतु वाजसातावयᳪ शत्रूञ्जयतु जर्हृषाणः स्वाहा" (५।३७)।

होत्रपद्धतिः।

उप त्वाग्ने दिवे दिवे दोषावस्तर्धिया वयं। नमो भरन्त एमसोऽ३म्।

राजन्तमध्वराणां गोपामृतस्य दीदिविम्। वर्धमानं स्वे दमोऽ३म्।

स नः पितेव सूनवेऽग्ने सूपायनो भव"

विरमेत।

ततोऽध्वर्युः आग्नीध्रीयेऽग्निं निदधाति(१) आहुतौ हूयमानायाम्।

"सवस्वा नः स्वस्तयोऽ३म् (२)।

अग्ने जुषस्व प्रति हर्य तद्वचो मन्द्र स्वधाव ऋतजात सुक्रतोम्।"

आरमेत।

तत उत्तरेणाग्नीध्रीयमग्निं अनुसंयन्।

"यो विश्वतः प्रत्यङ्ङसि दर्शतो रण्वः सन् दृष्टौ पितुमाँ इव क्षयोऽ३म्(३)।

सोमो जिगाति गातुविद्देवानामेति निष्कृतम्। ऋतस्य योनिमा सदोऽ३म्।

सोमो अस्मभ्यं द्विपदे चतुष्पदे च पशवे। अनमीवा इषस्करोऽ३म्।

अस्माकमायुर्वर्धयन्नभिमातीः सहमानः"।

आरमेत्।

तत आहवनीये हूयमानायाम्—

"सोमः सधस्थमासदो ३म्( )।

उप प्रियं पनिप्नतं युवानमाहुतीवृधम्'

(१) अग्निनिधानात्पूर्वं ब्रह्मयजमानावुपविशतो दक्षिणतः। ब्रह्मा चाग्नीध्रमुत्तरेण गत्वा पूर्वद्वारेण प्रविश्य धिष्ण्यस्य दक्षिणतस्तूष्णीमास्ते।

(२) ऋ० १।१।७-९ (३) ऋ० १।१४४।७ (४) ऋ०३।६२।१३-१५।

आध्वर्यवपद्धतिः ।

इदमग्नये ।

तमुत्तरेण परिक्रम्य पूर्वया द्वारोपनिष्क्रम्याहवनीयस्योत्तरतो निदधात्यन्यदाज्यसोमवर्जम् ।

ब्रह्मा यथेतमेत्यास्ते दक्षिणतो हुते च सोममादायाहवनीयं चातीत्य ।

यजमानः स्वसञ्चरेणैत्य दक्षिणतो वहिर्वेद्युपविशति ।

आज्यानि सोमं च धारयन्त्येव ।

औद्गात्रपद्धतिः ।

ओं वा ३१३। सन्ते पया । सी ३ समु । यन्तु वाजाः । संवृष्णिया । मी ३ अभि । माति षाहाः । आप्यायमा । नो ३ अमृ । तायसोमा

हौत्रपद्धतिः।

अन्वारमेत् ।

ततः प्रपाद्यमाने—

"अगन्म विभ्रतो नमो(१) ३म् ।

तमस्य राजा वरुणस्तमश्विना क्रतुं सचन्त मारुतस्य वेधसः ।

दाधार दक्षमुत्तममहर्विदं व्रजं च विष्णुः सखिवाँ अपोर्णुतो(२)३म् ।

अन्तश्च प्रागा अदितिर्भवास्यवयाता हरसो दैव्यस्य" ।

इत्यनुप्रपद्य, अन्वारमेत् ।

ततो दक्षिणे हविर्धाने राजनि सन्न उत्तरतो दक्षिणा तिष्ठन् ।

"इन्द्रविन्द्रस्य सख्यं जुषाणः श्रौष्टीवधुरमनु राय ऋध्यो३म्(३) ।

श्येनो न योनिं सदनं धिया कृतं हिरण्ययमासदं देव एषति परिणंति बर्हिषि प्रियं गिराश्वो न देवाँ अप्येति यज्ञियो३म्(४) ।

गणानां त्वा गणपतिं हवामहे कविं कवीनामुपश्रवस्तमम् ।

ज्येष्ठराजं ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनो३म्(५) ।

अस्तम्नाद्यामसुरो विश्ववेदा अमिमीत वरिमाणं पृथिव्याः ।

आसीदद्विश्वा भुवनानि सम्राड्विश्वेत्तानि वरुणस्य व्रतानो३म्(६) ।

एवा वन्दस्व वरुणं वृहन्तं नमस्या धीरममृतस्य गोपां स नः शर्म त्रिवरूथं वि यंसत्पातं नो द्यावापृथिवी उपस्थो३म् ।

एवा वन्दस्व वरुणं वृहन्तं नमस्या धीरममृतस्य गोपां स नः शर्म त्रिवरूथं वि यंसत्पातं नो द्यावापृथिवी उपस्थो३म् ।

---

(१) ऋ०१।६७।२१ । (२) ऋ०१।१५६।४ । (३) ऋ०८।४८।२ ।
(४) ऋ०९।७१।६ । (५) ऋ०२।२३।१ । (६) ऋ०८।४२।१ ।

आध्वर्यवपद्धतिः ।

धिष्ण्यान्यचायोऽध्वर्योरेवापरिसमाप्तेः ।

उत्तरवेदाविध्मप्रोक्षणादि करोति ।

ब्रह्मन्निध्मं० (१) अनुज्ञात इध्मं प्रोक्षति

"ॐ कृष्णोऽस्याखरेष्ठोऽग्नये त्वाजुष्टम्प्रोक्षामि" ( २।१ ) ।

खरोत्तरार्द्धे वेदिप्रोक्षणं(२)वेदिरसीति ।

औद्गात्रपद्धतिः ।

दिविश्रवा । सी २ उंत । मानिर्धिष्वा । औवा २ । २ । ओ २ वा ४

औ हो वा । न्य । ३ (३) ॥ ३० ॥

हौत्रपद्धतिः ।

यथा यन्दस्य वरुणं बृहन्तं नमस्या धीरममृतस्य गोपां स नः शर्म त्रिवरूथं वि यंसत्पातं नो द्यावापृथिवी उपस्थे३(४)म् ।

इति परिधाय ततो भद्रन्तीरुपस्पृश्य अग्नीषोमप्रणयनकाले येन पटेनाच्छादितो भवति तं गोत्रपटं वृद्धसम्प्रदायाद्गृहीत्वा सव्यावृद्धविर्धानयोः (५)पूर्वस्यां द्वार्युपविशति । सव्यावृदुत्तरेण हविर्द्धानेन गत्वा तत्रैवोपविशति ।

इत्यग्नीषोमप्रणयनम् ।

---

( १ ) "ब्रह्मन्निध्मं प्रोक्षिष्यामि" इति ब्रह्माणमामन्त्रयेत् ।

ततो ब्रह्मा—"ओं" प्रोक्ष यज्ञं देवता वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु सप्त ऋषीणां सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेहि" ( का०श्रौ०२।२।८ ) इति मन्त्रमुपांशु पठित्वा "ॐ ३ प्रोक्ष" इत्युच्चारध्वर्युमनुजानीयात् ।

ततोऽध्वर्युः ॐ कृष्णोऽस्याखरेष्ठोऽग्नये त्वा जुष्टं प्रोक्षामी"ति मन्त्रेणेध्मं प्रोक्ष्य "ॐ वेदिरसि बर्हिषे त्वा जुष्टं प्रोक्षामी"ति खरोत्तरार्द्धे वेदिप्रोक्षणं कुर्यात् ।

( २ ) प्रकृतौ ।शाखान्तरे श्रूयते "वेदिरसि बर्हिषा त्वेति त्रिर्वेदिं प्रोक्षतो"ति । तत्रायं संशयः—किं प्रत्याभ्यासं मन्त्रावृत्तिरुत सकृदेवादौ मन्त्र इति । प्रोक्षणार्थत्वान्मन्त्रस्य प्रोक्षणस्य च संख्याया भिन्नत्वात्प्रतिप्रधानं च गुणानामावृत्तेः प्रत्यभ्यासमावृत्तिः । किं चानेन मन्त्रेण त्रिः प्रोक्षतीति वचनाद्विशिष्टमन्त्रावृत्तिर्गम्यते इति पूर्वपक्षे—संस्कार्यवेद्या एकत्वेन समन्त्रकप्रथमप्रोक्षणेन तत्संस्कारसिद्धौ पुनर्न मन्त्रः, वैयर्थ्यात् । प्रोक्षणावृत्तिस्तु वाचनिकी, इति वैषम्यम् । अतः सकृदेव मन्त्रावृत्तिरितिपूर्वमीमांसा सिद्धान्तः । तथा च सूत्रे — "वेदिप्रोक्षणे मन्त्राभ्यासः कर्मणः पुनः प्रयोगात् । एकस्य वा गुणविधिर्द्रव्यैकत्वात्तस्मात्सकृत् प्रयोगः स्या" (मी०द०११।४।४७-४८) दिति ।

( ३ ) आ० गा० १, २, २,=आ० गा० ४, १. ९ ।

( ४ ) ऋ० ८।४२।२

( ५ ) केचिदध्वर्यवोऽपरया द्वारा हविर्द्धाने सोमं प्रवेशयन्ति, तस्मिन् क्रियमाणे

आध्वर्यवपद्धतिः ।

"ॐ वेदिरसि बर्हिषे त्वा जुष्टं प्रोक्षामि" (२।१) ।

पश्चाद्वोत्तरवेदेर्देशे ब्रह्मन् बर्हिः० ।

अनुज्ञातो बर्हिः प्रोक्षति स्रुग्भ्यस्त्वेति ।

"ॐ बर्हिरसि स्रुग्भ्यस्त्वा जुष्टं प्रोक्षामि" ( २।१ ) ।

सशेषो मूलावसेकः(१) । बर्हिर्विस्रंस्य पुरस्तादातिथ्याप्रस्तर-ग्रहणं विष्णोरिति ।

"ॐ विष्णोस्तुपोऽसि" ( २।२ ) ।

ब्रह्मणे समर्पणं सन्निहनं विस्रंस्य स्तीर्यमाणदेशस्य नैर्ऋत्यां निधायान्यैरवच्छादयति । खरोत्तराद्ध प्रोक्षिते पकृत् स्तरणं पश्चाद्वोत्तरवेदेः ।

"ॐ ऊर्णम्रदसं त्वा स्तृणामि स्वासस्थान्देवेभ्यः" ( २।२ ) ।

दक्षिणतस्तृणीं बर्हिषि प्लक्षशाखां स्तृणाति ।

नापन्नतृणनिरसनम् ।

इध्मात्समिधमादाय ब्रह्मणः प्रस्तरं चादायाहवनीयं कल्पयत्युपर्युपरि प्रस्तरं धारयत्युल्मुके उद्वृहत्यनुयाजार्थेत् ।

आतिथ्यपरिधीन् परिदधाति गन्धर्व इति प्रतिमन्त्रम् ।

मध्यमम् ।

"ॐ गन्धर्वस्त्वा विश्वावसुः परिदधातु विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडितः" ( २।३ ) ।

दक्षिणम् ।

"ॐ इन्द्रस्य बाहुरसि दक्षिणो विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडितः" ( २।३ ) ।

उत्तरम् ।

"ॐ मित्रावरुणौ त्वोत्तरतः परिधत्तान्ध्रुवेण धर्मणा विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडितः" ( २।३ ) ।

प्रथमं परिधिर्ठं० समिधापस्पृश्य वीतिहोत्रमित्यादधाति ।

"ॐ वीतिहोत्रं त्वा कवे द्युमन्तर्ठं० समिधीमहि ।

---

येनैव मार्गेण ते गच्छन्ति तेनैव पृष्ठतो होताऽनुगच्छेत् 'तमस्य राजेति प्रपाद्यमान" ( शां० श्रौ० ५।१४।१७ ) इत्याद्यनुवचनमत्रापि पूर्वेण तुल्यम् । इयांस्तु विशेषः—अनुवचनमासौ गोमरटं गृहीत्वा दक्षिणावृद्धत्वाऽपरया द्वारा निष्क्रम्य ततः सव्यावृद्विधानागारमुत्तरेण मत्वा तत्रैव पूर्वस्यामेव द्वार्युपविशेत् "अनुममेति होता" ( शां० श्रौ० ५।१४।२२ ) इति कल्पसूत्रात् । अस्मिन्नपि पक्षे ब्रह्मयजमानयोः प्राग्द्वारैव प्रवेशः ।

(१) "ॐ अदित्यै व्युन्दनमसी" ति ( २।२ ) मन्त्रेण ।

आघ्वर्यवपद्धतिः।

अग्ने बृहन्तमध्वरे" ( २ । ४ )।

अनुपस्पृश्य द्वितीयां समिदसीति ।

"ॐ समिदसि" ( २ । ५ )।

प्रागाहवनीयेक्षणात्त्वोरुविष्ण इति जुहोति सकृद्गृहीतं प्रचरण्या स्रुवेण घोत्तरवेदौ ।

"ॐ उरु विष्णो विक्रमस्वोरुक्षयाय नस्कृधि ।

घृतं घृतयोने पिब प्र प्र यज्ञपतिन्तिर स्वाहा" ( ५ । ३८ )।

इदं विष्णवे०।

सूर्यस्त्वेति जपत्याहवनीयमीक्षमाणः ।

"ॐसूर्यस्त्वापुरस्तात्पातु कस्याश्चिदभिशस्त्यै" ( २।५ )।

सस्वरं मन्त्रपाठः ।

आवृत्य वेदिं वर्हिषस्तृणे तिरश्ची निदधाति सवितुरिति ।

"ॐ सवितुर्व्वाहू स्थः" ( २ । ५ )।

अन्ये पाऽयुक्तत्वात ।

"ॐ सवितुर्बाहू स्थः" ( २ । ५ )।

तयोः प्रस्तरं स्तृणात्यूर्णम्रदसमिति ।

"ॐ ऊर्णम्रदसन्त्वा स्तृणामि स्वासस्थं देवेभ्यः" ( २ । ५ )।

पाणी अभिनिदधात्या त्वा वसव इति ।

"ॐ आ त्वा वसवो रुद्रा आदित्याः सदन्तु" ( २ । ५ )।

स्रुवा(वा)सि निधानं तूष्णीम् ।

शम्याग्रन्ये जुहूं प्रतिगृह्य निदधाति घृताचीति ।

"ॐ घृताच्यसि जुहूर्नाम्ना सेदम्प्रियेण धाम्ना प्रियं० सद ऽआसीद" ( २ । ६ )।

बर्हिष्युपभृतम् ।

"ॐ घृताच्यस्युपभृन्नाम्ना सेदम्प्रियेण धाम्ना प्रियं० सद ऽआसीद" ( २ । ६ )।

तूर्णी तदुत्तरतो वसाहोमहवनीयम् ।

उपभृन्मन्त्रेण पृषदाज्यम् । प्रियेण धाम्नेति वाऽविशेषोपदेशात् ( का० श्रौ० ५।४।२७ )।

"ॐ प्रियेण धाम्ना प्रियं० सद ऽआसीद" ( २ । ६ )।

तूष्णीं वानस्पत्यम् । आज्यस्थालीं प्रियेणेति ।

"ॐ प्रियेण धाम्ना प्रियं० सद आसीद" ( २ । ६ )।

आध्वर्यवपद्धतिः ।

ध्रुवा ऽअसदन्निति स्थालीपूर्वकमालम्भः । ( पाहिमामित्यात्मालम्भः । ) उदकोपस्पर्शः ।

दक्षिणानसो दक्षिणतः समन्त्रं ब्रह्मास्ते ।

(१)मासाद्याऽज्यानि पाणी प्रक्षाल्य यजमानस्य ब्रह्मणो वा सकाशात्सोममादाय हविर्द्धानमण्डपं पूर्वया द्वारा सयजमानः प्रविशति ।

दक्षिणेऽनसि कृष्णाजिनमास्तीर्य यजमानान्वारब्धस्तस्मिन् सोमं निदधाति(२) देवसवितरिति ।

"ॐदेव सवितरेष ते सोमस्तꣳ रक्षस्व मा त्वा दभन्" (५।३९) ।

एतत्त्वमिति विसृज्यो(३)पतिष्ठते यजमानः ।

"ॐ एतत्त्वन्देव सोम देवो देवां उपागा ऽइदमहम्मनुष्यान्त्सह रा-

(१) अत्र यद्यपि सूत्रकारेणासाद्याज्यानी ( ८।७।१६ ) त्याज्यासादनानन्तरमेव कृष्णाजिनास्तरणाद्युक्तं तथापि "प्राकृतं च विकृता ( का०श्रौ०१।५।४) वि"त्यनेन न्यायेनाज्यालम्भमात्मालम्भोदकोपस्पर्शनानि ततः पूर्वं भवत्येव । तथा च शाखान्तरे—"आसाद्य हवीꣳषि सम्मृश्याप उपस्पृश्य राजानमादाय प्रपद्यत" इति ।

(२) न्यग्रोधश्चेत्तस्यापि सोमेन सहैव प्रणयनमासादनं च, ऊहश्च मन्त्रे । "देव सवितरेतौ ते सोमन्यग्रोधौ तौ रक्षस्व मा त्वा दभता" (५।३९) मित्युभयोः स्थापनम् ।

(३) अत्र विसर्गोपदेशात्कृष्णाजिने निधानकाले यजमानः सोममन्वारभत इति प्रतीयते । "अथानुसृज्योपतिष्ठत एतत्त्वं देव सोमेति" ( श०ब्रा ३।६।३।१८ ) श्रुतत्वात् । अनुसृज्य सोमं मुक्त्वा यजमानः सोममुपतिष्ठते कुत एतत् "अग्नीषोमौ वा ऽएतमन्तर्जम्भ आदधाते यो दीक्षत" ( श०ब्रा०३।६।३।१८ ) इति वचनात् । सर्वमेव चात ऊर्ध्वं निष्क्रमणादि याजमानं कर्म, मन्त्रलिङ्गवाक्यशेषेभ्यः आ ब्राह्मणसमाप्तेः । तत्र चाध्वर्युणानुसृष्टे यजमान उपतिष्ठत इत्यसमानकर्तृकयोः पूर्वकालेऽनुसृज्येति ल्यप् प्राप्नोति नैष दोषः । आध्वर्यवोऽपि ह्यनुसर्गो यजमानेन क्रियत एव हेतुकर्तृकत्वात् । यथा "वाचं विसृज्य समिधादानमिति ( का०श्रौ०१६।६।२ ) समिधमाधाय भस्मापोऽभ्यवहरतो"ति । ननु च यथा "प्रतिप्रस्थाता पशुना प्रत्युपतिष्ठते" एवमीदृशो वाक्यशेषो भवति । तत्प्रत्यक्षं वरुणपाशादग्नेश्च निर्मुच्यत इति । तथा च मन्त्रलिङ्गान्यपि "यां वै कां च ऋत्विज आशिषमाशासते यजमानस्यैव सेन्त्ये"न वियास्यन्ते । नैतदेवम्—तत्र हि प्रतिप्रस्थातृश्रवणाद्युक्तं यद्यजमानो न प्रत्युपतिष्ठते । इह तु समाख्यानप्रमाणकोऽध्वर्युर्न शक्नोति लिङ्गवाक्यशेषगम्यं यजमानं बाधितुं तस्माद्याजमाना एवोपस्थानादयः । अन्ये त्ववान्तरदीक्षाविसर्गार्थं समिदाधानं याजमानं मन्यन्ते तेनोपस्थाननिष्क्रमणे इति हरिस्वामिनः ।

न्यग्रोधे चास्य मन्त्रस्योहः "एतद्युवां सोम न्यग्रोधौ देवौ देवां उपागा" इति ।

अनेकयजमानके च सर्वे गृहपतिमन्वारभन्ते विसृज्योपस्थानं कुर्वीरन्, तन्मन्त्रे "उपागा इदं वयं मनुष्यानि"ति बहुषु । "इदमावां मनुष्यानि"ति द्वियजमानके विशेषः ।

आध्वर्यवपद्धतिः ।

यस्पोषेण" ( ५।३९ ) ।

यजमानः स्वाहा निरिति निष्क्रम्य(१) ।

"ॐ स्वाहा निर्वरुणस्य पाशान्मुच्ये" ( ५।३९ ) ।

अग्ने व्रतपा इत्याहवनीये समिधमाधाय ।

"ॐअग्ने व्रतपा या तव तनूर्मय्यभूदेषा सा त्वयि यो मम तनूस्त्वय्यभूदियर्ठ० सा मयि ।

यथायथन्नौ व्रतपते व्रतान्यनु मे दीक्षान्दीक्षापतिरमर्ठ०स्तानु तपस्तपस्पतिः" ( ५।४० ) ।

मदन्तीरुपस्पृश्य, अङ्गुलीर्विसृजते ।

पत्नी च (२)गार्हपत्ये तूष्णीं समिधमाधाय मदन्तीरुपस्पृश्याङ्गुलीर्विसृजते ।

अध्वर्युश्चात्वाले मदन्तीः कृत्वा नामग्रहणभोजने(३) अस्यातः कुर्वन्ति । व्रतनिवृत्तिः । हविःशेषभक्षः(४) सवनीये ।

अग्नीषोमीयोऽतः(५) पशुस्तद्देवत्यः पशुपुरोडाशः ।

अभ्र्यादि(६)करोति । देवस्य त्वेत्यभ्रिमादाय ।

"ॐदेवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् । आददे नार्यसि" ( ६।१ ) ।

---

( १ ) अनेकयजमानके निष्क्रमणादङ्गुलिविसर्गान्तं सर्वेषां भवति ।

( २ ) नानागार्हपत्यपक्षे तु स्वस्वगार्हपत्ये सर्वासां समिधादानाद्यङ्गुलिविसर्गान्तम् । एकगार्हपत्यपक्षे तस्मिन्नेव सर्वाः पत्न्यः समिध आदध्युः ।

( ३ ) पुरुषमात्रधर्मोऽयं "तस्मादस्यान्नाऽश्नन्ति मानुषो हि भवति" इत्यादि श्रुतेः ।

( ४ ) हविःशेषभक्षः प्रातरेव नाद्य "तस्मादुपवसथे नाऽश्नीया"दिति निषेधात् । "प्रातः शेषांश्च भक्षांश्च भक्षयते"ति श्रुतेः । स चायं शेषो सवनीयशेषो न हविर्मात्रस्य ।

सत्रेऽपि यजमानानां भक्षणाय सवनीयपुरोडाशानामेव वृध्युपदेशात् "अथ यन्नानाः पुरोडाशाः भूयो हविरुच्छिष्टयरसमाप्त्या" इति । अत्र मानवे विशेषः "हविष्यं पत्नी प्राश्नीयाद्धविरुच्छिष्टं यजमानोऽग्रेण हविर्धाने परेण स्रुग्दण्डान् दक्षिणातिक्रम्यापरो भक्षण उपविशत्येष सञ्चर" इति ।

( ५ ) पशोर्देवताभिधानार्थमेतत्सूत्रमव्यवधानज्ञापनार्थं च । अतःपरं सौमिकैः पदार्थैरव्यवहितं पाशुकमेव कर्तव्यमिति । "उपांशु चरति प्रागग्नीषोमीयादि" ( का० श्रौ० ७।२।२९ ) त्यस्यायमवधिरिति ज्ञापनार्थं, साद्यस्के च "पुरोडाशो वाऽग्नीषोमीयस्थाने"( का०श्रौ०२२।३।२९ ) इत्युक्तं सोऽप्यस्मिन्नवसरे यथा स्यादित्येवमर्थमग्नीषोमीयोऽतः पशुरितिसूत्रं कृतम् ।

( ६ ) आज्यासादनान्तस्य पूर्वं कृतत्वादभ्र्यादानादेरेवायमवसर इति ।

आध्वर्यवपद्धतिः ।

यूपावटं परिलिखत्याहवनीयस्य पुरस्तादन्तर्वेद्यर्धम्(१) । "ॐइदमहर्ठं० रक्षसाङ्ग्रीवा अपिकृन्तामि" (६।१)। उदकोपस्पर्शः । उपरसम्मितं खनति । प्राचः पांशूनुद्वपति । तदग्रेण यूपं (२)प्राञ्चं निदधाति । कुशमुष्टिमुपरि तस्मिन्

---

(१) अत्र मीमांसा—

अन्तर्वेदि मिनोत्यर्धे यूपाङ्गमुत लक्षयेत् । देशं यूपाङ्गभावेन वेदिभागोऽत्र चोद्यते ॥
बहिर्वेद्यर्धमित्येवद्वाक्यं भिद्येत तद्विधौ । मीयमानस्य यूपस्य तावान्देशोऽत्र लक्ष्यते
(जै० न्या० मा० ३।७।११-१२)।

(२) यूपलक्षणं कात्यायनपरिशिष्टे—

चातुर्वर्ण्यं प्रवक्ष्यामि वृक्षाणां पशुभिः सह । वृक्षा च्छेदेन विज्ञेया वर्णेन पशवस्तथा ॥
श्वेतस्तु ब्राह्मणो ज्ञेयः पिङ्गरः क्षत्रियः स्मृतः।वैश्यस्तु धूम्रवर्णः स्यात्कृष्णं शूद्रं विनिर्दिशेत्॥
ब्राह्मणे ब्राह्मणो यूपः क्षत्रिये क्षत्रियो भवेत् । वैश्ये तु वैश्ययूपः स्यात्कृष्णं शूद्रं तु वर्जयेत् ॥
यथात्मा तथा यूपो यूपे ह्यात्मा प्रतिष्ठितः । आत्मा वै यजमानस्य यूपत्वमनुगच्छति ॥
भिन्दां प्रशस्ति वक्ष्यामः कात्यायनमतं यथा । यूपस्य सचषालस्य अध्वर्युः कारयेत्सदा ॥
आत्मानं यजमानस्य यूपमाहुर्मनीषिणः । यूपं श्रेष्ठतमं कुर्यादध्वर्युः सर्वकर्मसु ॥
समभूमिषु ये जाता विविक्ते काननान्तरे । स्निग्धा बहुलपर्णाश्च ते यूपा यज्ञकर्मणि ॥
वर्जयेत्कन्दरे जातं तज्जातं तथैव च । गिरिमूर्द्धनि ये जाता नदीकूलाश्रिताश्च ये ॥
वल्लीभिर्वेष्टिताश्चैव बहुविनिहतास्तथा । सुषिरा जर्जराश्चैव कोटरैराश्रिताश्च ये ॥
शीर्णांश्च कटमस्वन्धान्यूपांश्च परिवर्जयेत् । छेदनेन प्रमाणस्तु तन्तुको यदि दृश्यते ॥
तन्तुकेन तु विज्ञेयः कण्टो वा यदि वा कृमिः । माञ्जिष्ठवर्णसंकाशे हृदये भवति दर्दुरः ॥
पीतके मण्डले गोधा नीडे विद्याद् भुजङ्गमम् ।श्यामं वा यदि वा कृष्णं मण्डलं यदि दृश्यते॥
दीर्घसर्पविकारः स्याद्दृश्यते नात्र संशयः । कपिले मूषिकं विद्यात्कृकलासं तथारुणे ॥
शुक्लवर्णे तु पाषाणं कपोते गृहगोधिकाम् । क्षते च रुधिरस्रावं गोविद्धे रोगिता तथा ॥
शूलकं वर्जयेद्धित्यं सर्वयज्ञेषु निश्चितम् ।उच्छ्रितो यजमानस्य यूपवक्रं तु नाहरेत् ॥
शीर्णाकृतिर्विपर्यस्तस्तथैव चतुराकृतिः । उच्छ्रितो यजमानस्य पशुपुत्रविनाशकृत् ॥
अव्रणो न च शुष्काग्रो मध्ये चोन्नतो भवेत्।अग्रे चोपनतः किञ्चित्स यूपो यज्ञियः स्मृतः॥
उच्छ्रीयमाणो यूपस्तु दक्षिणा पतितो यदि । तस्मिन्संवत्सरं मृत्युर्यजमानस्य निर्दिशेत्॥
प्रत्यगुत्तरतो वापि यस्य यूपोन्नतो भवेत् । प्रागेव तु विनाशः स्याद् ध्रुवमस्तु भयं भवेत् ॥
अथ तस्यैव यूपस्य षडष्टाश्रीणि कुर्वते ॥ चौराद्राजकुलाद्वापि उभयत्र भयं भवेत् ।
प्रथमाश्रिविनाशे च उभयत्र भयं भवेत् । द्वितीयस्यामिष्टनाशस्तृतीया तु प्रजां हरेत् ॥
चतुर्थ्यां भार्यां विद्यात्पञ्चम्यां तु धनक्षयः । षष्ठी पशुविनाशाय सप्तम्यामनिलाद्भयम् ॥
चौराद्राजकुलाद्वापि अष्टम्यां भयमिष्यते । प्रथमा अग्निदैवत्या द्वितीया सोमदेवता ॥
तृतीया वारुणी प्रोक्ता चतुर्थी यमदेवता । पंचमी नागदैवत्या षष्ठी अनिलदेवता ॥
सप्तमी पितृदैवत्या अष्टमी सूर्यदेवता । अश्रीणां देवता ह्येता यूपो वैष्णव उच्यते ॥
यज्ञस्य देवता ह्येता एतच्चे यूपलक्षणम् ॥

शाकलप्रक्षेपपद्धतिः ।

(१)प्रथमशकलञ्च, अग्रमुत्तरेण चषालम् ।

यवोऽसीत्यप्सु यवानोप्य ।

"ॐयवोऽसि यवयास्मद्द्वेषो यवयारातीः" ( ६।१ ) ।

प्रोक्षत्यग्रमध्यमूलानि दिवे त्वेति प्रतिमन्त्रम ।

"ॐदिवे त्वा प्रोक्षामि ।

ॐअन्तरिक्षाय त्वा प्रोक्षामि ।

ॐपृथिव्यै त्वा प्रोक्षामि" ( ६।१ ) ।

अवटे शेषमासिञ्चति शुन्धन्तामिति ।

"ॐशुन्धन्तांल्लोकाः पितृषदनाः" ( ६।१ ) ।

उदकोपस्पर्शः ।

बर्हीष्षि(२) प्राञ्च्युदञ्चि च प्रास्यति पितृषदनमसीति ।

"ॐपितृषदनमसि" ( ६।१ ) ।

उदकोपस्पर्शः ।

---

अत्र मीमांसा—

अग्नीषोमीयसुत्येषु यूपो भिन्नोऽथ तन्त्रता । उपदेशातिदेशाभ्यां भिन्नो नो कालभेदत संस्कारास्त्वक्षणाद्याः किं भिन्नास्तन्त्रेण वा ऽग्निम ।पशुकालत्वतो मे' यूपस्वापादका यतः ( जै० न्या० मा० ११।३।३-४ ) ।

( १ ) अयमेव ( छिद्यमानस्य यूपस्य प्रथमं पतितः ) शकलः स्वरुशब्दवाच्यः । स च यूपवत् ( जै० सू० ११।३।३-४ ) सर्वपशुसाधारण ।

तथा हि मीमांसा—

स्वरुर्भिन्नोऽथवैकः स्यादस्वकालत्वतो भिदा । प्राथम्यमेककाले तन्त्रं स्यादविशेषत. । ( जै० न्या० मा० ११।३।६ )

अन्यच्च—

स्वरुं कुरुत इत्यत्र स्वरुर्यूपात् पृथक् छिदाम् ।
प्रयोजयेन्न वाऽऽद्योऽस्तु विशिष्टस्य विधानतः ।
आद्यस्य यूपखण्डस्य स्वरुत्वादपविशेषणे ।
विहिते लाघवं तस्मादनुनिष्पन्न एव स. ।

( २ ) अत्र धार्तस्तृता एव कुशा ग्राह्या । तथा हि कात्यायन "कौशं बर्हिः" ( १।३।१२ ) इति ।

मीमांसा च—

बर्हिराज्यपुरोडाशशब्दा संस्कारवाचिनः ।
जात्यर्था वा शास्त्ररूढेस्ते स्युः संस्कारवाचिन. ॥
जातिं त्यक्त्वा न संस्कारे प्रयुक्ता लोकवेदयोः ।
विनापि संस्कृतिं लोके दृष्टत्वाज्जातिवाचिन ॥
( जै० न्या०मा०१।४।२२-२३ )

आध्वर्यवपद्धतिः ।

प्रथमशकलं चाग्रेणीरसीति ।

"ॐअग्रेणीरसि स्वावेश उन्नेतृणामेतस्य वित्तादधिरत्वा स्थास्यति" (६।२)।

भवदार्थमाज्यशेषं शालाद्वार्ये संस्कृत्य स्रुवेणावटे जुहोति तूष्णीम्।

इदं प्रजापतये० ।

यूपमुत्तरेण पुरस्तात्परिक्रम्याध्वर्युर्यजमानो वा यूप(१)मनक्त्युदङ्ङुपविश्य ।

यूपायाज्यमानायानुब्रूहीति ।

यूपायाज्यमानायानुब्रूहि ।

देवस्त्वेत्यनक्ति ।

"ॐदेवस्त्वा सविता मध्वानक्तु" (६।२)।

हौत्रपद्धतिः ।

अग्नीषोमीयेणोपवसथे पशुना यजते ।

( यूपाञ्जनम् )

यूपाञ्जनम् ।

(२)यूपायाज्यमानायानुब्रूहीत्युक्ते ।

ततो होता हविर्धानपूर्वद्वार्युपविश्य प्रत्यन्वाह ।

"ॐ अञ्जन्ति त्वामध्वरे देवयन्तो वनस्पते मधुना दैव्येन । -

---

(१) यूपाञ्जने घृतमन्यदेव लौकिकं ग्राह्यं न त्वाज्यपात्रस्थम्। तथा च सूत्रम्—'यूपाञ्जने च सर्पिः' (का० श्रौ० २।८।८) इति।

मासमेक (तै० ब्रा० १६।१३।१८ का० श्रौ० २२।३।१४०) सर्वाली यूपो भवति तथापि पर्यूहण—परिषेचन—अञ्जन—प्रोक्षणादिसंस्काराणामनुष्ठानं भवत्येव।

तथा हि मीमांसा—

पर्यूहणाद्यञ्जनादि न स्यात्स्याद्वाऽत्र पूर्ववत्।

न स्यादश्रूयमाणत्वादविशेषाच्च तदर्थता। (जै०न्या० मा० १०।२।२१)।

यूपैकादशिन्यामञ्जनादेः परिव्ययणान्तस्यानुसमयः कर्तव्यः।

तथा हि मीमांसा—

यूपाञ्जनादिरेकैकः सर्वेषामनुसमाप्यते।

एकैकः पूर्वमन्तेर्वा वचनात्काण्डसंगतेः॥ (जै०न्या० मा० ५।२।८)॥

(२) यूपाञ्जनं शाङ्खायनानां यजमानकर्तृकम्। अत्र यद्यपि कात्यायनेन "पुरस्तात्परिक्रम्याध्वर्युर्यजमानो वा यूपमनक्त्युदङ्ङुपविश्य" (६।२।१४) इत्यध्वर्युयजमान-योर्विकल्पेन कर्तृत्वमभिहितं तथापि शाङ्खायनानां "स्वयमेव यजमानः कुर्वीत" (शां० ब्रा० १०।२) इति विशिष्टश्रुतिबलाद्यजमानेनैव, यूपस्य दक्षिणतः, उदङ्मुखेनोप-विश्य लौकिकघृतेन यूपाञ्जनं क्रियमिति।

आध्वर्यवपद्धतिः ।

चषालमुभयतोऽन्तर्वहिश्च । देशमेदान्मन्त्रावृत्तिः ।

"ॐ देवस्त्वा सविता मध्वानक्तु" ( ६।२ ) ।

अक्त प्रतिमुञ्चति सुपिप्पलाभ्य इति ।

"ॐ सुपिप्पलाभ्यस्त्वौषधीभ्य प्रतिमुञ्चामि" ( ६।२ ) ।

सोपरममग्निष्ठादेशमक्त्वा,

ॐ देवस्त्वा सविता मध्वानक्तु" ( ६।२ ) ।

परिव्ययणदेशर्ठ०समन्ता(१)त्परिमृश्याध्वर्युर्नावसृजेदापरिव्ययणात्।

उच्छ्रीयमाणायानुवाचयति ।

यूपायोच्छ्रीयमाणायानुब्रूहि ।

धामग्रेणेत्युच्छ्रयति(२) ।

मैत्रावरुणपद्धति ।

यूपोच्छ्रयणकाले उद्गातृप्रस्तोतृप्रतिहर्तारः उच्छ्रीयमाणं यूपं पश्येयुः

हौत्रपद्धति ।

यदूर्ध्वस्तिष्ठा द्रविणेह धत्ताद्यद्वा क्षयो मातुरस्या उपस्थोऽ३म् (३)

अञ्जन्ति त्वामध्वरे देवयन्तो वनस्पते मधुना दव्येन ।

यदूर्ध्वस्तिष्ठा द्रविणेह धत्ताद्यद्वा क्षयो मातुरस्या उपस्थोऽ३म्।

अञ्जन्ति त्वामध्वरे देवयन्तो वनस्पते मधुना दैव्येन" ।

अत्रारमेत् ।

तत उच्छ्रीयमाणायानुब्रूहीत्युक्ते—

---

( १ ) अत्र यूपस्पर्शने प्रायश्चित श्रूयते 'यद्येक यूपमुपस्पृशेदेष त वायो इति ब्रूयात् यदि द्वौ एतौ वा इति यदि बहून् एते ते वायव" इत्यादि । तदिदं प्रायश्चित्त किं वैदिके यूपोच्छ्रयणादिविषये स्पर्शे उत लौकिके इतो भयत्रापि संशये—विशेषाश्रवणादनियम प्रकरणात्फलकल्पनापरिहाराच्च वैदिक एवेति पूर्वपक्षे—' यूपो वै यज्ञस्य दुरिष्टमामुञ्चते तस्माद्यूपो नोपस्पृश्यत ' इति प्रतिषिध्य पश्चादिदमुच्यते ' यद्येकमुपस्पृशे" दित्यादि । प्रतिषेधश्च रागप्राप्ते लौकिके, वैदिकस्य विहितत्वेन प्रतिषेधानर्हत्वात् प्रतिषिद्धानुष्ठाने प्रत्यवायोत्पत्तेः प्रतीकारापेक्षायां प्रायश्चित्तविधिरपेक्षितार्थो भवति तस्माल्लौकिके प्रायश्चित्तमिति सिद्धान्त । तथा हि जैमिनि —लौकिके दोषसंयोगादपवृक्ते हि चोद्यते निमित्तेन प्रकृतौ स्यादभागित्वात् ( ९।३।९ ) । सूत्रार्थस्तु लौकिके दपस्पर्शने अयविधिः स्याद्दोषसंयोगात्, कथं दोषसंयोग , हि यस्मादपवृक्ते प्रतिषिद्धस्पर्शने तेन निमित्तेन विधीयते मन्त्र प्रकृतौ प्रतिषेधस्याभागित्वाद्दोषनिर्घातार्थत्वाल्लौकिक एव स्यादिति ।

( २ ) अत्र मीमांसा—खलेवाल्या जोषणं च छेदनं तक्षणोच्छ्रयौ ।
स्युर्वा नो चोदकात्स्युर्नो वैयर्थ्याच्च विरोधत ॥ ( जै० न्या० मा० १०।२।४० )

( ३ ) ऋ० ३।८।१॥

८९ कारकवादार्थविचिकरणम् । न्यायाचार्यश्रीशिवदत्तमिश्रविरचित गंगाख्यव्याख्या टिप्पणी सहितम् । ( न्यायविभागे २ ) रु० १—८

९० काव्यकल्पलतावृत्तिः । श्रीअमरचन्द्रयतिनिर्मिता अरिसिंहकृतसूत्रसहिता । ( अलङ्कारविभागे ४ ) रु० १—४

९१ वैयाकरणसिद्धान्तचन्द्रिका । श्रीरामाश्रमप्रणीता । श्रीसदानन्दकृत-सुबोधिन्या, श्रीलोकेशकरकृत-तत्त्वदीपिकया व्याख्यया च सहिता । पं० श्रीनवकिशोरशास्त्रिणा-निर्मितया चक्रधराख्य महत्या टिप्पण्या अव्ययार्थमाल्या लिङ्गानुशासनप्रक्रियया उणादिकोषेण च सहिता । ( व्या० वि० ११ ) संपूर्ण । रु० ५—०

९२ त्रिपुरारहस्यम् ( महात्म्यखण्डम् ) । ( पुराणेतिहास वि० १ ) रु० ५—०

९३ आपस्तम्बधर्मसूत्रम् । श्रीमद्धरदत्तमिश्र विरचितया उज्ज्वलाख्यया वृत्त्या संवलितम् । ( कर्मकाण्डविभागे ७ ) रु० ४—०

९४ अवच्छेदकत्वनिरुक्तिः । श्रीजगदीशतर्कालङ्कारकृताः । न्यायाचार्य श्रीशिवदत्तमिश्रविरचित गंगाख्यव्याख्या टिप्पणी सहितः । ( न्याय वि० १३ ) रु० १—४

९५ (१) संस्कारदीपकः । म० म० पण्डित श्रीनित्यानन्दपन्त पर्वतीय विरचितः । गणेशपूजादिषड्यागान्त-पूर्वाङ्ग निरूपणात्मकः प्रथमोभागः । ( कर्म०वि० ८ ) रु० १—०

९५ (२) संस्कारदीपकः । " " " विवाह-गर्भाधानादिकशाखान्तसंस्कारनिरूपणात्मकः द्वितीयोभागः । " रु० १—०

९५ (३) संस्कारदीपकः । " शुल्कादानादि-मूर्त्यन्त्यादि निरूपणात्मकः नाम परिशिष्टदीपकः तृतीयोभागः । " रु० १—०

९६ वर्षकृत्यदीपकः । कालनिर्णयव्रतोद्यापन सहितः । म० म० पण्डित नित्यानन्द पन्त-पर्वतीय विरचितः । ( कर्म० वि ९ ) रु० ३—८

९७ श्रौतसूत्रम् । श्रीमन्महर्षि-लाट्यायनप्रणीतमग्निष्टोमान्तम् । ( कर्म० वि० १० ) रु० २—०

९८ नलचम्पूः अथवा दमयन्तीकथा । महाकविश्रीत्रिविक्रमभट्टविरचिता । विषमपद-प्रकाशाख्यव्याख्यया सहिता । भावबोधिनी टिप्पणी सहिता । ( का० वि०१६ ) रु० १—४

९९ श्रीब्रह्मसूत्रम् । श्रीभगवन्निम्बार्क महामुनीन्द्रविरचित वेदान्तपारिजात सौरभाख्यसूत्रवाक्यार्थेन श्रीश्रीनिवासाचार्यचरणप्रणीत श्रीवेदान्तकौस्तुभभाष्येण च समायोजितम् । ( श्रीनिम्बार्कभाष्यम् ) ( वेदान्त वि० १० ) रु० ३—०

१०० वाग्वल्लभः । श्रीमता दैवज्ञाप्रेसरेणागममार्मिकेण कविपुङ्गवेन दुःखभञ्जनविदुषा विरचितः, तत्सुतेन बहुशास्त्रपारगेण कविचक्रवर्तिना महामहोपाध्यायेन देवीप्रसाद-पण्डितप्रवरेण कृतया वरवर्णिन्या टीकयोपलङ्कृतः । ( छन्दः शास्त्र वि० ४ ) रु० २—८

१०१ सिद्धान्तलक्षणम् । श्रीजगदीशतर्कालङ्कारकृतम् । न्यायाचार्य श्रीशिवदत्तमिश्र-विरचित गंगाख्यव्याख्या टिप्पणी सहितम् । ( न्याय विभागे ४ ) रु० १—८

१०२ वेदभाष्यभूमिकासंग्रहः । ( सायणाचार्यविरचितानां स्ववेदभाष्यभूमिकानां संग्रहः ) । [ वेद० वि० ६ ] रु० २—८

१०३ माधवीयधातुवृत्तिः । श्रीमत्सायणाचार्यविरचिता । ( व्या० वि० १२ ) रु० ६—०

१०४ बौधायनधर्मसूत्रम् । श्रीगोविन्दस्वामिप्रणीतविवरणसमेतम् । [ कर्म० वि० ११ ] रु० ४—०

१०५ ताण्ड्यमहाब्राह्मणम् । सायणाचार्यविरचितभाष्यसहितम् । ( वेदवि० ६ ) रु० १२—०

१०६ न्यायमञ्जरी । जयन्तभट्टकृता । न्याय-व्याकरणाचार्येण पं० सूर्यनारायणशास्त्रिणा कृतया टिप्पण्या समेता । सम्पूर्ण । [ न्या० वि० १५ ] रु० ८—०

१०७ शारदातिलकम् । श्रीमद्राघवभट्टकृतपदार्थादर्शटीकासहितम् । ( तन्त्र०वि०१ ) रु० ६—०

१०८ मन्त्रार्थदीपिका । म० म० श्रीशत्रुघ्नविरचिता । सटीक । ( वेद० वि० ७ ) रु० २—०

१०९ दशकुमारचरिमार्थिका । श्रीमज्जगदीशतर्कालङ्कारविनिर्मिता । श्रीकृष्णकान्त-विद्यावागीशकृतया कृष्णकान्तीटीकया श्रीमद्रामभद्रसिद्धान्तवागीशविरचितया रामभद्रीटीकया च समलङ्कृता । पं० ढुण्ढिराजशास्त्रिकृतया छात्रोपयुक्तया विषमस्थलटिप्पण्या मूलकारिकाया च सहिता । ( न्या वि० १६ ) रु० ४—८

११० योगदर्शनम् ( पातञ्जलदर्शनम् ) भगवत्पतञ्जलिविरचितं, राघवानन्दसरस्वतीकृत-"पातञ्जलरहस्याख्य"टिप्पणीयुक्तया द्वादशदर्शनकाननपञ्चाननवाचस्पतिमिश्रविरचितया "तत्त्ववैशारदी"व्याख्यया भूषितेन विज्ञानभिक्षुनिर्मित "योगवार्त्तिक"-समुद्भासितेन मधुपुरीयकाविळमठस्थस्वामिहरिहरानन्दारण्यकृतभास्वतीवृत्त्या सहितेन भगवच्छ्रीकृष्णद्वैपायनव्यासदेवोपज्ञ-"सांख्यप्रवचन" भाष्येणोद्द्योतितम्, प्रदेशविशेषेषु श्रीमन्माध्वसम्प्रदायाचार्य्य-दार्शनिकसार्वभौम-साहित्यदर्शनाद्याचार्य-तर्करत्न-न्यायरत्न गोस्वामि दामोदरशास्त्रिणा विहितया टिप्पण्या "पातञ्जलप्रमाण"नामिकया भूमिकया च संकलितम्। (योग वि. ३)

१११ सारस्वत व्याकरणम् । अनुभूतिस्वरूपाचार्य्यप्रणीतम् । श्रीचन्द्रकीर्तिसूरिप्रणीतचन्द्रकीर्तिनाम्न्या सुबोधिकया व्याख्यया, श्रीवासुदेवभट्टविरचितप्रसादाख्यटीकया च समन्वितम् । कविताकिककोस्तुभ-पाण्डेय श्रीनन्दकिशोरशास्त्रिणा निर्मितया मनोरमावृत्त्या च समुद्भासितम्। (व्या. वि १३) सम्पूर्णम्। रु०

११२ सामान्यनिरुक्ति-गादाधरी-गूढार्थतत्त्वालोकः । पं० कुलपति श्रोत्रिय-श्रीधर्मदत्त [ श्रीबच्चा झा ] शर्मविरचितः । (न्या. वि. १७) रु०

११३ जागदीशी पक्षता । गंगाख्यव्याख्यया टिप्पणीसहिता । (न्या. वि. १८) रु०

११४ मनुस्मृति । कुल्लूकभट्टकृतमन्वर्थमुक्तावल्याख्यया काशीस्थगवर्मेण्ट कालेज व्याकरण-मीमांसा-धर्मशास्त्राध्यापकेन पं० नेने इत्युपाह्व गोपालशास्त्रिसंगृहीतपरिशिष्टटिप्पण्यादिभिरपि सहिता । सम्पूर्णम् । (धर्मशास्त्र. वि. १) रु०

११५ व्युत्पत्तिवादः । श्रीमद्गदाधरभट्टाचार्यचक्रवर्तिविरचितः । वैयाकरणशिरोमणि शुक्ल श्रीवेणीमाधवशास्त्रिरचित [ शास्त्रार्थ-परीक्षोपयोगि ] शास्त्रार्थकला टीका, सहित । (न्या. वि. १९) रु०

११६ भामती । ब्रह्मसूत्रशाङ्करभाष्यव्याख्या सर्वतन्त्रस्वतन्त्रश्रीमद्वाचस्पतिमिश्रविरचिता। न्यायाचार्य पं० ढुण्ढिराजशास्त्रिणा सङ्कलितया विषमस्थलटिप्पण्या समलङ्कृता । सम्पूर्णः । (वेदान्त वि० ११) रु०

११७ जन्मपत्रदीपकः । सोदाहरण-सटिप्पण-हिन्दीटीकासहितः । ज्यौ० पं० श्रीविन्ध्येश्वरीप्रसादद्विवेदिना विरचितः । (ज्यौ. वि. ९) रु०

११८ गोभिलगृह्यसूत्रम् । सटीकम् । (कर्मकाण्ड वि० १२) रु०

११९ सिद्धान्तकौमुदी । व्याकरणाचार्य नेने पं० गोपालशास्त्रि विरचित सरला टिप्पण्या सहिता । "स्वलेखनप्रकार-पङ्क्तिलेखनप्रकाराख्य परिशिष्ट सहिता च । आप्रत्ययान्तो भागः । (व्या० वि० १४) रु०

१२० कात्यायनशुल्बसूत्रम् । कर्कभाष्य-महिधरवृत्ति सहितम् । (कर्म० वि० १४) रु०

१२१ व्यक्तिविवेकः । श्रीराजानकमहिमभट्टकृतः । श्रीराजानकरुय्यककृत व्याख्यया साहित्याचार्य पं० श्रीमधुसूदनशास्त्रिरचित मधुसूदनीविवृत्या च समुद्भासिता रु०

१२२ श्राद्धविवेकः । श्रीरुद्रधरकृतः । वेदाचार्य प० अनन्तरामशास्त्रि कृत टिप्पणी सहितः । (कर्म० वि० १३) रु०

१२३ सांख्यतत्त्वकौमुदी । पण्डितराज श्रीराजेश्वरशास्त्रिद्राविड महोदयनामाज्ञया न्यायाचार्य श्रीहरिराम शुक्ल विरचितया "सुषमाख्य" कौमुदी व्याख्यया समलङ्कृता । (सांख्य वि० २) रु०

१२४ वाक्यपदीयम् । श्रीमद्भर्तृहरिमहावैयाकरण विरचितम् । न्याय-व्याकरणाचार्य पं० श्री सूर्यनारायण शर्म शुक्लेन विरचितया भावप्रदीपाख्य व्याख्यया टिप्पणेन च संपादितम् । (ब्रह्मकाण्डम्) । (व्या० वि० १५) रु०

प्राप्तिस्थानम्-चौखम्बा संस्कृत पुस्तकालय, बनारस सिटी

November, 1937

THE

# CHOWKHAMBA SANSKRIT SERIES

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 479.

# अग्निष्टोमपद्धतिः ।

वामनाचार्यविरचिता कर्कानुसारिणी

आध्वर्यवपद्धतिः ।

नानाभाई इत्युपनामक रामकृष्णत्रिपाठिकृता

औद्गात्रपद्धतिः ।

तथा

रघुनाथद्विवेदिनिर्मिता शाङ्खायनसूत्रानुसारिणी

हौत्रपद्धतिः ।

# Agnistoma Paddhati

Consisting of (i) ĀDHVARYAVA PADDHATI by Vāmanāchārya, (ii) AUDGATRA PADDHATI by Rāmakṛṣṇa Tripāṭhī Nānābhāi and (iii) HAUTRA PADDHATI following the Sāmkhyāyana Sūtras by Raghunātha Dvivedī.

*Edited with notes etc., by*

PANDIT BHAGAVAT PRASĀDA S'ARMĀ,

Vedāchārya, Profesor of Veds.

Government Sanskrit College, Banaras.

FASCICULAS. III–३.

*PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT SERIES OFFICE,

*Banaras City.*

आध्वर्यवपद्धतिः ।

"ॐ द्यामग्रेणास्पृक्षऽ आन्तरिक्षं मध्येनाप्राः पृथिवीमुपरेणादृंहीः" (६।२) ।

या व इति मिनोत्यग्निष्ठां सम्प्रत्याहवनीयम् ।

"ॐ या ते धामान्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः ।

अत्राह तदुरुगायस्य विष्णोः परमं पदमवभारि भूरि" ( ६।३ ) ।

ब्रह्मवनित्वेति पांशुभिः पर्यूहति(१) ।

"ॐ ब्रह्मवनि त्वा क्षत्रवनि रायस्पोषवनि पर्यूहामि" ( ६।३ ) ।

औद्गात्रपद्धतिः ।

"नृमण ऊर्ध्वंभरसन्त्वोर्ध्वंभराद्दृशेयमि"ति ।

अग्नीषोमीयदिवसे अध्ययनं न कुर्युः ।

अथ प्रस्तोता अश्वत्थादियज्ञियवृक्षसम्बन्धिनीः प्रादेशमात्रीस्त्वक्प्रदेशे ( स्वप्रदेशे ) कुशतृणवद्दुन्नतपृष्ठाः काष्ठिका भित्वा तदन्तःप्रदेशे समाः पृथुत्वेनाङ्गुष्ठपर्वपरिमाणास्तीक्ष्णाग्राः ज्योतिष्टोमे एकविंशतिसङ्ख्यायुक्ताः कुशाः कारयित्वा कुङ्कुमादिगन्धैः प्रलिप्य क्षौमशाणकार्पासानामन्यतमेन वसनेन परिवेष्ट्यौदुम्बर्या उपरि वासयेत् ।

हौत्रपद्धतिः ।

"यदूर्ध्वस्तिष्ठा द्रविणेह धत्ताद्यद्वा क्षयो मातुरस्या उपस्थेो३म् ।

ॐ उच्छ्रयस्व वनस्पते वर्ष्मन्पृथिव्या अधि ।

सुमिती मीयमानो वर्चोधा यज्ञवाहसेो३म् ।(२)

समिद्धस्य श्रयमाणः पुरस्ताद्ब्रह्म वन्वानो अजरं सुवीरम् ।

आरे अस्मदमतिं बाधमान उच्छ्रयस्व महते सौभगायेो३म्(३) ।

जातो जायते सुदिनत्वे अह्नां समर्य आ विदथे वर्द्धमानः ।

---

( १ ) अत्र मीमांसा—

पर्यूहणाद्यञ्जनादि न स्यात्स्याद्वाऽत्र पूर्ववत् ।

न स्याददृष्टादृष्टभावादविरोधाच्च तद्भवेत् ।। ( जै० न्या० मा० १०।१।४१ )

( २ ) उच्छ्रीयमाणायेत्युक्त उच्छ्रयस्व वनस्पते ( ऋ०३।८।३ ) समिद्धस्य श्रयमाणः पुरस्तात् ( ऋ०३।८।२ ) जातो जायत ( ऋ०३।८।५ ) ऊर्ध्व ऊषुण (१।३६।१३) ऊर्ध्वो नः ( शां०श्रौ०५।१५।३ ) । इति ।

अत्र मीमांसा—

उद्दिवेत्युच्छ्रयस्वेति विकल्पो वा समुच्चयः ।

विकल्पः स्मारकत्वैक्यदाकारान्यत्वतोऽन्तिमः ॥

उच्छ्रयस्व समिद्धस्येत्यादीनां किं विकल्पनम् ।

समुच्चयो वा कार्यैक्याऽद्यायोऽनुस्मृतयेऽन्तिमः ॥(जै०न्या०मा०१२।३।१८।)

( ३ ) ऋ० ३।८।२ ॥

आध्वर्यवपद्धतिः।

ब्रह्म दृꣳहेति मैत्रावरुणदण्डेन समन्तं त्रिः पर्यृषति। सकृन्मन्त्रेण द्विस्तूष्णीम्।

"ॐ ब्रह्म दृꣳह क्षत्त्रं दृꣳहायुर्दृꣳह प्रजान्दृꣳह" (६।३)।

समं (मां) भूमि (मि) कृत्वाऽद्भिरवसिच्य विष्णोः कर्माणीति वाचयति यूपमन्वारब्ध यजमानम्।

यूपमन्वारभस्व।

"ॐविष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे।

इन्द्रस्य युज्यः सखा" (६।४)।

इति ब्रूहि।

यजमानो यूपमन्वारभ्य।

"ॐविष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे।

इन्द्रस्य युज्यः सखा" (६।४)।

तद्विष्णोरिति चषालमीक्षमाणम्।

चषालमीक्षस्व।

"ॐतद्विष्णोः परमम्पदं सदा पश्यन्ति सूरयः।

दिवीव चक्षुराततम्" (६।५)।

इति ब्रूहि।

यजमानश्चषालमीक्षमाणः—

"ॐ तद्विष्णोः परमम्पदꣳ सदा पश्यन्ति सूरयः।

दिवीव चक्षुराततम्" (६।५)।

परिवीयमाणायानुवाचयति।

यूपाय परिवीयमाणायानुब्रूहि।

हौत्रपद्धतिः।

पुनन्ति धीरा अपसो मनीषा देवया विप्र उदियर्ति वाचो३म्(१)।

ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता।

ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहो३म्।(२)

ऊर्ध्वो नः पाह्यंहसो नि केतुना विश्वं समत्रिणं दह"।

विरमेत्।

ततः परिवीयमाणायानुब्रूहीत्युक्ते—

'कृधी न ऊर्ध्वाञ्चरथाय जीवसे विदा देवेषु नो दुवो३म्(३)।

युवा सुवासाः परिवीत आगात्स उ श्रेयान्भवति जायमानः।

तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तो३म्।(४)

(१) ऋ०३।८।५। (२) ऋ०१।३६।१३। (३) ऋ० १।३६।१४। (४) ऋ०३।८।४।

आश्वलायनपद्धतिः ।

त्रिगुणा त्रिव्यामा कौशी रशना तया नाभिमात्रे त्रिवृतं परिव्ययति (१) परिवीरसीति ।

"ॐपरिवीरसि परि त्वा दैवीर्विशो व्ययन्तां परीमं यजमानꣳ रायो मनुष्याणाम्" ( ६।६ ) ।

सꣳसृज्यान्यतरस्यामन्तं प्रवेशयति ।

यूपशकल(२)मस्यामवगूहत्युत्तरेणाग्निष्ठां दिवः सूनुरसीति ।

"ॐदिवः सूनुरसि" ( ६।६ ) ।

[ वर्षिष्ठाद्वरिष्ठं वितष्टं द्वादशं निदधात्येष त इति यूपैकादशिनीपक्षे ।

ॐ एष ते पृथिव्याँल्लोक आरण्यस्ते पशुः" ( ६।६ ) । ]

बहुषु यथास्वम् ।

तूष्णीं वाससा यूपं परिवेष्टयति ।

उपाकरणमन्यत्र विकल्पेनाग्नीषोमीये ।

सवनीये=सुत्याहे नित्ये । ते च सन्नियोगशिष्टे ।

तत्र करणपक्षे—

उपावीरसीति तृणमादाय ।

"ॐउपावीरसि" ( ६।७ ) ।

तेन (३)पशूनुपस्पृशत्युपदेवानिति ।

हौत्रपद्धतिः ।

युवा सुवासाः परिवीत आगात्स उ श्रेयान्भवति जायमानः ।

तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तो३म् ।

---

( १ ) एते परिव्ययणादि संस्कारा उपशये यूपे न भवन्ति—

तथा हि मीमांसा—

संस्कारः स्यादुपशये न वा, यूपोक्तितोऽग्रिमः ।

न स्यान्नियोजनाभावात्तूष्णीं छेदेन यूपता । ( जै० न्या० मा० ७ । ३ । १३ )

रशनात्रिवृत्त्वादीनां सर्वपशुधर्मता मीमांसिता –

एकस्यैवोत सर्वत्र रशनावेष्टनादयः ।

अग्नीषोमीय एवैते क्रमाल्लिङ्गादितोऽन्तिमः । ( जै० न्या० मा० ३।६।१८ ) ।

( २ ) अयमेव स्वरुशब्दवाच्य इत्युक्तं प्राक् ।

( ३ ) अत्र मीमांसा—

अग्नीषोमीयसवनीयानुबन्ध्यपशुष्वमी । उपाकरणमुख्यास्तु धर्माः साधारणा न वा ॥

ज्योतिष्टोमप्रकरणे पाठात्साधारणा अमी । पशुधर्मोपदेशात्सोमयागे ते स्युर्निरर्थकाः ॥

अग्नीषोमीयधर्मत्वं तेषां स्थानात्प्रसिद्ध्यति । द्वयोरितरयोः पश्वोः प्राप्यन्ते चोदकेन ते॥

( जै० न्या० मा० ३।६।१३-१९ )

अत्र पशुः कात्यायनपरिशिष्टोक्तच्छाग एव ग्राह्यः ।

आध्वर्यवपद्धतिः ।

"ॐउप देवान्दैवीर्विशः प्रागुरुशिजो वह्नितमान् ।
देव त्वष्टर्व्वसु रम हव्या ते स्वदन्ताम् ।
रेवती रमध्वम्बृहस्पते धारया व्वसूनि" ( ६।७-८ ) ।
द्विप(शौ)शुपदे तेनैव तृणेन पैन्द्राग्नं पशुमुपस्पृशति ।
"ॐउप देवान्दैवीर्विशः प्रागुरुशिजो वह्नितमान् ।
देव त्वष्टर्वसु रम हव्या ते स्वदन्ताम् ।
रेवतीरमध्वं बृहस्पते धारया वसूनि" ।( ६।७-८ )
तृणं प्रक्षिपति वेद्याम् ।

हौत्रपद्धतिः ।

युवा सुवासाः परिवीत आगात्स उ श्रेयान् भवति जायमानः ।
तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तो३म्"(१) ।

इति यूपाञ्जनम् ।

---

तथाहि परिशिष्टम् ।

अथातः संप्रवक्ष्यामि छागानां लक्षणं शुभम् ।
अशुभं चैव वर्ज्यानां तत्प्रवक्ष्याम्यतःपरम् ॥
एकवर्णो द्विवर्णश्च बहुवर्णस्तथैव च ।
रोहितो यस्तु व छागः स पशुः कुलमुद्वहेत् ॥

यस्तु श्वेतमुखश्छागः कृष्णग्रीवः सितोदरः । पशूनां चैव मुख्यः स्यात्पशुकामस्तमालभेत् ।
मञ्जिष्ठवर्णसङ्काशः शृङ्गैस्तुचतुरङ्गुलः । स च्छागः पालको नाम महान्, पालयते धनम् ॥
विकटो वामनो देहस्साहस्राः पशवस्त्रयः । शोधयन्ति महायज्ञं महच्च लभते फलम् ॥
यस्ते तु दक्षिणे पार्श्वे मण्डलं यस्य वै भवेत् । छागः सर्वार्थको नाम सर्वकामफलप्रदः ॥
श्वेतं तु दक्षिणे पार्श्वे भवेद्वै यस्य मण्डलम् । स छागो विजयो नाम अमित्रदमनः स्मृतः ॥
श्वेतकृष्णप्रविष्टार्थां कृष्णः श्वेतः प्रतिष्ठितः प्रविष्टितौ तु तौ छागौ प्रतिष्ठार्थे तु याज्ञिकैः ॥
पड्डुन्नतः पडावर्तः शुक्लशाखो महोदरः । स्निग्धानुलोमवर्णश्च छागः सर्वार्थसाधकः ॥
लोहकर्णः पुष्पवर्णो यस्य चौतवद्भयं भवेत् । प्लीहाकर्णस्त्वकर्णो वा शुण्ठाकर्णस्तथैवच ॥
नील. सप्तशफोऽथ्यङ्गः शुक्लवर्णस्तथैवच । दारिद्र्यं पुत्रनाशश्च मरणं चैव तादृशे ॥
एकवर्णास्त्रयः पादास्तुरीयस्त्वन्यथा भवेत् । स छागो मुशली नाम अधस्तान्नयते कुलम् ॥
कृष्णाङ्गः कृष्णपूर्वाभ्यां कृष्णौ पादः प्रतिष्ठितः छागो वैश्रवणो नाम सौभाग्यायोपतिष्ठति ॥
न दन्ताभ्यां न शृङ्गाभ्यां छागः पशुर उच्यते । यः प्रयुक्तामदश्छागः स पशुद इति स्मृतः ॥
*त्रिः शिवग्निश्विदिशक्षीणं श्वेतं कृष्णमशापतिम् । वार्भीणसं तु सं प्राहुर्वर्जयेद्यज्ञकर्मणि ॥*
तस्मादेवं विदित्वा तु लक्षणं पशुयूपयोः । यज्ञविद्यज्ञकर्माणि सोऽध्वर्युः कर्तुमर्हति ॥

( १ ) अत्राग्नीषोमीयपशौ "परिवीरसि" ( शु० य० सं० ६ । ६ ) इत्यनेन करणमन्त्रेणाध्वर्युर्यूपस्य रशनया परिव्ययणं करोति । तदानीं क्रियमाणं | तत्परिव्ययणं होता "युवा सुवासाः" इत्यनेन मन्त्रेणानुवदति तदेतदुभयं चोदकपरम्परया ( ज्योतिष्टोमाद् द्वादशाहे ततो गवामयने ततः ) कुण्डपायिनामयने ( का० श्रौ० २४।४।११ ) प्राप्तम् ।

आध्वर्यवपद्धतिः ।

## ( अग्निमन्थनम् । )

अग्निं मन्थत्या होमात्करोति ।
अग्नेर्जनित्रमिति शकलमादाय ।
"ॐ अग्नेर्जनित्रमसि" (५।२)।
वेद्यां करोति तूष्णीमुदगग्रम् ।
वृषणाविति कुशतरुणे तस्मिन् ।
"ॐवृषणौ स्थः" (५।२)।
उर्वश्यसीत्यधरारणिं तयोः ।
"ॐउर्वश्यसि" (५।२)।
आयुरसीत्युत्तरस्याऽऽज्यस्थालीऽवसऽवस्पृश्य ।
"ॐआयुरसि" (५।२)।
पुरूरवा इत्यभिनिधानं तया ।
"ॐपुरूरवा असि" (५।२)।
अग्नये मथ्यमानायाऽनुवाचयति ।
"ॐअग्नये मथ्यमानायानुब्रूहि"।

हौत्रपद्धति ।

## ( अग्निमन्थनम् । )

अथाग्निमन्थनम् ।

(१) तत्र पूर्वस्यां द्वार्येव तिष्ठन्नग्निमन्थनीया अन्वाह ।

"अग्नये मथ्यमानायानुब्रूहि" इत्युक्ते—

---

तत्राध्वर्योर्होतुश्च समास आम्नात "यो होता सोऽध्वर्यु" इति । तत्रैको होता तौ द्वौ मन्त्री प्रयोक्तुमशक्तः किं हौत्रं ब्रूयादुताध्वर्यवमिति संशये—"यो होता सोऽध्वर्यु" रित्यत्र होतारमनूद्याध्वर्यवविधानादध्वर्युकार्यं होत्रानुष्ठेयम् । ततः 'परिवीरसि' इत्यनेन करणमन्त्रेण होता यूपपरिव्ययणं कुर्वीत । तदानीं स्वस्य चोदकप्राप्तं हौत्रमपि होता न त्यजेत् । तस्मात् क्रियमाणे परिव्ययणं "युवा सुवासा" इत्यनेन मन्त्रेण होतानुवदेदिति पूर्वपक्षे द्वयोरध्वर्युहोत्रोरुचितं कर्म द्वयमेको होता युगपत्कर्तुं न शक्नोति ततोऽन्यतरस्या पदयम्माविनि त्यागे चोदकप्राप्तं हौत्रमेव त्यजेत् । आध्वर्यवं तु "यो होता सोऽध्वर्यु" रित्यनेन प्रापितत्वादनुष्ठेयमेवेति सिद्धान्त । तथाहि सूत्रम् । विप्रतिषेधे करण समवायविशेषादितरमन्यस्तेषां यतो विशेष स्यात् ( जैं० सू० ३।८।१७ )।

( १ ) "उपाकरणमन्थने चे" ( का० श्रौ० ६।४।२३ ) ति सूत्राद्वैकल्पिका यद्योऽग्निमन्थनीया । होता अन्तरेण चात्वालोत्करौ सञ्चरस्तेन प्रविश्य वेदे पश्चाद्वस्थितोऽ( मन्त्ररत्नमाला ) ग्निमन्थनीया अन्वाह "तिष्ठन्न्वाहाग्निमन्थनीया" ( शां० श्रौ० ५।१५।२ ) इति सूत्रात् । उत्सर्गस्या "सौमन्त्राय वाङ्क्य" ( शां० श्रौ० १।१।१९ ) मित्यप्य निवृत्तिः ।

आध्वर्यवपद्धतिः ।

मन्थति गायत्रेणेति प्रतिमन्त्रं त्रिः प्रदक्षिणम् ।
"ॐगायत्रेण त्वा च्छन्दसा मन्थामि ।
ॐत्रैष्टुभेन त्वा च्छन्दसा मन्थामि ।
ॐजागतेन त्वा च्छन्दसा मन्थामि" (५।२) ।
जाते जातायेति ।
"ॐअग्नये जातायानुब्रूहि" ।
प्रह्रियमाणायेति प्रास्यन् ।

हौत्रपद्धतिः ।

अभि त्वा देव सवितरीशानं वार्याणाम् ।
सदावन्भागमीमहो३म्(१) ।
अभि त्वा देव सवितरीशानं वार्याणाम् ।
सदावन्भागमीमहो३म् ।
अभि त्वा देव सवितरीशानं वार्याणाम् ।
सदावन्भागमीमहो३म् ।
मही पृथिवी च न इमं यज्ञं मिमिक्षताम् ।
पिपृतां नो भरीमभो३म्(२) ।
त्वामग्ने पुष्करादध्यथर्वा निरमन्थत ।
मूर्ध्नो विश्वस्य वाघतो३म्(३)
तमु त्वा दध्यङ्ङृषिः पुत्र ईधे अथर्वणः ।
वृत्रहणं पुरन्दरो३म्(४)
तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमं" ।
अत्र विरमेत् ।
ततो "जातायानुब्रूहि" इत्युक्ते—
'धनंजयं रणेरणो३म् ।(५)
उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाजनि" ।
विरमेत ।
हस्तेन धार्यमाणं दृष्ट्वा—
"धनजयो रणे रणो३म्(६) ।
आ यं हस्ते न खादिनं शिशुं जातं न बिभ्रति" ।
अत्रारमेत् ।
ततः 'प्रह्रियमाणायानुब्रूही'त्युक्ते—

(१) ऋ० १।२४।३ । (२) ऋ० १।२२।१३ । (३) ऋ० ६।१६।१३ ।
(४) ऋ० ६।१६।१४ । (५) ऋ० ६।१६।१५ । (६) ऋ० १०।७४।३ ।

आध्वर्यवपद्धतिः ।

"ॐअग्नये प्रह्रियमाणायानुब्रूहि" ।

भवतन्न इति मास्यत्युत्तरवेदावग्नावग्निम् ।

"ॐभवतं नः समनसौ सचेतसावरेपसौ ।
मा यज्ञꣳ० हिꣳ०सिष्टमा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः" (५।३) ।

अग्नावग्निरिति जुहोति स्थाल्याः स्रुवेण ।

"ॐअग्नावग्निश्चरति प्रविष्ट ऽऋषीणाम्पुत्रोऽ अभिशस्तिपावा ।
स नः स्योनः सुयजा यजेह देवेभ्यो हव्यꣳ०सदमप्रयुच्छन्त्स्वाहा"(५।४) ।

इदमग्निभ्याम्० ।

भद्रय इति देवः ।

एतद्व्रतं विकल्पेन ।

## ( पशुनियोजनादि । )

द्विगुणरशनया द्विव्यामया कौश्या पाशं कृत्वाऽन्तरा श्रृङ्गमिदक्षिणं बध्नात्यृतस्य त्वेति ।

हौत्रपद्धतिः ।

विशामग्निं स्वध्वरो३म् ।(१)

प्र देवं देवतीतये भरता वसुवित्तम ।

आ स्वे योनौ नि षीदतो३म् (२)

आ जातं जातवेदसि प्रियं शिशीतातिथिम् ।

स्योन आ गृहपतो३म्(३) ।

अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा ।

हव्यवाड् जुह्वास्यो३म(४)

त्वं ह्यग्ने अग्निना विप्रो विप्रेण सन्त्सता ।

सखा सख्या समिध्यसे३म् (५) ।

तं मर्जयन्त सुक्रतुं पुरो यावानमाजिषु ।

स्वेषु क्षयेषु वाजिनो३म्(६)

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।

ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवो३म् ।

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।

ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवो३म्

---

(१) ऋ० ६।१६।४० । (२) ६।१६।६१ । (३) ऋ० ६।१६।४२ ।
(४) ऋ० १।१२।६ । (५) ऋ० ८।४३।१४ । (६) ऋ० ८।८४।८।

आध्वर्यवपद्धतिः ।

"ॐऋतस्य त्वा देवहविः (१)पाशेन प्रतिमुञ्चामि धर्षा मानुषः" (६।८)।

देवस्य त्वेति यूपे (२)नियुनक्ति ।

"ॐदेवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।
अग्नीषोमाभ्याञ्जुष्टं नियुनज्मि" (६।९)।

पक्षे ऐन्द्राग्नस्य द्विगुणरशनयेत्यादि ।

नियोजने-

"इन्द्राग्निभ्यां जुष्टं नियुनज्मि" ।

प्रोक्षणीं (व्रीहिं) हस्ते कृत्वा-

"ब्रह्मन् हविः प्रोक्षिष्यामि" ।

"प्रोक्ष"त्यनुज्ञातो ।

अद्भ्यस्त्वेति पशु प्रोक्षणीभिः प्रोक्षति ।

"ॐ अद्भ्यस्त्वौषधीभ्योऽनु त्वा माता मन्यतामनु पिता-
नु भ्राता सगर्भ्योऽनु सखा सयूथ्यः ।
अग्नीषोमाभ्यान्त्वा जुष्टं प्रोक्षामि" (६।९)।

हौत्रपद्धतिः ।

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः॥(३)

---

(१) अत्र मीमांसा—

पाशे पाशान्द्वयोः पश्वोरेको मन्त्रोऽथवा द्वयम् । एकैकत्वे द्वयत्वे किमेकस्योहोऽथवा द्वयोः ॥
एकेनैव कृतार्थत्वादेको मन्त्रस्तदापि च । अविकारेण बह्वर्थं एकार्थः समवायतः ॥
प्राकृतत्वादुभाभ्यूह्य एकार्थोऽत्र विवक्षया । बह्वर्थोऽप्यूहनीयोऽत्र द्वयोः शक्तेरक्लृप्तितः ॥
उत्कृष्यो न वा मन्त्रो बह्वर्थोऽसंगतत्वतः । उत्कर्षो न विकल्प्योऽसौ गुणे त्वन्यायकल्पना ॥
(जै० न्या० मा० ९।३।४-७)।

(२) अत्र मीमांसा—

अमुख्ये संस्कृते मुख्यलाभे किं ग्राह्यमेतयोः ।
अमुख्यस्तक्षणाद्यूपः खादिरस्तक्षणात्पुनः ॥
पशौ नियुक्ते खादिरलाभे कार्यं पुनर्न वा ।
साद्गुण्याय पुनः कार्यं मुख्यात्तुच्छिर्गात्र हि ॥
अमुख्यमुख्ये संस्कारयोग्यायोग्ये तदा तु किम् ।
आद्यो बहुगुणालोपान्न मुख्यायास्तु लोपनम् ॥
नियोजनेऽप्ययोग्यश्चेत्खादिरः किं तदा भवेत् ।
मुख्यत्वेन स एव स्याच्चद्वैपर्यन होवर ॥(जै० न्या०मा० ६।३।१८-२१)

(३) ऋ० १०।९०।१६ ।

आध्वर्यवपद्धतिः ।

पक्षे ऐन्द्राग्नस्य ।

"ॐ अद्भ्यस्त्वौषधीभ्योऽनु त्वा माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्यः ।

इन्द्राग्निभ्यां त्वा जुष्टं प्रोक्षामि" ( ६।९ ) ।

अपाम्पेरुरित्यास्य उपगृह्णाति पानार्थम् ।

"ॐ अपाम्पेरुरसि" ( ६।१० ) ।

आपो देवीरित्यधस्तादुपोक्षति ।

"ॐ आपो देवीः स्वदन्तु स्वात्तञ्चित्सद्देवहविः" ( ६।१० )

प्रोक्षणीनां निःशेषकरणम् ।

ऐन्द्राग्नपक्षे तमपि

"अपाम्पेरुरि"ति पाययित्वा

"आपो देवीरि"त्युपोक्षणे प्रोक्षणीनां निःशेषकरणम् ।

पवित्रे निधाय प्रणीतासु, उत्तरवेदेः पश्चादुपविश्य "होतरेही"ति होतारमामन्त्र्य होतृसदनं तत्रैव कृत्वा इध्ममेवादि करोत्याप्रयाजेभ्यः ।

तत्र विशेषः—

अववाघने सप्तदशेन वज्रेणेति ।

उत्तराघारमाघार्य प्रत्याक्रम्य उत्तरेणाहवनीयं पुर एत्य (१) जुह्वा

हौत्रपद्धतिः ।

इति परिधाय(२) ।

इत्यग्निमन्थनम् ।

अथाग्नीषोमीयैन्द्रा(ग्नयोः) ग्न्योः समानतन्त्रः पशुः ।

तत्र एहि होतरित्यादि तीर्थेन प्रविश्योत्तरवेदिसमीपे महावेदेर्द्विराक्रमणं कृत्वा ॐ प्रण्यादि सप्तदश सामिधेन्यः ।

आवाहने—

'आऽवह देवान्यजमानाय ।

---

( १ ) अत्र मीमांसा—

न पशावैष्टिकः स्याद्वा, न कपालाद्यभावतः । स्याद्वा कर्मप्रकृतित्वात्तुल्यसाम्यतः ।
( जै० न्या० मा० ८।१।८ ) ।

( २ ) यद्यपि चातुर्मास्यप्रकरणे वैश्वदेवाग्निमन्थने "त्वं भद्रयन्त सुक्रतु" ( ऋ० ८। ८१।८ ) मित्येषवाग्निमन्थनायानां परिधानाया दृश्यते तथापि पशौ "यज्ञेन यज्ञ ( ऋ० १०।९०।१६ ) मित्येवैव परिधानीया "अथ यत्र पशुरालभ्यते तदेतां पराचीमनूच्य यज्ञेन यज्ञमयजन्त देवा इति । त्रिष्टुभा परिदधाती" ( कौ० ब्रा० १०।२ ) ति श्रुतेः । अग्नीषोमीयप्रकरणे "यज्ञेन यज्ञमिति परिधाने" ( कौ० ब्रा० ७।१६।९ ) ति सूत्राच्च तस्यैवैव परिधानीया ।

आध्वर्यवपद्धतिः।

पशुं पूर्वेण० समनक्ति ललाटांऽसश्रोणिषु सन्त इति प्रतिमन्त्रम् ।

'ॐ सन्ते प्राणो वातेन (१)गच्छताम्" (६।१० )।

ललाटे।

"ॐ समङ्गानि यजत्रैः गच्छताम्" ( ६।१० )।

दक्षिणेऽंसे ।

"ॐ समङ्गानि यजत्रैः गच्छताम्" ( ६।१० )।

वामेऽंसे ।

"ॐ सं यज्ञपतराशिषा गच्छताम्" ( ६।१० )।

दक्षिणश्रोणौ ।

"ॐ सं यज्ञपतिराशिषा गच्छताम्" ( ६।१० )।

वामश्रोणौ।

यथेतमेत्य जुहूं निधायेतरां वेदोपग्रहेण इध्मसन्नहनान्यादायोत्करे तिष्ठन्नाश्राव्य प्रत्याश्राविते-

"ॐ अग्निर्देवो दैव्यो होता देवान्यक्षद् विद्वाँश्चिकित्वान् मनुष्वद् भरतवत् (शाण्डिल्यवत् असितवत् देवलवत्) ब्रह्मण्वदा च वक्षद् ब्राह्मणा ऽस्य यज्ञस्य प्राविताऽ अमुकशर्मा होता मानुषः"(का०श्रौ३।२।१३)

हौत्रपद्धतिः ।

नाज्यभागौ भवतो वृधन्वन्तौ वा।

अग्नीषोमा ( वा ) वह आ ४ वह वनस्पतिमा४वह देवानित्यादि ।

इत्यनाज्यभागपक्षे ।

आज्यभागपक्षे तु—

आ ४ वह देवान्यजमानाय अग्निमग्न आ४वह सोममा४वह अग्नीषोमावा४वह इन्द्राग्नी आ४वह (२)वनस्पतिमा४वह देवानित्यादिसमानम् ।

---

(१) अत्र मीमांसा—

गच्छतामिति शब्दस्यानुषङ्गोऽस्ति न चोपरि ।
संयज्ञपतिरित्यत्र योग्यत्वात्सोऽस्ति पूर्ववत् ।
तदेकवचनं मध्यमन्त्रेऽङ्गानीत्यनेन हि ।
नान्वेति तद्व्यवायेन नोपरिष्टाद्व्यनुपश्यते ॥
( जै० न्या० मा २।१।३८ ) ॥

( २ ) "पशुदेवतामावाह्यानन्तरं वनस्पतिं" (शा० श्रौ० ६ । १६ । ८ ) रितिसूत्रात्सर्वत्र पशुदेवतावाहनादूर्ध्वं वनस्पतेरावाहनं वेदितव्यम् ।

आध्वर्यवपद्धतिः ।

प्रकृतिवत्प्रवृत्य होतारमाश्राव्याह ।

"अग्निर्हं दैवीनां विशां पुर एताऽयं यजमानो मनुष्याणां तयोरस्थूरि गार्हपत्यं दीदयच्छतंठ० हिमाद्वायू राधांऽसीत् सम्पृञ्चानावसम्पृञ्चाना तन्वः" ।

इति यजमानस्य वरणम् ।

क्रीते सोमे ( प० ६६ प ) दण्डो न दत्तश्चेदत्र होतृयजमानौ स्वस्वशाखीयमन्त्रेण युगपन्मैत्रावरुणाय दण्डं प्रयच्छतः (१) ।

"ॐ मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा प्रयच्छामि" ।

तत्र दत्तश्चेदत्र होतैव ददाति ।

सम्मृष्टा उपविशतः ।

सदस्युपविष्टेन होत्रा घृतवतीमित्युक्ते स्रुचावादायातिक्रम्य(२)एकादश प्रयाजान् यजति ।

हौत्रपद्धतिः ।

ततो होता प्रकृतिवदध्वर्युमाग्नीध्रं च सम्मृश्य पदमोर्वीरंहसः पान्त्विति जपित्वा तिष्ठति सति ।

ततो मैत्रावरुणस्तीर्थेन प्रविश्यापरेण होतारमागत्य होतुर्दक्षिणेन पूर्वार्द्धे स्थितो यजमानेन दीयमानं दण्डं प्रतिगृह्णीयात ।

ततो यजमानो—

"मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा प्रयच्छामि यज्ञस्यारिष्ट्या" इति मन्त्रेण दण्डं प्रयच्छेत् ।

"मित्रावरुणयो स्त्वे"त्यनेन मन्त्रेण प्रशिषा "प्रतिगृह्णामी"त्यूहितेन (मन्त्रेण) मैत्रावरुणः प्रतिगृह्य दक्षिणेन होतारं दक्षिणावृत्पूर्वः प्रतिपद्यत उत्तरेण हविर्द्धाने दक्षिणेनाग्नीध्रीयं धिष्ण्यं गत्वा पूर्वया द्वारा सदः प्रपद्य स्वस्य धिष्ण्यस्य पश्चादुपविशेत् ।

होता च एवमेव पृष्ठतो गत्वा स्वस्य धिष्ण्यस्य पश्चाद्गत्वा पञ्चीमावृतमित्यादि प्रकृतिवदुपविशेत ।

ततः स्रुगादापनान्तं प्रकृतिवत् ॥

तत एकादश प्रयाजान्यजति । प्रैषा मैत्रावरुणस्य सम्प्रैषे च पुरोऽ-

---

( १ ) अत्र मीमांसा—

मैत्रावरुणे दण्डदानन्य प्रतिपत्तिता । तदार्थकर्मताऽऽयोऽस्तु धारणे कृतकृत्यतः ॥
प्रयुक्तोपयुक्तसंस्कारादुपयोक्त्रर्थसत्क्रिया । स्थिरत्वा प्रैषानुवचने दण्डोऽपेक्ष्योपकर्मं सत् ।

( जै० न्या० मा० ४।२।१२-१३

( २ ) अत्र मीमांसा—

एकादशप्रयाजाः किं प्रत्येकं स्यादुतान्यथा ।

आध्वर्यवपद्धतिः ।

ओ३श्रा३वय ।

अस्तु श्रौ३षट् ।

समिधः प्रेष्य ।

द्वितीयादिषु प्रेष्येत्येव ।

हौत्रपद्धतिः ।

नुयाजयाः तथानुवचनानि । प्रहाणस्तिष्ठन् दण्डं पराक्रम्य कुब्जः इव प्रणतोऽनुब्रूयादिति श्रुतेः ।

अध्वर्युणा समिधः प्रेष्येत्युक्ते—

मैत्रावरुणः—

होतायक्षदग्निं समिधा सुषमिधा समिद्धं नाभा पृथिव्याः संगथे वामस्य ।

वर्ष्मन्दिव इळस्पदे वेत्वाज्यस्य होतर्यज ।

होता(१)

भूर्भुवः स्वः३ यजामहे (२)समिद्धो अद्य मनुषो दुरोणे देवो देवान्यजसि जातवेदः ।

आ च वह मित्रमहश्चिकित्वान्त्वं दूतः कविरसि प्रचेताश्वौ३षट् ।

ओजः सहः सह ओजः स्वः ।

मैत्रावरुणः—

होता यक्षत्तनूनपातमदितेर्गर्भं भुवनस्य गोपां ।

मध्वाद्य देवो देवेभ्यो देवयानान्पथो अनक्तु वेत्वाज्यस्य होतर्यज ।

---

सङ्ख्यावृद्धिरिहाऽऽद्योऽस्तु प्रतिमुख्यं गुणो यतः ।
प्रत्येकं समुदाये वा स्वरूपेण न सिद्ध्यति ।
सङ्ख्यावृद्धिः प्रयोगात्तु साऽऽवृत्त्या संभविष्यति ।
(जै० न्या० मा० ५।३।१-२)।

प्रयाजेष्वपकर्षोऽनुयाजेषूत्कर्ष इष्यताम् । श्रुतमात्रे तदन्तेषु तदाद्येषु च वाग्रिमः ।
अन्यथा मुख्यकालत्वान्मैव व्युत्क्रमशक्तितः । प्रयाजान्ते ह्यनुयाजादिके चैतौ समूहके ।
( जै० न्या० मा० ५।१।२४-२५ ।

प्रयाजैराद्यत्वादिविशेषविधिभिर्युते।पश्चादौ सामिधेन्यादिविध्यन्तो नास्त्युतास्त्यसौ।
विशिष्टाङ्गविधौ नासौ चोदकस्याप्रवृत्तितः।लाघवाद् गुणमात्रस्य विधेः सोऽस्त्यतिदेशतः।
( जै० न्या० मा० १०।३।१-२ )।

( १ ) होता प्रतिप्रैषं यदार्षेयो यजमानो भवति तदुपदिष्टा आप्रीसंज्ञकाः प्रयाजयाज्याः पठेत् । अथवा "समिद्धो अद्य मनुष" इति सर्वेषाम्। स्यात्तु नाराशंसीवत्त्रया जस्य । कातीयसूत्रे तु "समिद्धो अद्ये त्येतावतीभिराप्रीभिर्यजे" ( का०श्रौ०सू० ) इत्य त्रैतावतीभिरिति पारिभाषिकत्वादग्नीषोमीयादिपशुमात्रेषु समिद्धो अद्येत्याप्रियाजा एव नार्षेयप्रयाजाः । ( २ ) ऋ० १०।११०।१।

आध्वर्यवपद्धतिः ।

चतुर्थसप्तमदशमेषु समानयनम् ।

आद्यानां चतुर्णां प्रकृतिवत्प्रयाजानुमन्त्रणानि त्यागाश्च ।

पंचमप्रभृति पञ्चमवत्प्रयाजानुमन्त्रणम् ।

त्यागे विशेषः ।

हौत्रपद्धतिः ।

होता—

भूर्भुवर्ये४यजामहे (१)तनूनपात्पथ ऋतस्य यानान्मध्व समञ्जन्स्वदया सुजिह्व ।

मन्मानि धीभिरुत यज्ञमृन्धन्देवत्रा च कृणुह्यध्वरं नाऽ३वौ३षट्, ओजः सहः सह ओजः स्वः ३ ।

नाराशंसयाजिनां तु द्वितीयं नाराशंसं प्रथमाह ।

अध्वर्युः-प्रेष्य—

मैत्रावरुणः—

होतायक्षन्नराशंसं नृशस्तं नॄः प्रणेत्रं ।

गोभिर्वपावान्स्याद्वीरैः शक्तीवानृथैः प्रथमया वा हिरण्यैश्चन्द्री वेत्वाज्यस्य होतर्यज ।

होता तु स्वस्वार्षेयस्यां याज्यां पठेत् । येषां स्वा नास्ति तेषां "न(२)राशंसस्य महिमानमि"त्येषा ।

मैत्रावरुणः—

होतायक्षदग्निमीळईलितो देवोदेवाँऽआवक्षद्दूतो हव्यवाळमूरः ।

उपेमं यज्ञमुपेमां देवो देवहूतिमवतु वे त्वाज्यस्य होतर्यज ।

होता—

भूर्भुवर्ये ४ यजामहे(३) आजुह्वान ईड्यो वन्द्यश्चा याह्यग्ने वसुभिः सजोषाः ।

त्वं देवानामसि यह्व होता स एनान्यक्षीषितो यजीया ४वौषट्, ओजः सहः सह ओजः स्वः ।

मैत्रावरुणः—

---

(१) ऋ० १०।११०।२

(२) अथायं प्रयोगः । होता—

भूर्भुवर्ये ४ यजामहे नराशंसस्य महिमानमेषामुप स्तोषाम यजतस्य यज्ञैः ।

ये सुक्रतवः शुचयो धियन्धाः स्वदन्ति देवा उभयानि हव्या "( ऋ० ७।२।२ ) वौ ४ षट्, ओज सहः सह ओजः स्व ।

(३) ऋ० १०।११०।३।

आध्वर्यवपद्धतिः ।

इदं द्वाभ्यां० ।

इदमुषासानक्ताभ्याम्० ।

हौत्रपद्धतिः ।

होतायक्षद्बर्हिः सुष्टरीमोर्णम्रदा अस्मिन् यज्ञे वि च प्र च प्रथतां स्वासस्थं देवेभ्यः ।

एमेनदद्य वसवो रुद्रा आदित्याः सदन्तु प्रियमिन्द्रस्यास्तु वीत्वाज्यस्य होतर्यज ।

होता—

भूर्भुवर्यें ४ यजामहे(१) प्राचीनं बर्हिः प्रदिशा पृथिव्या वस्तोरस्या वृज्यते अग्रे अह्नां ।

व्यु प्रथते वितरं वरीयो देवेभ्यो अदितये स्योनां ४ वौ ४ षट्, ओजः सहः सह ओजः स्वः ।

ओजः सहः सह ओजः स्वः ।

मैत्रावरुणः—

होतायक्षद्दुर ऋष्वाः कवष्योकोषधावनी रुद्रा ताभिर्जिह्वतां विपक्षोभिः श्रयतां ।

सुप्रायणा अस्मिन्यज्ञे विश्रयन्तामृतावृधो व्यन्त्वाज्यस्य होतर्यज ।

होता—

भूर्भुवर्यें ४ यजामहे(२) व्यचस्वतीरुर्विया वि श्रयन्तां पतिभ्यो न जनयः शुम्भमानाः ।

देवीर्द्वारो बृहतीर्विश्वमिन्वा देवेभ्यो भवत सुप्रायणा ४ वौ ४ षट् ।

मैत्रावरुणः—

होतायक्षदुषासानक्ता बृहती सुपेशसा नृःपतिभ्यो योनिं कृण्वाने संस्मयमाने इन्द्रेण देवैरेदं बर्हिः सीदतां वीतामाज्यस्य होतर्यज ।

होता—

भूर्भुवर्यें ४ यजामहे(३) आ सुष्वयन्ती यजते उपाके उषासानक्तासदतां नि योनौ ।

दिव्ये योषणे बृहती सुरुक्मे अधि श्रियं शुक्रपिशं(४) दधाने ४ वौ ४ षट्, ओजः सहः सह ओजः स्वः ।

---

(१) ऋ० १०।११०।४ . (२) ऋ० १०।११०।५। (३) ऋ० १०।११०।६।

(४) अत्र "एकारौकारौ च प्रगृह्या" (शां० श्रौ० १।२।५) इति प्रकृतिभावाना "दाह इकारो भावो" (शा० श्रौ० १।२।४) न भवति ।

आध्वर्यवपद्धतिः ।

इदं दैवा(व्या)भ्यां होतृभ्याम्० ।
इदं तिसृभ्यो देवीभ्यो० ।
इदं त्वष्ट्रे०

हौत्रपद्धतिः ।

मैत्रावरुणः—

होतायक्षद्दैव्याहोतारा मन्द्रा पोतारा कवी प्रचेतसा ।

स्विष्टमद्यान्यः करदिषा स्वभिगूर्तमन्य ऊर्जा सतवसेमं यज्ञं दिवि देवेषु धत्तां वीतामाज्यस्य होतर्यज ।

होता—

भूर्भुवर्ये ४ यजामहे (१)दैव्या होतारा प्रथमा सुवाचामिमाना यज्ञं मनुषो यजध्य ।

प्रचोदयन्ता विदथेषु कारू प्राचीनं ज्योतिः प्रदिशा दिशन्ता ४ वौ ४ षट् ओजः सहः सह ओजः स्वः ।

मैत्रावरुणः—

होतायक्षत्तिस्रोदेवीरपसामपस्तमा अच्छिद्रमद्येदमपस्तन्वतां ।

देवेभ्यो देवीर्देवमपो व्यन्त्वाज्यस्य होतर्यज ।

होता—

भूर्भुवय ४ यजामहे(२)आनो यज्ञं भारती तूयमेत्विळा मनुष्वदिह चेतयन्ती ।

तिस्रो देवीर्बर्हिरेदं स्योनं सरस्वती स्वपसः सदन्तु ४ वौ ४ षट्, ओजः सहः सह ओजः स्वः ।

मैत्रावरुणः—

होतायक्षत्त्वष्टारमचिष्टमपाकं रेतोधां विश्रवसं यशोधां ।

पुरुरूपमकामकर्शनं सुपोषः पोषः स्यात्सुवीरो वीरैर्वेत्वाज्यस्य होतर्यज ।

होता—

भूर्भुवर्ये ४ यजामहे(३) य इमे द्यावापृथिवी जनित्री रूपैरपिंशद्भुवनानि विश्वा ।

तमद्य होतरिषितो यजीयान्देवं त्वष्टारमिह यक्षि विद्वा ४ न्वौ ४ षट् । ओजः सहः सह ओजः स्वः ।

---

(१) ऋ० १०।११०।७
(२) ऋ० १०।११०।८
(३) ऋ० १०।११०।९

आध्वर्यवपद्धतिः ।

इदं वनस्पतये० ।

दशैषा प्रयाजानाह शासमाहरेति प्रतिप्रस्थातारम् ।

तदाहृतं शासं पूर्ववद्धृत्वा यूपाच्च (१)स्वरुमादायाक्त्वोभौ जुहूमे ताभ्यां पशोर्ललाटमुपस्पृशति घृतेनाक्ताविति ।

"ॐ घृतेनाक्तौ पशूँस्त्रायथाम्" (६।११) ।

पक्षे ऐन्द्राग्नस्य च ।

यूपे स्वरुमवगुह्य शमित्रे असिं प्रयच्छन्नाह—

एषा ते प्रज्ञाताश्रिरस्तु ।

यथायथं प्रत्येत्य पूर्ववत् सादयित्वा स्रुचौ चात्वालमुत्तरेण शामित्रायोल्मिखति ।

तत्र पशु भूसंस्काराः ।

अग्नीदध्वर्युर्वा पर्यग्नयेऽनुवाचयति ।

पर्यग्नयेऽनुब्रूहि ।

होत्रपद्धतिः ।

मैत्रावरुणः—

होतायक्षद्वनस्पतिमुपावस्रक्षद्धियो जोष्टारं शशमं नरः ।

स्वदात्स्वधितिर्ऋतुथाद्य देवो देवेभ्यो हव्यवाड्वेत्वाज्यस्य होतर्यज ।

होता—

भूर्भुवर्ये ३यजामहे(२)उपावसृज त्मन्या समञ्जन्देवानां पाथ ऋतुथा हवींषि ।

वनस्पतिः शमिता देवो अग्निः स्वदन्तु हव्यं मधुना घृतेना३वौ षट्, ओजः सहः सह ओजः स्वः ।

दशमिश्चरित्वा पर्यग्नयेऽनुब्रू३ हीत्युक्ते—

मैत्रावरुणः—

(३)अग्निर्होता नो अध्वरे वाजी सन्परि णीयते । देवो देवेषु यज्ञियो ३ ।

अग्निर्होता नो अध्वरे वाजी सन्परिणीयते । देवो देवेषु यज्ञियो३ ।

अग्निर्होता नो अध्वरे वाजी सन्परि णीयते । देवो देवेषु यज्ञियो३ ।

---

(१) अत्र विचार —

स्वरुर्यूपे पशौ वाङ्गं यूपस्यैऽस्त्युच्छितोऽग्रिम ।
स्वरुणा पशुमञ्ज्यादित्युक्तेः पक्षद्वता स्फुटा ॥

( जै० न्या० मा० ४।४।१३ )

(२) ऋ० १०।११०।१० (३) ऋ० ४।१५।१-३.

आध्वर्यवपद्धतिः ।

आहवनीयोल्मुकमादायाग्नीत् त्रिः समन्तं पर्येति पश्वाज्यशामित्र-देशयूपचत्वालाहवनीयान् । आज्यपशुशामित्रान्वा ।

आहवनीये प्रतिप्रास्योल्मुकं रिक्तहस्तस्तावत्प्रतिपर्येति । अग्ने सकृच्चावर्ता प्रदक्षिणेनेतरयावृत्तिः ।

उल्मुकं पुनरादायोदङ् प्रतिपद्यते पशुश्चान्वक् शमित्रा नीयते ।

प्रतिप्रस्थाताऽन्वारभत एनं वपाश्रपणीभ्यां काष्मर्यमयीभ्यां विशाखाऽविशाखाभ्यां तमध्वर्युर्यजमानोऽध्वर्युम् ।

द्विपशुपक्षे युगपदुभयोर्नयनम्। तत्तद्वपाश्रपणीभ्यां युगपदन्वारम्भः।

वेदितृणेऽध्वर्युरादाय पक्षे चत्वारि तृणानि आश्राव्याह ।

ओ३ श्रा३ वय ।

अस्तु श्रौ३षट् ।

उपप्रेष्य होतर्हव्यादेवेभ्यः ।

रेवति यजमान इति वाचयति यजमानम् ।

"ॐ रेवति यजमाने प्रियन्धाऽआविश ।

होत्रपद्धतिः ।

परि त्रिविष्टयध्वरं यात्यग्नी रथीरिव । आ देवेषु प्रयो दधो३ ।

परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषो३ ।

परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषो३ ।

परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे३म् ।

तत उपप्रेष्य होतरित्युक्तो मैत्रावरुणः—

अजैदग्निरसनद्वाजं नि देवो देवेभ्यो हव्यवाट् प्राञ्जोभिर्हिन्वानो धेनाभिः कल्पमानो यज्ञस्यायुः प्रतिरन्नुपप्रेष्य होतर्हव्या देवेभ्यः ।

ततः अध्रिगुं होता—

"दैव्याः शमितार उत च मनुष्या आरभध्वमुपनयत मेध्या दुर आशासाना(१) मेधपतिभ्यां मेधम् ।

---

(१) अविकारो विकारो वा स्यान्मेधपतिशब्दयोः ।
विकारे स्वामिदेवार्थं एकार्थो वाऽन्तिमेऽपि किम् ॥
स्वाम्यर्थो देवतार्थो वा स्यादन्त्यास्त्वतोऽन्तिमः ।
अर्थभेदाद्विकारोऽत्र द्वावर्थौ शब्दयोर्द्वयोः ।
मन्त्रैक्यादयं एकोऽत्र स्वाम्यस्मिन्नायया द्विता ।
देवार्थोऽर्थोऽदेव एकाऽपि स्थाने द्वे द्विरेतनम् । ( जै० न्या० मा० ९।३।१४-१५ )
आदित्येन्द्रैकारोध्येष ऊनो नोद्वोप्नतेऽन्यवत् ।
गणार्थत्वादनृष्टोऽतो विकल्पः प्रत्ययविव ॥

आध्वर्यवपद्धतिः ।

उरोरन्तरिक्षात्सजूर्देवेन वातेनास्य हविषस्त्मना यज समस्य तन्वा भवे"ति ब्रूहि ।

यजमानः—

'ॐ रेवति यजमाने प्रियन्धाऽऽविश ।

उरोरन्तरिक्षात्सजूर्देवेन वातेनास्य हविषस्त्मना यज समस्य तन्वा भव" (६।११) ।

शामित्रं नातीयात् ।

शामित्रेऽग्निं निदधाति निर्मन्थ्यमेके । तदाऽऽहवनीयाग्नेरुल्मुकादानम् ।

शामित्रस्य पश्चात्तृणमुपास्यति वपो वर्षीयसीति ।

"ॐ वपो वर्षीयसि यज्ञे यज्ञपतिन्धाः" । ( ६।११ )

पत्रे पेन्द्राग्नस्यापि च ।

हौत्रपद्धतिः ।

(१)प्रास्मा अग्निं भरत स्तृणीत बर्हिरन्वेनं माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्यः ।

उदीचीनाँ अस्य पदो निधत्तात्सूर्यं चक्षु(२)र्गमयताद्वातं प्राणमन्ववसृजतादन्तरिक्षमसुं दिशः श्रोत्रं पृथिवीं शरीरम् ।

(३)एकधाऽस्य त्वचमाच्छ्यतात्पुरा नाभ्या अपि शसो वपामुत्खिदतादन्तरेवोष्माणं वारयध्वात् ।

(४)श्येनमस्य वक्षः कृणुतात्(५)प्रशसा बाहू शला दोषणी कश्यपेवांसाऽच्छिद्रे श्रोणी कवषोरू स्रेकपर्णाष्ठीवन्ता ।

---

कृष्णग्रीवादिके नोह ऊहो वाऽस्य न पूर्ववत् ।
देवत्वं न गणस्यात ऊहो बहुमितिस्तया ॥( जै० न्या० मा० ९।४।१७–१८ )

( १ ) अग्नीषोमीय सवनस्थास्तुल्यविधयो यदि ।
प्रास्मा इति तदा मन्त्रे पत्नीन्यायेन नोहनम् ॥ ( जै० न्या० मा० ९।३।१० )
दैव्या इत्यस्ति मेध्यां ते वाऽस्मा इति पशुस्थितः ।
अस्ति नैवं पशुत्वेऽ पुंव्यक्तित्वविवक्षया ॥ ( जै० न्या० मा० ९।१।२४ ) ।

( २ ) द्विपशोश्चक्षुरादूहो न वोहः पशुभेदतः ।
तेजोमात्रस्य सूर्यादावेकीभावादनूहनम् ॥ ( जै० न्या०।मा० ९।३।१२ ) ।

( ३ ) एकधेत्यविकारः स्यादभ्यासो वा सहत्वतः ।
आद्यो नैवं प्राकृतस्य सकृत्वस्योचितत्वतः ॥ ( जै० न्या० मा० ९।३।१३ ) ।

( ४ ) सादृश्यमुत साकल्यं श्येनाणुत्वा विवक्षितम् ।
प्रसिद्धसंनिधेराद्यस्तत्सत्वा दखिलोद्वृति. ॥ ( जै० न्या० मा० ९।४।१० ) ।

( ५ ) प्रशस्त्येत्यसिरर्थः स्यात्स्तुतिर्वा छेदनादसि ।
स्तुतिःकारस्त्यार्य बाह्वोः स्यात्स्वधितिश्छेदसाधनम् ।( जै०न्या०मा०९।४।९)

आध्वर्यवपद्धतिः ।

"ॐ वपों वर्षीयसि यज्ञे यज्ञपतिन्धाः" ( ६।११ ) ।

तस्मि (१)न्नेनं ( =पशुं ) निघ्नन्ति प्रत्यक्शिरसमुदक्पादं प्राक्शिरसं वा सङ्गृह्य मुखं तमयन्त्यवाश्यमानं वेष्केणवा ।

हौत्रपद्धतिः ।

(२)षड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठ्योच्च्यावयताद् गात्रं गात्रमस्या नूनं कृणुतात् ।

ऊवध्यगोहं पार्थिवं खनतात् ।

अस्ना रक्षः संसृजतात् ।

वनिष्ठुमस्य मा राविष्टो(३)रूकं मन्यमाना नेद्वस्तोके तनये रवि-

---

( १ ) अत्र मीमांसा—

पशुरालभ्य इत्यत्र पशैक्यं यजनाङ्गता ।
नास्त्यस्ति वाऽऽद्यः स्वपदे श्रुत्या पशङ्गतागतेः ॥
आदौ स्वप्रत्ययोपात्त आसन्नतरकारके ।
योगः कर्तौ पशौ चेति कर्मे यागाङ्गतोचिता ॥
न पुंल्लिङ्गे विवक्षा वा विवक्षाऽनुरयागत. ।
आद्योऽनुष्ठित्यपेक्षत्वात्संख्यावत्तद्विवक्ष्यताम्॥ (जै० न्या० मा० ४।१।१२-१४)

( २ ) षड्विंशतिवङ्क्रयोऽस्येत्यनूहः स्यादुतोह्यते ।
ऊहेऽपि वचनान्यत्वमस्येत्यावर्ततेऽथवा ॥
षड्विंशतेस्ताभ्यासः समम्वोक्तिर्भिदुत ।
अनूहोऽकरणत्वेन दृष्टत्वामाचदूहनम् ॥
संख्यायाश्च पशौयुक्तेर्वङ्क्रीणां मुख्यतावशात् ।
अमी पशौ युज्यतेऽत्रयस्ता अनुष्ठ्येऽपि शेषतः ॥
न चतुस्त्रिंशदित्येष निषेधो नियतो न वा ।
गिरापदवदाद्यः स्यान्नैवकारादलक्षतः ।
निषेधः प्राप्तिपूर्वोऽतः प्रापकोऽत्रानुमीयते ॥
निषेधकप्रापकाभ्यां चतुस्त्रिंशद्विकल्प्यते ।
पृथग् वचनमश्वस्य स्यादन्याभ्यां समस्य वा ॥
आद्यः पदे निषिद्धेऽत्र विशेषो नियतो यतः ।
षड्क्रीयत्तानुक्तिदोषाहगेवात्र निषिध्यते ।
पक्षे प्राप्तः प्राकृताऽस्मिन्समम्योक्तः पुरा यथा॥ (जै० न्या० मा० ९।४।१-७)।

( ३ ) पशावराऽयवास्को रुल्योरविशेषत ।
पशोवरासंनिधानाद् भ्रान्तिच्छेदनिषेधतः ॥ ( जै० न्या० ९।४।८ )

अध्रिगुमन्त्रे ऊहविचारः—

आतासाना मेधपतिभ्यां मेधमिति प्रकृतावग्नीषोमाभिप्रायं द्विवचनम् । एकदेवत्ये पशौ मेधपतये । बहुदेवत्ये मेधपतिभ्यः (पे० मा० द्वि०पं० ६)। प्रयोगनियमार्थं वचनम् ।

एतेन स्त्रीपशौ मेधापतिरिति न भवति । यज्ञाभिधाने तु मेधशब्दे विवक्षिते देवतायाश्च स्त्रीत्वे सति मेधपत्न्या इति प्रयोगसंदेहो माभूदिति ।

मेधपतिभ्यां मेधमित्यत्र मेधमित्येतत्पशुपदम् । तत्पशुद्वित्वे मेधौ बहुत्वे मेधानित्येवं प्रयोक्तव्यम् । अनारभ्याधज्ञाभिधानमिति गम्येत प्रकरणात् । तदाऽनूहः स्यात् । स्त्रीपशौ मेधां द्वयोर्मेधे बहुषु मेधाः । केचिन्मेधशब्दं जातिवचनं मन्यन्ते, तेषां स्त्रीपशौ मेधीं मेध्यौ मेधीरिति । एवं छागलेयिनां सूत्रेऽप्योह ईदृशः पठितः ।

प्रास्मा इति पुल्लिङ्गैकवचनम् । आभ्यामिति द्विवचनम् । एभ्य इति बहुवचनम् । तत एवं पशुद्वित्वे पशुबहुत्वे च वचनोहः ।

एकस्मिन् स्त्रीपशौ प्रास्या अग्निं भरत, द्वयोः प्राभ्यामग्निं भरत, बहुषु प्राभ्यो अग्निं भरतेति ।

पुल्लिङ्गपशुद्वित्वे अन्वेनौ माता मन्यतामिति । बहुत्वे अन्वेनान्माता मन्यतामिति ।

स्त्रियां अन्वेनां माता । द्वित्वे अन्वेने माता । बहुत्वे अन्वेना माताः ।

मन्यतामित्यस्यानूहो ज्ञातिनामभि. समानाधिकरणत्वात् ।

पुरुषे एकस्मिन्नालभ्यमाने उदीचीनां अस्य पदो निधत्तात् । पुरुषपशुद्वित्वे उदीचीनां एनयोः पदो निधत्तात् । पुरुषबहुत्वे उदीचीनां एषां पदो निधत्तात् ।

स्त्रिया एकत्वे उदीचीनां अस्याः पदो निधत्तात् । स्त्रीपशु द्वित्वे उदीचीनां एनयोः पदो निधत्तात् । बहुत्वे उदीचीनां आसां पदो निधत्तात् ।

ननु चास्येति प्रथमादेशस्तेन द्विवचने अनयोरिति प्राप्नोति । नेत्युच्यते । अस्मा अग्निं भरतेति प्रथमकथनादन्वेनमिति प्रकृतत्वात् । चरकाणां चानुदात्तपाठादन्वादेशोऽस्य शब्दः ।

पृथिवीं शरीरमिति पश्वेकत्वे । शरीरे शरीराणीति द्विबह्वोः ।

एकधास्य त्वचमाच्छ्यतादित्यत्रैकधाशब्दस्यानेकपशौ।वीप्सा ।

अस्येति पूर्ववदूहो विकारेषु ।

पुराशब्दोऽव्ययम् । तस्य द्विवचनबहुवचनयोर्विशेषाभावात् ।

वीप्सया द्वित्वबहुत्वप्रदर्शनमन्यथानभिधानात् ।

पिश अवयवे(१६३१) । पिश छेदने वा धातुः । अतो निरवयवां वपामुत्खिदतादच्छिन्दन्त इति चेति । अपिशस् इत्येकवचने प्राप्ते अपिशस इति बहुवचनं तेनायमर्थनियमादनूह्यम् ।

वपामुत्खिदतात् । वपे उत्खिदतात् । वपा उत्खिदतात् । यथा वचनं विकारेषु ।

अन्तरित्यव्ययम् । तस्य वीप्सयैव द्वित्वबहुत्वयोरभिधानम् ।

अस्येति प्रदर्शितम् ।

द्वित्वे वक्षसी बहुत्वे वक्षांसि ।

प्रशसेति प्रकृष्टेन शासेनेति केषांचिन्मतिः ।

अपरेषां प्रशस्तौ बाहू इति । ततश्चोद्गासन्देहादनूहः ।

बाहूनिति बाहुबहुत्वे ।

दोषाणीति बहुवचनं तद्बहुत्वे ।

कश्यपेवां सानच्छिद्राः श्रोणीः कवषोरून् स्त्रेकपर्णाष्ठीवतः । एवमनेकत्वे बहुवचनान्येतानि । ननु च्छान्दस आकारः सर्वविभक्तीनामविशेषेण स्मर्यते । किं तत्रोदेन ।

आध्वर्यवपद्धतिः ।

एते अन्यमपि पशुमैन्द्राग्नम् ।

प्रत्याहवनीयमावृत्य पराङ्मुखा अध्वर्युयजमानप्रतिप्रस्थात्राग्नीध्र आसते इति देवः ।

आहवनीयसम्मुखा इति श्री अनन्तः ।

हौत्रपद्धतिः ।

ता रयच्छमितार (१) ।

अध्रिगो शमीध्व सुशमि शमीध्व शमीध्वमध्रिगो ३

अध्रिगो शमीध्व सुशमि शमीध्व शमीध्वमध्रिगो३

अध्रिगो शमीध्वं सुशमि शमीध्व शमीध्वमध्रिगो३ ।

उभावपापश्च इत्युपांशु जपत्यनुच्छ्वसन्नेव ।

---

उच्यते । शलादि प्रतिषेधो ज्ञापकम् । भवत्येवरूपाणामूह इति । षड्विंशतिरस्य वङ्क्रय इत्यत्र षड्विंशतिशब्दस्यानेकशो वीप्सा ।

अस्येति कृतविचारम् ।

अनुष्ठेत्यव्ययं निश्चयेनेत्यर्थं ।

गात्र गात्रमिति वीप्सयैवाभिहितत्वादविचार ।

अस्येति पूर्ववत् ।

अनूनमित्यस्याविकार प्रकृतावनुहितत्वात् ।

ऊवध्यगोह पार्थिवम् । अस्नारक्ष संसृजतात्, इत्येतानि विकारेऽप्यनूह्यानि ।

वनिष्ठु स्थूलान्त्रम् । पश्वनेकत्वे तस्योह ।

अस्येति पूर्ववदूह्यम् ।

मा राविष्ट माहिंसीष्टेत्यर्थं । ततश्च पशुद्वित्वे वनिष्ठू एनयोर्मा राविष्ट । बहुत्वे वनिष्ठूनेषां मा राविष्ट ।

स्त्रिया अस्या एनयो आसामिति यथोक्तम् ।

वनिष्ठुसन्निधानादूरूकेण वपाभिधानमिति मीमांसकाः तस्माद्वपाभिधानम् । सव बहुत्वादूरूकरोतीत्यूरुकम् । हविरभिप्राय नपुंसकम् । अत ऊहः । ऊरूक ऊरूकाणीति यथा वचनम । नेद्युष्माकमपि पुत्रे वा पौत्रे वा रविता छेत्स्यथ । रवच्छिद्यादित्यर्थं ।

हे शमितारो युष्माकमपि कल्याणमस्त्वित्यभिप्राय ।

( १ ) अत्राध्रिगौ "नवकृत्वोऽध्रिगावनानीति' 'त्रि परिदधात्यपरत्वाये" ( कौ० ब्रा० १०।४ )ति श्रुतत्वात् 'शमितार इत्यध्रिगौ नवम उच्छ्वास" ( शां० श्रौ० ५।१७।१) इति सूत्राच्च "दैव्याः शमितार" इत्यत आरभ्य "रवितारमच्छमितार"इत्यन्त नवैवो च्छ्वासा कर्तव्याः । ते च श्लोकेन प्रदर्श्यन्ते—

अत्रावसानानि वदामि तेष(१)

यूष्य (२) शरीर(३) श्रिस्तेव्यथस्तात्(४) ।

विरम्य वध्वा(५) श्रृणुतान्(६) नसाध्व(७)

होताऽस्तेव सह्जवान्(८) मितार (९) ॥

आध्वर्यवपद्धतिः ।

अध्वर्युः संज्ञपयान्वगन्निरित्येव ब्रूयाच्छमितारम् ।

पक्षे संज्ञपयान्वगमतामिति प्रैषः ।

परिपशव्याज्यं शालाद्वार्ये पूर्णाहुतिवत्सर्वहुतस्य सकृद्गृहीतेन वसाहोमहवन्या समित्पूर्वकमाहवनीये स्वाहा देवेभ्य इति जुहोति ।

"ॐ स्वाहा देवेभ्यः" (६।११) ।

इदं देवेभ्यः० ।

(१)शमित्रा संज्ञप्तः पशुरिति प्रोक्त ।

पक्षे संज्ञप्तौ पशू इति ।

न श्येतां नु प्रैषः ।

पूर्वसंस्कृताज्यादेव समिद् रहितां देवेभ्यः स्वाहेति तथैवोत्तरां परिपशव्याहुतिं जुहोति ।

"ॐ देवेभ्यः स्वाहा"(६।११) ।

इदं देवेभ्यः० ।

न चैते जुहुयात् अग्नीषोमीये सुत्याहे सवनीये तु नित्ये ।

यपाश्रपणीभ्यां नियोजनीं चात्वाले प्रास्यति माऽहिर्भूरिति ।

"ॐ माऽहिर्भूर्मा पृदाकुः" (६।१२) ।

पक्षे माहिर्भूत मा पृदाकुरिति म(त)न्त्रेणोभयोः प्रासनम् ।

"ॐ माहिर्भूतम्मा पृदाकुः" (६।१२) ।

नेष्टः पत्नीमुदानयेत्याहाध्वर्युः ।

नेष्टा पत्नीं पान्नेजनहस्तां वाचयति शामित्रं तीर्थेन नयन्नमस्त आतानेति ।

"ॐ नमस्तऽआतानानर्वा प्रेहि ।

घृतस्य कुल्याऽउपऽऋतस्य पथ्याऽअनु ।

देवीरापः शुद्धा वोढ्ढ्वꣳ सुपरिविष्टा देवेषु सुपरिविष्टा वयम्परिवेष्टारो भूयास्म" ( ६-१२-१३ ) । इति ब्रूहि ।

होत्रपद्धतिः ।

न पशुं संज्ञप्यमानमीक्षेत ।

---

( १ ) अत्र मीमांसा—

किं प्रकृतेभ्यो ब्रह्मादिभ्योऽन्यः शमिता तेषां वाऽन्यतम इति संशये, सञ्ज्ञाभेदादन्यत्वं यौगिकत्वात्सञ्ज्ञाया वरणाभावाच्च तेषामेवान्यतम इति पूर्वपक्षे, तत्राध्वर्योः परावर्ततेऽध्वर्युः पशोः संज्ञप्यमानादिति वचनसामर्थ्यादन्य एवेति सिद्धान्तः । तथा च सूत्राणि-"शमिता च शब्दभेदात् । प्रकरणाद्वोत्पत्त्यसंयोगात् ( जै० सू० ३।७।२८।२९ ) विशस्ति पशुमन्यः । ऋत्विजां वैकोऽप्रवृत्तत्वाच्छामित्रे । उपगादर्शनाच्च" ( का० श्रौ० ६।७।१—३ ) इति ।

आध्वर्यवपद्धतिः ।

पत्नी—

"ॐ नमस्तऽआतानानर्वा प्रेहि ।

घृतस्य कुल्याऽउपऽऋतस्य पथ्याऽअनु ।

देवीरापः शुद्धा वोढ्वꣳ सुपरिविष्टा देवेषु सुपरिविष्टा वयं परिवेष्टारो भूयास्म"(६।१२-१३) ।

इमं मन्त्रं पठन्ती तच्चगत्वोदङ्मुख्युपविश्य पशोः प्राणान् शुन्धति पत्नी, मुखं-नासिके-चक्षुषी—कर्णौ—नाभिं—मेढ्रं—पायुं—पादान्सꣳहृत्य वाचं ते शुन्धामीति प्रतिमन्त्रम् ।

"ॐ वाचन्ते शुन्धामि"(६।१४) ।

मुखम् ।

"ॐ प्राणन्ते शुन्धामि"(६।१४) ।

नासिके मन्त्रावृत्त्या ।

"ॐ चक्षुस्ते शुन्धामि"(६।१४) ।

चक्षुषी मन्त्रावृत्त्या ।

"ॐ श्रोत्रन्ते शुन्धामि"(६।१४) ।

मन्त्रावृत्त्या कर्णौ ।

"ॐ नाभिन्ते शुन्धामि"(६।१४) ।

नाभिम् ।

"ॐ मेढ्रन्ते शुन्धामि"(६।१४) ।

प्रजननम् ।

"ॐ पायुन्ते शुन्धामि"(६।१४) ।

अपानम् ।

"ॐ चरित्राँस्ते शुन्धामि"(६।१४) ।

सर्वꣳहृत्य पादान् ।

पत्ने एवमेव मुखादिपादपर्यन्तमैन्द्राग्नस्य च ।

शेषेणाध्वर्युर्यजमानश्च शिरःप्रभृत्यनुषिञ्चतो मनस्त इति शिरः ।

"ॐ मनस्तऽआप्यायताम्" ।

शिरः ।

"ॐ वाक् तऽआप्यायताम्" ।

मुखम् ।

"ॐ प्राणस्तऽआप्यायताम्" ।

आवृत्या नासिके ।

नाभ्यर्थनपद्धतिः ।

"ॐ चक्षुस्त ऽआप्यायताम्" ।

भेदेन चक्षुषी ।

"ॐ श्रोत्रन्तऽआप्यायताम्" (६।१५) ।

भेदेन श्रोत्रे ।

यत्ते क्रूरमित्यङ्गानि ।

"ॐ यत्ते क्रूरं यदास्थितन्तत्तऽआप्यायतान्निष्ट्यायतान्तत्ते शुद्धयतु" (६।१५)।

सकृन्मन्त्रः ।

शमहोभ्य इति पश्चात्पशोर्निषिञ्चतः ।

"ॐ शमहोभ्यः निषिञ्चामि"(६।१५)।

पत्ते शिरःप्रभृति निषेकान्तमैन्द्राग्नस्य च ।

अध्वर्युरुत्तानं पशुं कृत्वाऽग्रेण नाभिं तृणं निदधात्योषध इति प्राक् शिरः ।

पत्ते प्रागग्रं, इतरथोदगग्रम् ।

"ॐओषधे त्रायस्व" (६।१५) ।

स्वधित इति प्रज्ञातयाऽभिनिधाय ।

"ॐ स्वधिते मैनर्ठ० हिर्ठं०सीः"(६।१६)

तृणीर्ठ० सतृणं चर्म ।च्छत्वा तृणस्याग्रर्ठ० सव्ये कृत्वा दक्षिणेन मूलमुभयतोऽनक्ति लोहितेन रक्षसामिति द्विगुणीकृतम् ।

"ॐरक्षसाम्भागोसि" (६।१६) ।

निरस्तमित्यपास्यति अक्तं मूलमुत्करे ।

"ॐ निरस्तर्ठ० रक्षः" (६।१६) ।

उदकोपस्पर्शः ।

इदमहमित्यभितिष्ठति यजमानः ।

"ॐ इदमहर्ठ० रक्षोऽभितिष्ठामीदमहर्ठ० रक्षोऽवबाधऽइदमहर्ठ० रक्षोऽधमन्तमो नयामि"(६।१६) ।

उदकोपस्पर्शः ।

पत्ते-उत्तानकरणादिमूलाञ्जनान्तमैन्द्राग्नस्य च कृत्वा निरस्तमित्यनुद्रितेन मूलद्वयापासनं तन्त्रेण तथैवाधिष्ठानमपि तन्त्रेण ( कुर्यात्)। उदकस्पर्शस्ततः । वपाभ्युत्खिद्य वपाश्रपण्योरादानम् ।

"ॐ द्यौः स्वः पृथिवी स्वः" (१।२) ।

यजमानेनान्वारब्धे वपाश्रपण्यौ प्रोर्णोति घृतेन द्यावापृथिवी इति ।

आध्वर्यवपद्धतिः ।

"ॐ घृतेन द्यावापृथिवी प्रोर्णुवाथाम्" (६।१६) ।

परिवास्य प्रतिप्रस्थात्रे प्रयच्छति ।

पक्षे वपोत्खेदनाद्येतद्न्तमैन्द्राग्नस्य च ।

प्रतिप्रस्थाता चात्वालेऽवसिच्य शामित्रे प्रतपति ।

शामित्रैकदेशमाहवनीये प्रास्यत्यग्नीत् ।

निर्मन्थ्यपक्षे नोल्मुकप्रासनम् ।

तृणाग्रं चाध्वर्युर्वायोवेरिति ।

"ॐ वायो वेस्तोकानाम्" (६।१६) ।

पक्षेऽनूहितेन तृणाग्रद्वयंप्रासनं तन्त्रेण ।

उत्तरवेदेरुत्तरतस्तिष्ठन् प्रतप्य वपामन्तरा यूपाग्नी हृत्वा दक्षिणतः प्रतिप्रस्थाता श्रपयति परीत्य ।

अध्वर्युर्यूपं पूर्वेणासीनस्तिष्ठन् वा स्थाल्याज्येन वपांॅस्रवेणाभिघारयत्यग्निराज्यस्येति ।

"ॐ अग्निराज्यस्य वेतु स्वाहा" (६।१६) ।

पक्षे ऐन्द्राग्नस्य च प्रतपनं हरणं श्रपणमभिघारणं च मन्त्रेणैव ।

अध्वर्युः-स्तोकेभ्योऽनुब्रूहीति ।

"ॐ स्तोकेभ्योऽनुब्रूहि" ।

( इति मैत्रावरुणं प्रेष्येत् । )

हौत्रपद्धतिः ।

पृषदाज्यावेक्षणं प्रायश्चित्तम् । ऋचं वा वैष्णवीं (१)जपेत् ।

ततः स्तोकेभ्योऽनुब्रू३ हि ।

मैत्रावरुणः—

(२) जुषस्व सप्रथस्तमं वचो देवप्सरस्तमम् । हव्या जुह्वान आसनो३

जुषस्व सप्रथस्तमं वचो देवप्सरस्तमम् हव्या जुह्वान आसनो३

जुषस्व सप्रथस्तमं वचो देवप्सरस्तमम् । हव्या जुह्वान आसनो३

( ३ ) इमं नो यज्ञममृतेषु धेहीमा हव्या जातवेदो जुषस्व । स्तो·

---

यद्यपि "होता च कुर्यादनादिष्टम्" इति परिभाषितत्वात् "न पशुं संज्ञप्यमानमीक्षेत" इति एकवचनेन होतुरेव अवेक्षणनिषेधः प्राप्नोति, तथापि सर्वेषामीक्षणनिषेधोऽवगन्तव्यः । नेदस्य संज्ञप्यमानस्याध्यक्षा भवामेति ( श० ३।८।१।१६ ) शतपथश्रुतौ बहुवचनश्रवणात् ।

( १ ) यां कांचिद्वैष्णवीमित्यविशेषात् "स्वयमं वा नियम्येते" (जै० ११।१।४३) विन्याया "इदं विष्णुर्विचक्रमे"( ऋ० १।२२।१७ ) इति ।

"अतो देवा अवन्तु न" ( ऋ० १।२२।१६ ) रत्नमाला ।

( २ ) ऋ० १।७५।१ । ( ३ ) ऋ० ३।२१।१-५ ।

आध्वर्यवपद्धतिः।

पक्षेऽपि सकृदेव प्रैषोऽनुवचनं च।

शृतायाᳬ शृता प्रचरेत्याह प्रतिप्रस्थाता।

पक्षे शृते प्रचरेति।

अध्वर्योस्तत्प्रस्थाभिधारणम्।

प्रतिप्रस्थाता वपानीतां प्रत्याहृत्योत्तरतः कुशेषु तूष्णीं निदधाति।

पक्षेऽभे अपि तूष्णीं निदधात्युत्तरतः कुशेषु अध्वर्युः।

प्राणदाने—

"ॐ यस्ते प्राणः पशुषु प्रविष्टो देवानां विष्ठामनु यो वितस्थे।

आत्मन्वान् सोम घृतवान् हि भूत्वाग्नीषोमौ गच्छस्वर्यजमानाय विन्द" (का० श्रौ० २।८।१४)।

पक्षे ऐन्द्राग्नस्य च।

"ॐ यस्ते प्राणः पशुषु प्रविष्टो देवानां विष्ठामनु यो वितस्थे।

आत्मन्वान् सोम घृतवान् हि भूत्वेन्द्राग्नी गच्छ स्वर्यजमानाय विन्द" (का० श्रौ० २।८।१४)।

प्रियेणेति वेद्यां प्लक्षशाखां पृष्ठ्यां सादयति।

"ॐ प्रियेण धाम्ना प्रियᳬ सदऽआसीद" (२।६)।

पक्षे—

"प्रियाभ्यां धामभ्यां प्रियᳬ सदऽआसीदतम्" (२।६)।

इत्युभयोस्तन्त्रेणासादनम्।

ध्रुवा असदन्निति वपामालभते।

"ॐ ध्रुवा असदन्नृतस्य योनौ ता विष्णो पाहि पाहि यज्ञं पाहि यज्ञपतिम्" (२।६)।

पक्षे ऐन्द्राग्नस्य च।

हौत्रपद्धतिः।

कानोमग्ने मेदसो घृतस्य होतः प्राशान प्रथमो निषद्यो ३

घृतवन्तः पावक ते स्तोकाः श्चोतन्ति मेदसः स्वधर्मन्देववीतये श्रेष्ठं नो धेहि वार्यो ३

तुभ्यं स्तोका घृतश्चुतोऽग्ने विप्राय सन्त्य ऋषिः श्रेष्ठः समिध्यसे यज्ञस्य प्राविता भवो३

तुभ्य श्चोतन्त्यध्रिगो शचीवः स्तोकासो अग्ने मेदसो घृतस्य कवि शस्तो बृहता भानुनागा हव्या जुषस्व मेधिरो ३

ओजिष्ठं ते मध्यतो मेद उद्भृतं प्र ते वयं ददामहे श्चोतन्ति ते वसो स्तोका अधि त्वचि प्रति तान्देवशो विहो३

आध्वर्यवपद्धतिः ।

"ॐ ध्रुवा असदन्नृतस्य योनौ ता विष्णो पाहि पाहि यज्ञं पाहि यज्ञपतिम्" (२।६) ।

नात्रमालम्भः कृतत्वात् ।

ततो होत्रा घृतवतीमित्युक्ते—

अध्वर्युः स्रुचावादायातिक्रम्याश्राव्य प्रत्याश्राविते-

"स्वाहाकृतिभ्यः प्रेष्य" ।

इति प्रेष्यति ।

वषट्कृते यागः ।

हौत्रपद्धतिः ।

ओजिष्ठं ते मध्यतो मेद उद्भृत प्र ते वयं ददामहे श्चोतन्ति तेवसो स्तोका अधि त्वचि प्रति तान्देवशो विहो ३

ओजिष्ठं ते मध्यतो मेद उद्भृतं प्र ते वयं ददामहे । श्चोतन्ति ते वसो स्तोका अधि त्वचि प्रति तान्देवशो विहो३म् ।

ततो होतुः स्रुगादापनमग्निर्होतेति ।

स्वाहा कृतिभ्यः प्रेष्येत्युक्तो

मैत्रावरुणः—

होतायक्षदग्निं स्वाहाज्यस्य स्वाहामेदसः स्वाहा स्तोकानां स्वाहा स्वाहाकृतीनां स्वाहा हव्यसूक्तीनां

स्वाहा देवा आज्यपा जुषाणा अग्न आज्यस्य(१) हविषो व्यन्तु होतर्यज ।

होता—

भूर्भुवर्यें ४ यजामहे—

(२)सद्यो जातो व्यमिमीत यज्ञमग्निर्देवानामभवत्पुरोगाः । अस्य होतुःप्रदिश्यृतस्य वाचि स्वाहा कृतं हविरदन्तु देवा ४ वा३षट् ।

ओजः सहः सह ओजः स्वः ।

अन्तरेणोत्तमं प्रयाजं वपां च वाग्यमनमुभयोः(३)

---

(१) अत्र आश्वलायनानां 'हविष' इत्येतपदं न भवति (श्रौ० सू० १।६।२४) शाङ्खायनानां तु "स्वाहा देवा आज्यपा जुषाणा अग्न आज्यस्य व्यन्त्विति हैक आहुर्न तथा कुर्यात्" (कौ० ब्रा० ३।४) इतिनिषिध्य 'तस्मात्स्वाहा देवा आज्यपा जुषाणा अग्न आज्यस्य हविषो व्यन्त्वित्येवब्रूयात्" (कौ० ब्रा० ३।४) इति श्रुतेर्हविष इत्येतपदं भवत्येव । शाङ्खायनसूत्रे(१।७।३)ऽपि "अग्न आज्यस्य हविषो व्यन्त्विति प्रयाजयाज्या" इत्युक्तम् । (२) (ऋ० १०।११०।११

(३) इत उत्तरमावपाहोमान्तं होतृमैत्रावरुणयोर्वाग्यमनम् । "न स्वाहाकृतीश्च वपां चान्तरेण वाचं विसृजेत" (कौ० ब्रा० १०।६) इति श्रुतेः ।

आध्वर्यवपद्धतिः।

इदं स्वाहा कृतिभ्यो न मम। यश्च मम न तस्य किञ्चन योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः। अन्नादो भूयासम्।

हुत्वा प्रत्याक्रम्य वपामभिधारयति ततः पृषदाज्यम्।

ना(१)आज्यभागौ।

वपया चरिष्यन्। जुहूमुपस्तीर्य हिरण्यमवधाय असिना वपामवद्याह।

हौत्रपद्धतिः।

अग्नयेऽनुब्रूहि।

मैत्रावरुणः—

(२)अग्निः प्रत्नेन जन्मना शुम्भानस्तन्वं स्वां कविर्विप्रेण वावृधे३प्।

अग्नये प्रेष्य—

मैत्रावरुणः—

होतायक्षदग्निमाज्यस्य जुषतां हविर्होतर्यज।

होता—

भूर्भुवर्यें४ यजामहे(३)जुषाणो अग्निराज्यस्य हविषो वेतु४ वौ४षट्।

---

यद्यपि 'विसृजेत' इत्येकवचनेन होतुरेव वाग्यमः प्राप्नोति तथाप्येकवचनमत्राविवक्षितं स्वाहाकृतिप्रैषसम्बन्धात्। तेन उभयोरपि वाग्यमनम्।

(१) अत्र मीमांसा—

आज्यभागौ पुरोडाशे न स्तः स्तो वाऽस्य चोदकः।
लुप्तस्वतो न तौ मैवं प्रयोगांशस्य लोपनात्। (जै० न्या० १२।१।३)।
न सोमेऽध्वर इत्युक्तौ निषेधः पर्युदस्यते।
उतार्थवादो वाऽऽद्यः स्यादसमस्तपदोक्तितः।
सोमे प्रसक्तिरङ्केष्ट्यादिविकल्पाय मध्यमः।
नैवास्त्यत्र समासस्य नियमः पाणिनेर्मते।
पूर्वैतस्मात्सोमयाग आज्यभागाप्रसक्तितः।
न पर्युदासः किं त्वर्थवादो दृष्टान्तवर्णनात्।
— (जै० न्या० १०।८।३-५)।

(२) ऋ० ८।४४।१२। अग्निः प्रत्नेनेत्यग्नेः पुरोऽनुवाक्यामन्वाह मैत्रावरुण एव "प्रैषा मैत्रावरुणस्य" इत्युपक्रम्य "सप्रैषे तु पुरोऽनुवाक्याः" (शा० श्रौ० ५।१६।१।२) इति सूत्रणात्। तेन उत्तरत्रापि यत्र सप्रैषप्रदानं तत्र मैत्रावरुणस्य पुरोऽनुवाक्यापाठेऽधिकारः। यत्र तु अप्रैषं प्रदानं तत्र होतुरेव न मैत्रावरुणस्य।

(३) होता अग्निमिति देवतादेशमुद्धृत्य जुषाणा इत्यादिकां याज्यां पठेत्। इत उत्तरमपि यत्र सप्रैषप्रदानं यत्र याज्यायां देवतादेशमनुद्धृत्यैव याज्यां पठेत्। "उपरिष्टाच्च येयजामहादेवतादेशनं सपुरोऽनुवाक्ये। सप्रैषेतु न विद्यते" (शां० श्रौ० १।२।१९-२०) इतिपरिभाषितत्वात्।

आध्वर्यवपद्धतिः।

स्वधितिं विनैव येन केनचिद्वपाग्रहणमिति कर्कः।

अग्नीषोमाभ्यां छागस्य वपायै मेदसोऽनुब्रूहि।

उपरि हिरण्यमवधाय सकृदभिघार्य अतिक्रम्याश्राव्याह।

अग्नीषोमाभ्यां छागस्य वपां मेदः प्रेष्य।

इदमग्नीषोमाभ्यां न मम।

हौत्रपद्धतिः।

ओजः सहः सह ओजः स्वः।

सोमायानुब्रू ३ हि।

मैत्रावरुणः—

(१)सोम गीर्भिष्ट्वा वयं वर्धयामो वचोविदः। सुमृळीको न आवि· शो ३ म्।

सोमाय प्रेष्य—

मैत्रावरुणः—

होतायक्षत्सोममाज्यस्य जुषतां हविर्होतर्यज।

होता—

भूर्भुवस्व ४ यजामहे जुषाणः सोम आज्यस्य हविषो वेतु ४ वौ ४ षट्।

ओजः सहः सह ओजः स्वः(२)।

ततोऽग्नीषोमाभ्यां छागस्य वपायै मेदसोऽनुब्रूहि।

मैत्रावरुणः—

(३)अग्नीषोमाविमं सु मे शृणुतं वृषणा हवं प्रति सूक्तानि हर्यतं भवतं दाशुषे मयोभुवम्।

अग्नीषोमाभ्यां छागस्य वपां मेदः प्रेष्य।

मैत्रावरुणः—

होतायक्षदग्नीषोमौ छागस्य वपाया मेदसो जुषेतां हविर्होतर्यज।

---

(१) ऋ० १।९१।११।

(२) नाज्यभागौ यजति (शां० श्रौ० ५।१८।९) "नौ न पशौ न सोमे करोति" (कौ ब्रा० ३।९) इति श्रुतेः।

"अग्राज्यभागौ कुर्वन् (श्रौ० सू० ६।३।२१) इति कात्यायनवचनादत्रावसरे आज्यभागौ कुर्वन्ति तदा वृधन्वन्तावाज्यभागौ भवतः। पशोः सान्नाय्यविकारित्वात (जै० न्या० सू० १०।२।१०–१४) सानाय्यस्य च अमावास्यहविष्ट्वाद् दर्शसम्बन्धि· वृधन्वन्तावेव भवतः। एतदेवाभिप्रेत्युक्तं "वृधन्वन्तौ वा" (शां० श्रौ० ५।१८।३) इति कल्पसूत्रे। अग्नीषोमीये आज्यभागौ न स्त इति कर्काचार्याः।

(३) ऋ० १।९३।१।

आध्वर्यवपद्धतिः ।

पक्षे ( एवमेव ) उपस्तरणादि त्यागान्त ऐन्द्राग्नवपायाः एवमेव यागः । तत्र अग्नीषोमाभ्यामित्यस्य स्थाने इन्द्राग्निभ्यामिति विशेषः ।

हुत्वा जुहोतिस्थाने उपविश्य वपाश्रपण्यावनुप्रास्यति प्राचीं विशाखां प्रतीचीमितरां ँ स्वाहाकृते इति ।

"ॐ स्वाहा कृते ऊर्ध्वनभसम्मारुतङ्गच्छतम्" (६।१६) ।

पक्षे वपाश्रपणीनां प्राकृतमन्त्रेण प्रासनं तन्त्रेण ।

"ॐ स्वाहाकृता ऊर्ध्वनभसं मारुतं गच्छते"ति ।

सादयित्वा स्रुचौ चात्वाले मार्जयन्ते सपत्नीका इदमापः प्रवहेतेति ।

"ॐ इदमापः प्रवहतावद्यं च मलं च यत् ।
यच्चाभिदुद्रोहानृतं यच्च शेपेऽअभीरुणम् ।
आपो मा तस्मादेनसः पवमानश्च मुञ्चतु" (६।१७) ।

## ( वसतीवरीग्रहणम् )

ततोऽग्नीषोमीयस्य वपामार्जनान्ते वसतीवरीग्रहणम् । अस्तमितश्चेन्निनाहात्पुरेजानश्चेत् । अनीजानोऽन्यस्यापि समोपावसितस्य पुरेजानस्योभयाभाव उल्कुपीठं० हिरण्यं घोपर्युपरि धारयन् गृह्णाति हविष्मतीरिति ।

वपाहोमात्प्रागस्तसम्भावनायां तत्पूर्वमेव वसतीवरीग्रहणमिति केचित् ।

"ॐ हविष्मतीरिमा आपो हविष्माँ आविवासति ।

होत्रपद्धतिः ।

होता—

भुर्भुवर्वे ४ यजामहे( १ )युवमेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तं युवं सिन्धूरभिशस्तेरवद्यादग्नीषोमावमुञ्चतं गृभीता ४ वौ४षट् ।

ओजः सहः सह ओजः स्वः ।

इन्द्राग्निभ्यां छागस्य वपाये मेदसोऽनुब्रूहि ।

मैत्रावरुणः—

( २ )उभावामिन्द्राग्नी आहुवध्या उभा राधसः सह मादयध्यै । उभादातारात्रिषां रयीणामुभा वाजस्य सातये हुवे वाम् ।

इन्द्राग्निभ्यां छागस्य वपां मेदः प्रेष्य ।

---

( १ ) ऋ० १।९३।५ ।　( २ ) ऋ० ६।६०।१३ ।

आध्वर्यवपद्धतिः ।

हविष्मान्देवोऽअध्वरो हविष्माँ अस्तु सूर्यः" (६।२३) ।

तीर्थेनेत्य शालाद्वार्यमपरेणाग्नेर्व इति निदधाति ।

"ॐ अग्नेर्वोऽपन्नगृहस्य सदसि सादयामि" (६।२४) ।

उत्करे स्थित्वा सुब्रह्मण्यां च(१) प्रेष्यति पैतापुत्रीयाम् ।

सुब्रह्मण्ये सुब्रह्मण्यामाह्वय पैतापुत्रीयाम् ।

औद्गात्रपद्धतिः ।

अग्नीषोमीयवपाहोमान्ते अध्वर्युणा सम्प्रेषितः सुब्रह्मण्य आम्नानेन तीर्थेन प्रपद्योत्करे प्राङ् मुखस्तिष्ठंस्सनाममाहां सुब्रह्मण्यामाह्वयेत ।

सुब्रह्मण्योमित्यादि गौतमब्रुवाणेत्यन्तमुक्त्वा श्वः सुत्यायाः पूर्वे यजमानस्य नामानि गृह्णीयात् ।

२ १ २ ८
अमुकशर्मा यजते ।

२ १ २ १ २ ८
अमुकशर्मणः पुत्रो यजते ।

२ ८ १८ ८ २ १ २ ८
अमुकीदायाः पुत्रो यजते ।

२ १ २८ १ २ ८
अमुकशर्मणः पौत्रो यजते ।

२ ८ १८ ८ २२ १ २ ८
अमुकीदायाः पौत्रो यजते ।

हौत्रपद्धतिः ।

मैत्रावरुणः—

होतायक्षदिन्द्राग्नी छागस्य वपाया मेदसो जुषेतां हविर्होत र्यज ।

होता—

भूर्भुवर्येयजामहे(२)शुचिं नु स्तोमं नवजातमद्येन्द्राग्नी वृत्रहणा

---

(१) चकाराद्वसतीवरीणां निधानकाल एव पैतापुत्रीयां सुब्रह्मण्यां प्रेष्यति पिता पुत्रादेर्नामकीर्तनसम्बन्धिनी पैतापुत्रीया वाम्। अथवा चकारेण वपामार्जनान्त इत्ये तदेवानुकृष्यते वपामार्जनान्त एव सुब्रह्मण्यां प्रेष्यति, पैतापुत्रीयामिति सुब्रह्मण्याविशेषणम्। सुब्रह्मण्ये सुब्रह्मण्यामाह्वय पैतापुत्रीयामित्येवं शाखान्तरे वपामार्जनान्त एव सुब्रह्मण्यायाः पैतापुत्रीयायाः विहितत्वात् सूत्रकारप्रस्थानाच्च । तथा च सायणके सूचितम्—"वपान्ते सुब्रह्मण्यानिवृत्तिः" ( का० श्रौ० २१।३।३० ) इति एककालत्वेऽपि सूत्रपाठक्रमात्पूर्वं वसतीवरीग्रहणं तत सुब्रह्मण्याप्रैषः । एवं चेद्हुतायां वसतीवरीग्रहणे वपामार्जनान्त एव सुब्रह्मण्याप्रैषो वसतीवरीभिरभिसम्बन्धादिति पितृभूतिः । "हुतायां वपायां चात्वाले मार्जयित्वा सुब्रह्मण्ये सुब्रह्मण्यामाह्वयेति प्रेष्यति पैतापुत्रीयां सुब्रह्मण्यामाह्वयति नाग्नीषोमीये हृदयशूलं करोति न सवनीये न स्वरमनुप्रहरति नान्तरापो देवयजनं च पत्न्या व्यवेयादपागस्तमयाभिनिष्क्रम्य वसतीवरीर्गृह्णाति वहन्तीनां प्रतीप स्विदन्हविष्मतीरिमा। आप इति प्रतीपं कलशमुपसारयतीं"(१।२।६।९-१४)ति मानवश्रौतसूत्रक्रमः । कल्पसूत्रेऽप्ययमेव क्रम उक्तोऽस्ति । (२) ऋ० ७।९३।१ ।

औद्गात्रपद्धतिः ।

२ १.८ २ १ २ ८
अमुकशर्मणो नप्ता यजते ।
२ ८ १८ १ २ १ २ ८
अमुकीदाया नप्ता यजते ।

द्विपितृकस्य द्विमातृकस्य च द्वयानां पित्रादीनां मात्रादीनां च प्रत्येकं नाम ग्रहणम् । अमुकशर्मणः पुत्रो यजते । अमुकीदायाः पुत्रो यजत इति । भार्यानेकत्वेऽपि विवाहक्रमेण सर्वासां ग्रहणं प्रत्येकम् । एवं पूर्वेषां नामानि गृहीत्वा यजमानस्य पुत्रपौत्रप्रपौत्राणां स्त्रीपुंसां जीवतां ज्येष्ठक्रमेण नामानि गृह्णीयात् ।

२ १ २ १ २ ८
अमुकशर्मणः पिता यजते ।
२ ८ १८ ८ २ १ २ ८
अमुकीदायाः पिता यजते ।
२ १ १८ १ २ ८
अमुकशर्मणः पितामहो यजते ।
२ ८ १८ ८ २८ १ २ १८
अमुकीदायाः पितामहो यजते ।
२ १ २८ १ २१
अमुकशर्मणः प्रपितामहो यजते ।
२ ८ १८ ८ २८ १ २ १८
अमुकीदायाः प्रपितामहो यजते ।
२ १ ८ २८ ८ १८ २८ १ २८ १ २८
जनिष्यमाणानां पिता पितामहः प्रपितामहो यजते ।

इत्युक्त्वा श्वः सुत्यामित्यादि समापयेत् ।

यजमानवाचनादि पूर्ववत् । यदा पुत्रवर्गात्पौत्रवर्गो ज्येष्ठस्तदापि पुत्रवर्गाह्वानं समाप्य पौत्रवर्गस्य ग्रहणम् ।

यदा पौत्रवर्गान्नप्तृवर्गो ज्येष्ठस्तदापि पौत्रवर्गस्याह्वानं समाप्य नप्तृवर्गस्याह्वानम् । पतितप्रव्रजितनपुंसकमूकादीनां न नामग्रहणम् ।

अथ नाम(१)ग्रहणे उच्चनीचस्वर उच्यते । नामस्तु चान्त्यमुखस्य

हौत्रपद्धतिः ।

उपेयाम । उभाहि वां सुहवा जोहवीमि ता वाज सद्य उशते धेष्ठा वषौ वषट् । ओजः सह सह ओजः स्वः ।

---

(१) अत्र सामवाजपेयिपदस्तुषः सुब्रह्मण्यानिगदस्वरविचारः । 'एकश्रुति दूरात्सम्बुद्धौ' (पा० १।२।३३) इत्यैकश्रुत्ये प्रवृत्ते 'यज्ञकर्मण्यजपन्यूङ्खसामसु' (पा० १।२।३४) जपन्यूङ्खसामानि वर्जयित्वा एकश्रुति भवतीत्यैकश्रुत्ये प्राप्ते "न सुब्रह्मण्यायां स्वरितस्य तूदात्तः" (पा० १।२।३७) इति स्वरितस्योदात्तो भवति — सुब्रह्मण्यायामेकश्रुतिर्न भवति किन्तु लक्षणान्तरप्राप्तस्य स्वरितस्य उदात्तो भवति । सुब्रह्मण्यो३ अत्र सुब्रह्मण्याशब्दः तित्स्वरेण (पा० ६।१।१८५) न्तस्वरितः, तस्य निपातोऽन्तोदात्तः । देवोद्गारः सोऽपि तथैव तस्योदात्तो भवति। इन्द्रागच्छेत्यादौ पाष्ठिकामन्त्रितस्वरेण इन्द्रेत्याद्युदात्तः तत उत्तरस्य "अनुदात्तं पदमेकवर्जम्" (पा० ६।१।१५८) इत्यनुदात्तः, तस्य स्वरितः ।

आगच्छेति आकार उदात्तः 'तिङ्ङतिङः' (पा० ८।१।२८) इति गच्छेति निहन्यते "उदात्तादनुदात्तस्य स्वरितः" (पा० ८।४।६६) इत्याद्यः स्वरितः अन्नोभयोः स्वरितयोरुदात्तत्वमनेन (पा० १।२।३७) विधीयत इत्याद्याश्चत्वार उदात्ताः । तेभ्य परः छ इत्यनुदात्तः, न चात्र छस्यो "दात्तादनुदात्तस्ये"ति (पा० ८।४।६६) स्वरितत्वप्राप्तिः "देवब्रह्मणोरनुदात्त" (पा० १।२।३८)। इति वचनात् ज्ञापकात् "तस्यादित" (पा० १।२।३२) इत्यादिनव-सूत्र्या "उदात्तादनुदात्तस्यस्वरित" (पा० ८।४।६६) इत्यनन्तरं कर्तव्यतया 'न सुब्रह्मण्यायामि' (पा० १।२।३७) ति गकारस्योदात्तस्यासिद्धत्वान्न स्वरितत्वम् । हरिव इति आमन्त्रितस्यादिरुदात्तः (पा० ६।१।१९८) ततः परः 'स्वरितात् संहितायामनुदात्तानाम्' (१।२।३७) दात्तः इति द्वावुदात्तौ अन्त्योऽनुदात्तः । आगच्छेत्यत्रापि द्वावुदात्तौ अन्त्योऽनुदात्तः । मेधातिथेरिति षष्ठ्यन्तस्य "सुबामन्त्रिते पराङ्गवत्स्वरे" (पा० २।१।२) इति मेषेत्यामन्त्रिते पराङ्गवद्भावः, तस्य पूर्ववत् "आमन्त्रितस्या" द्युदात्तत्वम् । ततः परस्य षा इत्यस्य स्वरितस्य सतो "न सुब्रह्मण्यायामि" (पा० १।२।३७) ति उदात्तत्वमिति द्वावुदात्तौ अन्त्येऽनुदात्ताः । एवं वृषणश्वस्य मेने गौरावस्कन्दिन्नहल्यायै जारेत्यादिषु पराङ्गवद्भावादि पूर्ववत् । कौशिक ब्राह्मण गौतम ब्रुवाणे इत्यत्रापि द्वौ द्वावुदात्तौ, अन्त्येऽनुदात्ताः । ननु तृतीयस्यापि "उदात्तादनुदात्तस्य स्वरित" (पा० ८।४।६६) इति स्वरितस्योदात्तत्वं प्राप्नोति । एवं परस्यापि स्यात् । न स्यात्—स्वरितग्रहणसामर्थ्यात् यदि सर्वे उदात्ता भवेयुस्तदा नेति प्रतिषेधोऽप्यनर्थकः स्यात् 'सुब्रह्मण्यायामुदात्त' इत्येव वक्तव्यं स्यात् उभयग्रहणसामर्थ्याच्च सर्वेषामुदात्तत्वम् । श्वः सुत्यामागच्छ मघवन्निति श्व इति निपातस्वरेणोदात्तः । सुत्याशब्दः "संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः" (पा० ३।३।९९) इति सुनोतेः क्यप् । तत्रोदात्त इत्यनुवर्तते तेन उदात्तः इति सुत्याशब्दोऽन्तोदात्तः सु इत्यनुदात्तः "उदात्तस्वरितपरस्य सन्नतर" इत्यनुदात्ततरः (पा० १।२।४०) आगच्छेति द्वावुदात्तौ परोऽनुदात्तः तदन्तवाक्यस्थेन पदान्यतात्स्थापमिकेन आमन्त्रितस्य (पा० ८।१।१९) इत्येनेन मघवन्निति सर्वनिघातः 'देवब्रह्मणोरनुदात्तः (पा० १।२।३८) देव ब्रह्माणित्येतयोः स्वरितस्यानुदात्तो भवति । देवा ब्रह्माण आगच्छतागच्छतागच्छत देवब्रह्मणोरनुदात्तत्वमेक ? इति वार्तिकात्पदद्वयसामानाधिकरण्यपक्षे "आमन्त्रितं पूर्वमविद्यमानवत्" (पा० ८।१।७२) इत्यनुपस्थितौ 'विभाषितं विशेषवचने बहुवचनम्" इति (पा ८।१।७४) विद्यमानत्वात् 'आमन्त्रितस्ये'ति (पा० ८।१।१९) निघाते ब्रह्माण इत्यस्य सिद्धे देवस्ये (पा० १।२।३८)ति कर्तव्यसूत्राद् दे मात्रमुदात्तं मा भूत् । 'असावित्यन्त' (वा० ८१९) इति वार्तिकेन प्रथमान्तस्यान्त उदात्तः 'अर्थं नित्यं परीक्षेत' (१।३।२३) मिति चार्थं द्राह्यायणिसूत्रवचनान्तरं अर्थो निरुच्य प्राधान्येन प्रतिपाद्यते तदर्थं निर्वचने पदं पदमित्येव तु घोक्तं समासे पूर्वपदानामन्तोदात्तता मा भूदिति । ततो यजत इति निहतस्यास्योदात्तादनुदात्तस्य स्वरितत्वे (पा० ८।४।६६) स्वरितस्यानुदात्तः । अमुष्येत्यन्त इति तु षष्ठ्यन्तोपलक्षणार्थत्वे दाक्षेः औरेविदायाः मित्रगर्भेणः पित्रेति पिता "असावित्यन्त" (वा० ८१९) इत्यन्तोदात्तः "स्यान्तस्योपोत्तमं च" (वा० ८१७)ति गार्ग्यस्य पितेति गार्ग्यशब्दस्य यकारात् स्यतान्तस्य चोदात्तत्वम् "वैभक्तेन च स्यादौ वैभक्तीये (द्रा० श्रौ० १।३।१४)ति निर्वचनागतात् 'वा नामधेयस्य (वा०,८१८)'ति स्यान्तस्यापोत्तमं वा उदात्तं स्यादन्यथा स्यादेव,

जनिष्यमाणानामित्यत्र तु प्रत्ययस्वरेण स्य उदात्तः "तास्यनुदात्ते (पा० ६।१।१८६) दिति शानचः अनुदात्तत्वे "उदात्तादनुदात्तस्य स्वरित" (पा० ८।४।६६) इति स्वरितत्वे ष्यमा एतावुदात्तौ, अन्यत 'अनुदात्तं पदमेकवर्ज (पा० ६।१।१५८) मित्यनुदात्तं "पिता-पितामहप्रपितामह इत्यत्र तु पितामहप्रपितामहयो "रसावि"(पा०८।१।१)त्यन्त्योदात्तत्वेऽपि "उदात्तादनुदात्तस्ये"ति स्वरित (पा०८।४।६१) त्वे "न सुब्रह्मण्यायाम्"(पा०१।२।३७)मिति आद्याक्षरयोरेव पित्रयोरुदात्तता न तु प्रारम्भस्य 'पि' शब्दस्येति सुब्रह्मण्यानामस्वरः।

अत्रेदं चिन्त्यते। ज्योतिष्टोमे "सुब्रह्मण्यां च प्रेष्यति वैतापुत्रीश (का० श्रौ० ८।१।११) मिति सूत्रितम्। तत्र संशयः। पित्रादीनां पतितत्वे सुब्रह्मण्यानामग्राहः कर्तव्यो न वेति सन्देहे पित्रादीनां शास्त्रीयकर्मसम्बन्धाभावात् कर्तव्य इति पूर्वपक्षे वक्ष्यमाणः

सिद्धान्तः— पितुर्न नाम निर्देश्यं महापातकदोषिणः।
आवेदनादिकार्येषु किन्तु तत्परमाविनाम्॥
पितामहपुरोगाणां त्रयाणां नाम निर्दिशेत्।
पितामहोऽपि दुष्टश्चेत् प्रपितामहपूर्वकाः॥
निर्देष्टव्यावयो मर्त्यास्तस्मिन्नपि विदूषिते।
प्रपितामहपित्राद्यावयो वाच्या यथाक्रमम्॥
दुष्टश्चेन्मध्यमः कश्चित्तद्वर्जं पूर्वपश्चिमान्।
त्रीनेव निर्दिशेन्मर्त्यान् किन्त्वत्रैतद्विशिष्यते॥
येषां केषाञ्चिन्मर्त्यानां नामान्यध्वर्युरादिशेत्।
तेषां पुत्रश्च पौत्रश्च नप्तेत्यादिश्यते पतिः॥
पितामहादित्रितये पित्रादित्रयभावना।
अन्यादृशेऽपि सम्बन्धे निर्देशस्त्वेवमेव हि॥
मात्रादीनामिदं स्त्रीणां योजनीयमशेषतः।
निर्देशत्यागयोर्नाम्नो महापातकसम्भवे॥

द्व्यपके निर्णयः—यजमानस्य यस्य द्वौ पितरौ वा पितामहौ।
पितुः पितामहौ तस्य निर्दिशेद्वंशयोर्नरान्॥

मात्रादिवंशे तत्सपत्नीनामप्युल्लेखो भवति—
निर्देश्यानां च योषाणां सपत्न्योऽत्र भवन्ति चेत्।
तासामपि समस्तानां नामनिर्देश इष्यते॥

पुत्रनामनिर्देशे निर्णयः—औरसा एव पुत्रा ये महापातकवर्जिताः।
तेषां नाम ग्रहीतव्यं सुब्रह्मण्यादिकर्मसु।
पुत्राणां क्षेत्रजादीनां साधूनामपि नेष्यते।
तथैव भ्रातृपुत्राणां पुत्रिकासन्ततेरपि।
जीवतामेवापत्यानां यथा ज्यैष्ठ्यं प्रकीर्तितम्।
स्त्रीप्रजानामधेयं च पुंवदेव प्रकीर्त्यते।
नप्त्रादीनामपत्यानि यदि जातानि कानिचित्।
तेषामपि समस्तानां नामधेयं विनिर्दिशेत्॥
जनिष्यमाणापत्यानामिदानीं नाम वर्जयेत्।
जनिष्यमाणशब्देनैवैष्ट सम्बन्धकीर्तनम्। [त्रि० सं० १।१५०-१६३] मिति॥

आध्वर्यवपद्धतिः ।

आदित्याम्यये ऽहुतायामपि ।

## ( पशुपुरोडाशनिर्वापादि । )

ततः पशुपुरोडाशनिर्वापः(१) । तत्र यदि पूर्वं प्रणीताप्रणयनं न कृतं चेदत्र शालाद्वार्योत्तरवेद्योरुत्तरतो द्विरुत्करे द्विश्चेति चतुरासनम्। उत्करे वाचस्पतिप्रैषः । पूर्वप्रणीतानामभावेऽत्र प्रणीताप्रणयनम् । उत्तरवेद्युत्तरतो निधानम् ।

औद्गात्रपद्धतिः ।

शब्दश्च यस्मिन्ननुबद्धो यजनेश्वादिर्ज्जनिष्यमाणानाञ्च समासवचने तृतीयचतुर्थेऽष्टमनवमे द्वादशत्रयोदशचतुर्दशान्यञ्च सप्तदशं नीचमनादिष्टमिति ।

रात्रौ वसतीवरीपरिहरणे कृते अध्वर्युणा प्रेषितः सुब्रह्मण्यः पूर्ववत्सनामग्राह्यं सुब्रह्मण्यामाह्वयेत् ।

हौत्रपद्धतिः ।

ततो यथाप्रपन्नमुपनिष्क्रम्येदमाप इति तृचेन चात्वाल उपस्पृश्योत्सृज्येते ।

(२)"इदमापः प्र वहत यत्किञ्च दुरितं मयि । यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् ।

आपो अद्यान्वचारिषं रसेन समगस्महि । पयस्वानग्न आ गहि तं मा संसृज वर्चसा ।

सं माग्ने वर्चसा सृज सं प्रजया समायुषा । विद्युर्मे अस्य देवा इन्द्रो विद्यात्सह ऋषिभिः" ।

ततः पशुपुरोडाशायामन्त्रितावाग्नीध्रीयं होतृधिष्ण्यञ्चोत्तरेण गत्वा

---

( १ ) अत्र मीमांसा—उपकारी संस्कृतिर्वा पुरोडाशः पशूदितः ।
तद्धितोक्त्या द्वयोर्देवभेदादुपकृतिर्मता ॥
सन्दंशान्निश्चितेऽङ्गत्वे द्वयोऽर्थः स्मृतिसंस्कृतिः ।
देवान्तरं चेद्धिकृतावग्नीषोमनिवर्तनम् ॥
( जै० न्या० मा० १०।१ अ० ९ ) ।

अन्यच्च—बर्हिराज्यपुरोडाशशब्दाः संस्कारवाचिनः ।
जात्यर्था वा शास्त्रदेस्ते स्युः संस्कारवाचिनः ॥
जातिं त्यक्त्वा न संस्कारे प्रयुक्ता लोकवेदयोः ।
विनापि संस्कृतिं लोके दृष्टत्वाज्जातिवाचिनः ॥ (जै० न्या० मा० १।४।२२-२३(

( २ ) ऋ० १।२३।२२—२४

आध्वर्यवपद्धतिः।

पात्रासादनम्। शूर्पाग्निहोत्रहवणिकपालान्येकादश(१)। पक्षे द्वाविंशतिः। कृष्णाजिनम्। उलूखलमुशलम्। वपवेदः। उपसर्जनीपात्रम्। ध्रुवा। पुरोडाशपात्री। पक्षे पात्र्यौ। श्रृतावदानम्। मौपधम्। पूर्णपात्रम्। पक्षे समिच्च।

उपकल्पने पडवत्तम्।

शालाद्वाय स्फ्येोपहिताया पात्र्यामोपधकरणादि।

चिलालम्भे देवयोः इति।

मुशलावधाने देवाम्या(१।१५) मिति(२)।

धान्यावापे धिनुहि देवाचि(१।२०)ति।

पक्षे श्रयोऽप्यनूहिताः।

ग्रहणे अग्नीषोमाभ्याञ्जुष्टं गृह्णामि।

पक्षे ऐन्द्राग्नस्य च। इन्द्राग्निभ्याञ्जुष्टं गृह्णामि।

प्रोक्षणे त्वाधिकः।

पात्रप्रोक्षणान्ते (३)प्रोक्षणीनां निःशेषकरणम्।

---

(१) समन्त्रकमेकादशकपालोपधानचित्रम्।




(२) अत्र वाग्विसर्जनम्। तत्र मीमांसा—

पशुकाले पुरोडाशकाले वा वाग्विसर्जनम्।

तन्निरत्वादादिमोऽन्त्यः स्याद्वारयमारकर्तृसंस्कृतिः। (जै०न्या०मा० ११।३।९)

(३) अत्र मीमांसा—प्रोक्षणीः संस्कृतिर्जातिर्योगो वा सर्वभूमिषु।

तयोक्तेः संस्कृतिर्जातिः स्याद्वृद्धेः प्रबलत्वतः।

अन्योन्याश्रयतो नाऽऽद्यो न जातिः कल्प्यशक्तितः।

योगः स्यात्क्लृप्तशक्तित्वात् क्लृप्तिर्ल्याकरणादपेव।

(जै० न्या० मा० १।४ अ० ९)।

आध्वर्यवपद्धतिः ।

पक्षे संयवनान्ते निर्देशः । इदमग्नीषोमयोः । इदमिन्द्राग्न्योः ।

आप्योदकदानान्ते अग्नीदस्त्यमुद्यम्य स्रुचर्ड० (१)सम्मृड्ढीति प्रैषोऽन्तःपात्ये ।

ततो ध्रुवास्रुवावदानपुरोडाशपात्रीणां सम्मार्गः ।

सम्मार्जनापासनम् ।

अन्तःपात्ये ध्रुवायां चतुर्गृहीतग्रहणम् ।

उपभृत्समीपे घृताचीति मन्त्रेण सादनम् ।

ततः पुरोडाशविभस्मीकरणादि ।

प्राणदाने-अग्नीषोमौ गच्छ । पक्षे-इन्द्राग्नी गच्छ ।

ध्रुवालम्भः । पुरोडाशस्य च । पक्षे द्वयोः । नात्मालम्भः । कृतत्वात् ।

न व्रतग्रहणं (२)यजप्रैषावाज्यभागौ ।

अग्नयेऽनुब्रूहि ।

आप्याय्याप्याय्य चतुर्गृहीतग्रहणम् ।

अग्निं यज ।

इदमग्नये न मम ।

हौत्रपद्धतिः ।

यथाधिष्ण्यमुपविशतः(३) ।

ततोऽध्वर्युर्वा यजप्रैषावाज्यभागौ(४) वार्त्रघ्नौ ।

---

(१) अत्र मीमांसा—सम्मार्ष्टि स्रुच इत्यत्र किं प्रधानाख्यकर्मता ।
गुणकर्मत्वमथवा दृष्टाभावेऽवघातवत् ॥
गुणत्वं न हि सम्मार्ज्यं प्राधान्यं तु प्रयाजवत् ।
अदृष्टकल्पनेनापि गुणत्वे स्याद् द्वितीयया ॥
(जै० न्या० मा० २।१।१६-१७) ।

(२) न प्रयाजानुष्ठानम् । अत्र मीमांसा—
पशावङ्गस्थितैर्नास्ति पुरोडाशे तत्क्रिया ।
अस्ति वा विद्यमानान्तो दर्शतन्त्रस्तु लोकवत् । (जै० न्या० मा० १२।१।१) ।
अत्रैव "इडामवद्यत्यक्रियाऽन्यस्य समानार्थत्वात् । न, चोदनाभेदात् । कालगुणभेदाच्च" (६।७।२६-२८) इति कात्यायनसूत्राण्यपि द्रष्टव्यानि ।

(३) अत्र ब्रह्मयजमानौ स्वस्थाने दक्षिण आसाते तूष्णीम् । एवं होतृमैत्रावरुणावपि पशुपुरोडाशयागार्थमामन्त्रितौ चात्वालोत्करावन्तरेण प्रविश्य आग्नीध्रीयधिष्ण्यमुत्तरेण गत्वा सदः प्रविश्य होतृधिष्ण्यं चोत्तरेण गत्वा यथाधिष्ण्यमुपविशतः । ब्रह्मा च पशुपुरोडाशप्रचारे उत्तरवेदेर्दक्षिणतो बर्हिषि समन्त्रकमुपविशेत् ।

(४) अत्र केचित्प्रैषद्वयपूर्वकं पशुपुरोडाशाङ्गत्वेन यजप्रैषावाज्यभागौ मन्यन्ते, तत्र प्रैषाभावादौ नैव पुरोऽनुवाक्यायाः । याज्यायाश्च देवतोद्देशपूर्वकं प्रकृतित्वात् ।

आध्वर्यवपद्धतिः।

सोमायानुब्रूहि।
सोमं यज।
इदं० सोमाय न मम।
पुरोडाशयागे अवदन्नाह—
अग्नीषोमाभ्यां पुरोडाशस्यानुब्रूहि।
जुह्वामुपस्तीर्य उपभृति च स्विष्टकृदर्थं जुह्वामवदाय उपभृति च स्विष्टकृदर्थं जुह्वां प्रत्यभिघार्य। पक्षे नोपभृति।
अत्याक्रम्याश्राव्य प्रत्याश्राविते—
अग्नीषोमाभ्यां पुरोडाशं प्रेष्य।
इदमग्नीषोमाभ्यां न मम।
पक्षे यत्य जुह्वामुपस्तारः।
अवदन्नाह—
इन्द्राग्निभ्यां पुरोडाशस्यानुब्रूहि।
उभयत्रावदायोभयत्र प्रत्यभिघारः।

हौत्रपद्धतिः।

ततोऽग्नीषोमाभ्यां पुरोडाशस्यानुब्रूहि।
मैत्रावरुणः—
(१)"अग्नीषोमा यो अद्य वामिदं वचः सपर्यति तस्मै धत्तं सुवीर्यं गवां पोषं स्वश्व्यो३म्"।
अग्नीषोमाभ्यां पुरोडाशं प्रेष्य।
मैत्रावरुणः—
होतायक्षदग्नीषोमौ पुरोडाशस्य जुषेतां हविर्होतर्यज।
होता—
भूर्भुवर्य ४ यजामहे(२)ऽग्नीषोमा पिपृतमर्वतो न आ प्यायन्तामुस्रिया हव्यसूदः अस्मे बलानि मघवत्सु धत्तं कृणुतं नो अध्वरं श्रुष्टिमन्ता ४ वौ ४ षट्।
ओजः सहः सह ओजः स्वः।
इन्द्राग्निभ्यां पुरोडाशस्यानुब्रू ३ हि, इत्युक्ते।
मैत्रावरुणः—
(३)आ वृत्रहणा वृत्रहभिः शुष्मैरिन्द्र यातं नमोभिरग्ने अर्वाक् युवं राधोभिरकवेभिरिन्द्राग्ने अस्मे भवतमुत्तमे भो३म्।

---

१ (१) ऋ० १।९३।२ (२) ऋ० १।९३।१२ (३) ऋ० ६।६०।३

आध्वर्यवस्तवविः ।

आश्राविते इन्द्राग्निभ्यां पुरोडाशं प्रेष्य—

इदमिन्द्राग्निभ्यां न मम ।

हुत्वा समानीय ।

अग्नये स्विष्टकृतेऽनुब्रूहि ।

ओ३श्राऽवय ।

अस्तु श्रौ३षट् ।

अग्नये स्विष्टकृते प्रेष्य ।

इदमग्नये स्विष्टकृते न मम ।

हौत्रस्तवविः ।

तत इन्द्राग्निभ्यां पुरोडाशं प्रेष्य ।

मैत्रावरुणः—

होतायक्षदिन्द्राग्नी जुषेतां हविर्होतर्यज ।

होता—

भूर्भुवःस्वः ये यजामहे (१)गीर्भिर्विप्रः प्रमतिमिच्छमान ईट्टे रयिं यशसं पूर्वभाजं इन्द्राग्नी वृत्रहणा सुवज्रा प्र नो नव्येभिस्तिरतं देष्णैर्वौ३षट् ।

ओजः सहः सह ओजः स्वः ।

ततो (२)निर्गुणः स्विष्टकृद्यागः ।

अग्नयेऽनुब्रूहीत्युक्ते ।

मैत्रावरुणः—

(३)इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ओ३म् ।

ततोऽग्नये प्रेष्य ।

मैत्रावरुणः—

होतायक्षदग्निं पुरोडाशस्य जुषतां हविर्होतर्यज ।

होता—

भूर्भुवःस्वः ये यजामहे(४)ऽग्निं सुदीतिं सुदृशं गृणन्तो नमस्यामस्त्वेड्यं जातवेदः त्वां दूतमरतिं हव्यवाहं देवा अकृण्वन्नमृतस्य नाभिं वौ३षट् ।

ओजः सहः सह ओजः स्वः ।

---

(१) ऋ० ७।९३।४।

(२) अत्र मीमांसा—स्विष्टकृत्यगुणो लोप्यो याग एवाविहेतु वा ।
मन्त्रवन्ययाचारात् एव प्रयोगान्यथोऽस्तितः ॥
( जै० न्या० मा० १०।४।३० ) ।

(३) ऋ० ३।१।२३ (४) ऋ० ३।१७।४

आध्वर्यवपद्धतिः ।

पक्षे तन्त्रेण स्विष्टकृत् । उदकोपस्पर्शः ।

निधाय स्रुचौ इतरा वेदेरुपग्रहेण । न सञ्चराम्युक्षणम् ।

प्राशित्रादिचतुर्धाकरणवर्जम् । भागपरिहरणान्तं पौर्णमासवत् । न पवित्रप्रतिपत्तिः ।

## ( पशुयागः )

ततः पशोर्विशसनम् । पक्षे पश्वोः ।

प्रत्येकमङ्गान्यवद्यति (१)हृदयं जिह्वां क्रोडं०सव्यसक्थिपूर्वनड्वं पार्श्वे यकृद्वृक्कौ गुदमध्यं दक्षिणा श्रोणिः, इत्येकादश जौहवानि ।

दक्षिणसक्थिपूर्वनड्वं गुदतृतीयाणिष्ठं सव्या श्रोणिः, इति औपभृतानि ।

गुदतृतीयं वपिष्ठमुपयड्भ्यः ।

अवदानकाले प्रविभागः । (२)वनिष्ठुर्जाघनी च । नात्र भागाय

हौत्रपद्धतिः ।

उदकोपस्पर्शनम् ।

ततो पुरोडाशेडोपह्वानं पशाञ्जनादि, देवी देवपुत्रे उपहूतोऽयं यजमानोऽस्य यज्ञस्यागुर उदृचमशीयेति तस्मिन्नुपहूत । प्राशमं नात्र मैत्रावरुणस्य । केचित्तु भक्षणमिच्छन्ति । मार्जनम् ।

## ( पशुयागः )

अथपशुनाऽऽचरन्ति ।

---

(१) हृदयमाम्रफलसदृशम् । वृक्कौ कुक्षिस्थौ गोलकौ महदामलकतुल्यौ । आम्रफलाकृती इति धूर्तस्वामिनः । गुदमध्यं येन शकृन्निर्गच्छति तत् ।

अत्र मीमांसा—हृदादिः शकृदादिश्च पशालम्भप्रयोजकः ।

हृदादिरेव याऽऽद्योऽस्तु प्रकृतत्वेन साम्पत ॥

हविषा यागशेषत्वाद्धृदादेर्हविरात्मनः ।

प्रयाजकत्वं तस्यैव नेतरस्यातथात्वत ॥ ( जै० न्या० ४।१।२४-२५ ) ।

पशु कृत्स्नो हवि किं वा प्रत्यङ्गं हविरन्यता ।

आद्यश्चोदनया सैवमवदानपृथक्त्वतः ॥

एकेनाङ्गेन सर्वैर्वा यद्वैकादशभिर्यजि ।

एकेन यागसिद्धेर्हविषां भेदतोऽखिलै ॥

एकादशभिरन्येषां परिसङ्ख्या भवेद्यतः ।

न त्रिदोषी गत्यभावादश्रुतोक्तेश्च सोचिता ॥(जै०न्या०मा०१०।७।१-३

(२) वनिष्ठु -स्थूलान्त्रम् ।

जाघनी—जघनप्रदेशे भवा, पुच्छदण्ड । ।

आध्वर्यवपद्धतिः।

उखादानम्।

"ॐ घौरसि पृथिव्यसि" (१।२)।

मातरिश्वन इत्यधिश्रयति।

"ॐ मातरिश्वनो घर्मोऽसि विश्वधा असि।

परमेण धाम्ना दृꣳहस्व मा ह्वार्मा ते यज्ञपतिर्ह्वार्षीत्"। (१।२)

यजमानान्वारब्धायामङ्गानि प्रक्षिपति।

पक्षे ऐन्द्राग्नस्यापि तस्यामेव श्रपणम्।

सौकर्य्यादन्यस्यां वा। अन्यपक्षे तस्या अपि मन्त्रवत्संस्काराः सर्वे।

ततः शमितारꣳ शास्ति त्रिः प्रच्यावयतात्त्रिः(१) प्रच्युतस्य हृदयमुत्तमं कुरुतादयत्वा पृच्छाच्छृतꣳ० हविः शमिता३ रिति शृतमित्येव ब्रूतान्न शृतं भगवो न शृतꣳ० हीति(का० श्रौ० ६।८।१)।

त्रिःप्रच्युते हृदयं प्रवृह्यात्तमं उखास्थाङ्गोपरि करोति। शूलं वाभूमौ। पक्षे तन्त्रेणोहितः प्रैषः।

त्रिः प्रच्यावयतात्त्रिः प्रच्युतस्य हृदये उत्तमे कुरुतादयत्वा पृच्छाच्छृतꣳ० हविः शमिता३रिति शृतमित्येव ब्रूतान्न शृतं भगवो न शृतꣳ० हीति।

ऐन्द्राग्नस्यापि तथा करोति।

अध्वर्युर्जुह्वा पृषदाज्यस्यादायोपनिष्क्रम्य पृच्छति त्रिवारं शृतꣳ० हविः शमितः।

तेन शृतं इति प्रोक्ते उपांशु अध्वर्युः तद्देवानामित्याह। एवं त्रिरपरम्

तत्र गत्वा पृषदाज्येन सन्ते मन इति हृदयमभिघार्य।

"ॐ सन्ते मनो मनसा सम्प्राणः प्राणेन गच्छताम्" (६।१८)।

---

पशोः साम्नाय्यधर्मतातिदेशे मीमांसा—

पुरोडाशस्य सांनाय्यस्य वा धर्मः पशौ यतः।

दैवैक्यमाद्यस्तस्माद्यो हविर्जन्मादिसाम्यतः॥ (जै० न्या० मा० ८।२।१२)।

(१) अनेकपाशुके-त्रिः प्रच्युतयोः हृदये उत्तमे कुरुतात्, इति पशुद्वयोः। त्रिः प्रच्युतानां हृदयानि उत्तमानि कुरुतात्, इति बहुषु च विपरिणामः।

केचित् प्रच्युतस्येत्यस्य।पदस्य हवि परत्वं मन्यमानाः अनूहमिच्छन्ति, तदयुक्तम्–अस्य पशुपरता श्रुत्यैव (श० ३।८।३।३) प्रकटितत्वात्। तेन वचनेवत्त्वे यथार्थमूहो भवत्येव। अत्र द्वे अनुशासने त्रिः प्रच्यावयतादित्येकम्, यत्वा पृच्छादिति द्वितीयम्। अतस्तृतीयसवने "शमित्रनुशासनप्रभृतीडान्तं कृत्वे" (का० श्रौ० १०।६।१२) इत्यत्र द्वितीयशमित्रनुशासनप्रभृति ज्ञातव्यम्। पूर्वानुशासनस्य कार्यस्य प्रातःसवन एव क्रियमाणत्वात्तत्रैव कर्त्तव्यम्।

आज्यपद्धतिः ।

आज्यस्थाल्याः स्रुवेण गृहीत्वा सर्वं पशुमभिघारयति तूष्णीम् । उद्गुद्वास्य वसापात्रे वसाग्रहणम् ।

पक्षे हृदयाभिघारणादि वसाग्रहणान्तमैन्द्राग्नस्यापि ।

(१)हृदयादिजौहवानामेकादशानां मन्त्रेण प्रत्येकं प्राणदानम् ।

"ॐ यस्ते प्राणः पशुषु प्रविष्टो देवानां विष्ठामनु यो वितस्थे ।

आत्मन्वान् सोम घृतवान् हि भूत्वाग्नीषोमौ गच्छ स्वर्यजमानाय विन्द" (का० श्रौ० २।८।१४)

औपभृतानां वसायाश्च तूष्णीम् । जाघन्या मन्त्रेण ।

पक्षे ऐन्द्राग्नस्याप्येवमेव प्राणदानम् ।

"ॐ यस्ते प्राणः पशुषु प्रविष्टो देवानां विष्ठामनु यो वितस्थे ।

आत्मन्वान् सोम घृतवान् हि भूत्वा इन्द्राग्नी गच्छ स्वर्यजमानाय विन्द" ।

औपभृतानां वसायास्तूष्णीं जाघन्याश्च मन्त्रेण ।

पश्यसौ वपावदन्तरा यूपाग्नी हृत्वा (२)दक्षिणतो वेद्यां प्रियेणेति हवींष्यासादयति भेदेन ।

"ॐ प्रियेण धाम्ना प्रियꣳ सद आसीद" (२।६) ।

औपभृतानां वसायाश्च तूष्णीमासादनम् । जाघन्या मन्त्रेण(३) ।

पक्षे ऐन्द्राग्नस्य जौहवानि मन्त्रावृत्यासाद्य तूष्णीमौपभृतानि । वसां चासाद्य जाघन्योर्युगपदासादनं मन्त्रेणोहितेन ।

"ॐ प्रियाभ्यां धामभ्यां प्रियꣳ सद आसीदतम्" (२।६) ।

प्रत्येकं समन्त्रकमालम्भनं जौहवानां, औपभृतानां, वसायाश्च तूष्णीं जाघन्या मन्त्रेण ।

पक्षे ऐन्द्राग्नस्यापि ।

ध्रुवा असदन्निति जौहवान्यालभनेऽध्वर्युः ।

"ॐ ध्रुवा असदन्नृतस्य योनौ ता विष्णो पाहि पाहि यज्ञं पाहि पशुपतिम्" (२।६) ।

---

(१) अत्र हृदयादीन्येव हवींषि, पशुस्तु मोहिपवत्सरप्रकृतिद्रव्यं, अतो हृदयादीनां प्रत्येकं प्राणदानं मन्त्रावृत्त्योर्द्धादिवदानं च भवतीति हरिस्वामिनः ।

(२) उत्तरत आसादने प्राप्ते "दक्षिणत" (का० श्रौ० ६।८।७) इति वचनाद्दक्षिणत आसादनम् ।

यद्वा: साम्राज्यविकारस्यास्यापि (उत्तरा) मेवासादने प्राप्ते "वेद्यामि"तिवचनात् (का० श्रौ० ६।८।७) वेद्यामासादनम् ।

(३) लौकिकहृतानां भागावदानानां चासादनालम्भने न भवतः ।

आध्वर्यवपद्धतिः ।

औपभृतानां वसायाश्च तूष्णीम् । आघन्या मन्त्रेण । नात्मालम्भः । तूष्णीं वनिष्टोर्निधानम् ।

दक्षिणतः प्रतिप्रस्थाता वेद्यां प्लक्षशाखास्ववद्यति ।

जुहूपभृतोरुपस्तृणीते वसाहोमहवन्यां प्राशित्रे पात्र्यां च जुहूपभृतोर्हिरण्यशकलावधानम् ।

मनोतायै हविषोऽवदीयमानस्यानुब्रूहि ।

इति प्रतिप्रस्थानोक्ते स्रुचोरवद्यति यथोक्तं विधिः ।

अशेषे गुदतृतीये यथावद्धिरण्यम् ।

तच्चेत्थम्—प्रतिप्रस्थाता प्लक्षनाद्गुदपर्वमात्रं हृदयं० सतधा कृत्वाध्वर्यवे प्रयच्छेत् ।

ततोऽध्वर्युर्भागद्वयं जुह्वां भागद्वयं प्राशित्रे भागद्वयमिडायां चकं संस्पर्शनार्थं निदध्यात् । एवं जिह्वाक्रोडयोः भागत्रयं प्रतिप्रस्थातुः ।

हौत्रपद्धतिः ।

## ( पशुप्रचारः )

तत्र मनोतायै हविषोऽवदीयमानस्यानुब्रू ३ ही त्युक्तो—

मैत्रावरुणः—

(१)त्वं ह्यग्ने प्रथमो(२) मनोतास्या धियो अभवो दस्म होता ।
त्वं सीं वृषन्नकृणोर्दुष्टरीतु सहो विश्वस्मै सहसे सहध्यौ३ ।
त्वं ह्यग्ने प्रथमो मनोतास्या धियो अभवो दस्म होता ।
त्वं सीं वृषन्नकृणोर्दुष्टरीतु सहो विश्वस्मै सहसे सहध्यौ३ ।
त्वं ह्यग्ने प्रथमो मनोतास्या धियो अभवो दस्म होता ।
त्वं सीं वृषन्नकृणोर्दुष्टरीतु सहो विश्वस्मै सहसे सहध्यौ३ ।
अधा होता न्यसीदो यजीयानिळस्पद इषयन्नीड्यः सन् ।
तं त्वा नरः प्रथमं देवयन्तो महो राये चितयन्तो अनुग्मो३
वृतेव यन्तं बहुभिर्वसव्यैस्त्वे रयिं जागृवांसो अनु ग्मन् ।
रुशन्तमग्निं दर्शतं बृहन्तं वपावन्तं विश्वहा दीदिवांसो३

---

( १ ) ऋ० ६। १। १—१३

( २ ) अत्र मीमांसा—

मनोतामन्त्र ऊहोऽस्ति वायव्ये नास्ति वाऽस्त्यसौ ।
अग्नेर्ध्येरेतिवचनं प्रकृतौ साधकं यत ॥
अग्नीषोमावग्निनैव लक्ष्येतां वचनं विना । ।।
अनर्थकात्तत्र वाक्याद्विकृतावूहवारणम् । ( जै०न्या० १०।४।३४—३५ ) ।

आध्वर्यवपद्धतिः ।

निधानमध्वर्योः सर्वत्र ।

सव्यसक्थिपूर्वनडकपार्श्वयोश्च पञ्चधाकरणम् । तत्रावदानद्वयं जुह्वां भागद्वयं प्राशित्रे एकं सम्मर्शनार्थे ।

ततो यकृतो वृक्कयोश्च सतधा हृदयवद्भागकरणं निधानञ्च । गुद-मध्यस्य द्वेधाकरणं तच्च जुह्वायामेव ।

ततो दक्षिणश्रोण्योः पञ्चधा सव्यसक्थिपूर्वनडकवत् ।

ततो दक्षिणसक्थिपूर्वनडकगुदतृतीयाणिष्ठसव्यश्रोणीनामवदानद्वयं, द्वयमुपभृति । तदवशिष्टं सम्मर्शनार्थं वपावद्धिरण्यम् । जुह्वपभृतोरुप रिष्टात्कृत्वा जुह्वां सकृत्प्रत्युपस्तीर्य उपभृति द्विः प्रत्युपस्तारः ।

ततो वसापात्रेण वसाग्रहणं रेडसीति ।

"ॐ रेडस्यग्निष्ट्वा श्रीणात्वापस्त्वा समरिणन् वातस्य त्वा ध्राज्यै पूष्णो रᳪह्या ऊष्मणो व्यथिषत्" (६।१८) ।

द्विरभिघार्य प्रयुतमिति पार्श्वेन सर्ठ०सृज्यत्वसिना वा ।

"ॐ प्रयुतन्द्वेषः" (६।१८) ।

हौत्रपद्धतिः ।

पदं देवस्य नमसा व्यन्तः श्रवस्यवः श्रव आपन्नमृक्तम् ।
नामानि चिद्दधिरे यज्ञियानि भद्रायां ते रणयन्त संदृष्टौ३ ।
त्वां वर्धन्ति क्षितयः पृथिव्यां त्वां राय उभयासो जनानां ।
त्वं त्राता तरणे चेत्यो भूः पिता माता सदमिन्मानुषाणो३ ।
सपर्येण्यः स प्रियो विक्ष्वग्निर्होता मन्द्रो नि षसादा यजीयान् ।
तं त्वा वयं दम आ दीदिवांसमुप ज्ञुबाधो नमसा सदेमो३ ।
तं त्वा वयं सुध्यो नव्यमग्ने सुम्नायव ईमहे देवयन्तः ।
त्वं विशो अनयो दीद्यानो दिवो अग्ने बृहता रोचनेनो३ ।
विशां कविं विश्पतिं शश्वतीनां नितोशनं वृषभं चर्षणीनाम्
प्रेतीषणिमिषयन्तं पावकं राजन्तमग्निं यजतं रयीणो३ ।
सो अग्न ईजे शशमे च मर्तो यस्त आनट् समिधा हव्यदातिं ।
य आहुतिं परि वेदा नमोभिर्विश्वेत्स वामा दधते त्वो तो३ ।
अस्मा उ ते महि महे विधेम नमोभिरग्ने समिधोत हव्यैः
वेदी सूनो सहसो गीर्भिरुक्थैरा ते भद्रायां सुमतौ यतेमो३ ।
आ यस्ततन्थ रोदसी वि भासा श्रवोभिश्च श्रवस्यस्तरुत्रः
बृहद्भिर्वाजैः स्थविरेभिरस्मे रेवाद्भिरग्ने वितरं वि भाहो३ ।
नृवद्वसो सदमिद्धेह्यस्मे भूरि तोकाय तनयाय पश्वः ।

आध्वर्यवपद्धतिः ।

वसायाः शेषमिडापात्र्यामासिच्य तस्यां क्रोडमनस्थीनि च प्रास्यति श्रोणिवर्जम् ।

वनिष्ठुं च प्रास्यति उपयड्ढोमार्थं पत्नीसंयाजार्थं च ।

सुगुप्ते आधनीं गुदं निधाय इडां हिरण्मयार्थे अवशिष्टानामङ्गानां सम्मर्शनमैन्द्रः प्राण इति विकल्पेन ।

"ॐऐन्द्रः प्राणोऽअङ्गेऽअङ्गे निदीध्यदैन्द्रऽउदानोऽ अङ्गेऽअङ्गे निधीतः। देव त्वष्टर्भूरि ते सर्ठ०समेतु सलक्ष्मा यद्विषु रूपं भवाति । देवत्रा यन्तमवसे सखायोऽनु त्वा माता पितरो मदन्तु" (६।२०) ।

तत्रोपविष्ट एवाह ।

## ( अग्नीषोमीयः प्रधानयागः )

अग्नीषोमाभ्यां छागस्य हविषोऽनुब्रूहि ।

अतिक्रम्याश्राव्याह—

अग्नीषोमाभ्यां छागस्य हविषः प्रेष्य ।

हौत्रपद्धतिः ।

पूर्वीरियो बृहतीरारे अघा अस्मे भद्रा सौश्रवसानि सन्तो३ ।
पुरूण्यग्ने पुरुधा त्वाया वसूनि राजन्वसुता ते अश्याम् ।
पुरूणि हि त्वे पुरुवार सन्त्यग्ने वसु विधते राजनि त्वो३ ।
पुरूण्यग्ने पुरुधा त्वाया वसूनि राजन्वसुता ते अश्यां ।
पुरूणि हि त्वे पुरुवार सन्त्यग्ने वसु विधते राजनि त्वो३ ।
पुरूण्यग्ने पुरुधा त्वाया वसूनि राजन्वसुता ते अश्यां
पुरूणि हि त्वे पुरुवार सन्त्यग्ने वसु विधते राजनि त्वो३म् ।

## ( अग्निषोमीयः प्रधानयागः )

ततोऽग्नीषोमाभ्यां छागस्य हविषोऽनुब्रूहीत्युक्ते—

मैत्रावरुणः—

(१)अग्नीषोमा य आहुतिं यो वां दाशाद्धविष्कृतिं
स प्रजया सुवीर्यं विश्वमायुर्व्यश्नवो३म् ।

ततोऽग्नीषोमाभ्यां छागस्य हविः प्रेष्येत्युक्ते—

मैत्रावरुणः—

होता यक्षदग्नीषोमौ छागस्य हविष आत्तामद्य मध्यतो मेद उद्भृतं पुरा द्वेषोभ्यः पुरा पौरुषेय्या गृभः ।

---

(१) ऋ० १।९३।३।

आध्वर्यवपद्धतिः ।

( वसाहोमः )

प्रतिप्रस्थाता जुहोतिस्थाने उपविश्य याज्याया अर्द्धर्चान्तरे वसैकदेशं जुहोति घृतङ्घृतपावान इति ।

"ॐ घृतं घृतपावानः पिबत वसाम्वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा" (६।१९) ।

इदं वसायै न मम ।

विश्वेभ्यो देवेभ्यो न मम इति वा ।

अन्तरिक्षायेति वा ।

वषट्कृते दैवतꣳ० हुत्वा ।

इदमग्नीषोमाभ्यां न मम ।

प्रदक्षिणमावृत्य नेतरथावृत्तिः ।

जुह्वा पृषदाज्यस्योपघ्नन्नाह ।

( वनस्पतियागः )

वनस्पतयेऽनुब्रू३हि ।

हौत्रपद्धतिः ।

वस्तान्नूनं घासे अज्राणां यवसप्रथमानां सुमत्क्षराणां शतरुद्रियाणामाग्निष्वात्तानां पीवोपवसनानां पार्श्वतः श्रोणितः शितामत उत्सादतोऽङ्गादङ्गादवत्तानां करत एवाग्नीषोमौ जुषेतां हविर्होतर्यज ।

होता—

भूर्भुवर्वे४ यजामहे(१)ऽग्नीषोमा हविषः प्रस्थितस्य वीतं हर्यतं वृषणा जुषेथां ।

अत्रार्धर्च विरमेद् वसाहोमात् ।

( वसाहोमः )

कृते(२)वसाहोमे—

सुशर्माणा स्ववसा हि भूतमथा धत्तं यजमानाय शं योꣳ वौꣳ३षट् ।

मात्रः सह सह ओजः स्वः ।

( वनस्पतियागः )

ततो वनस्पतयेऽनुब्रू३हीत्युक्ते—

मैत्रावरुणः—

देवेभ्यो वनस्पते हवींषि हिरण्यपर्ण प्रदिवस्ते अर्थं ।

---

(१) ऋ० १।९३।७

(२) वसाशब्देन पशुश्रपणार्थं निक्षिप्तमुखामाज्यस्थं लक्ष्युच्यते ।

आध्वर्यवपद्धतिः ।

आश्राव्याह वनस्पतये प्रेष्य ।

इदं वनस्पतये न मम ।

हुत्वा समानीय सौविष्टकृतं जुहाम् ।

( स्विष्टकृद्यागः )

अग्नये स्विष्टकृतेऽनुब्रूहि ।

आश्राव्याह—

अग्नये स्विष्टकृते प्रेष्य ।

हौत्रपद्धतिः ।

प्रदक्षिणिद्रशनया नियूय ऋतस्य वक्षि पथिभी रजिष्ठोऽश्म ।

वनस्पतये(१) प्रेष्येत्युक्तो—

मैत्रावरुणः—

होतायक्षद्वनस्पतिमभि हि पिष्टतमया रभिष्टया रशनयाधित यत्राश्वेराज्यस्य हविषः प्रिया धामानि यत्र सोमस्याज्यस्य हविषः प्रिया धामानि यत्राग्नीषोमयोश्छागस्य हविषः प्रिया धामानि यत्रेन्द्राग्न्योश्छागस्य हविषः प्रिया धामानि यत्र वनस्पतेः प्रिया पाथांसि यत्र देवानामाज्यपानां प्रिया धामानि यत्राग्नेर्होतुः प्रिया धामानि तत्रैतं प्रस्तुत्येवोपस्तुत्येवोपावस्रक्षद्रभीयांसमिव कृत्वी करदेवं देवो वनस्पतिर्जुषतां हविर्होतर्यज ।

होता—

भूर्भुवर्यें ४ यजामहे वनस्पते रशनया नियूय पिष्टतमया वयुनानि विद्वान् ।

वह देवत्रा दिधिषो हवींषि प्र च दातारममृतेषु वोचा ३ वौ ४ षट् । :

ओजः सहः सह ओजः स्वः ।

( स्विष्टकृद्यागः )

ततोऽग्नये स्विष्टकृतेऽनुब्रूहीत्युक्ते—

मैत्रावरुणः—

(२)पिप्रीहि देवाँ उशतो यविष्ठ विद्वाँ ऋतूँ ऋतुपते यजेह ये दैव्या ऋत्विजस्तेभि रग्ने त्वं होतॄणामस्या यजिष्ठोऽश्म् ।

ततोऽग्नये स्विष्टकृते प्रेष्येत्युक्ते—

---

( १ ) अत्र वनस्पतियागप्रैषे आश्वलायनानां आज्यभागयोर्नियमनमस्ति 'यत्राग्नेराज्यस्य हविषः' इत्यादि । शाङ्खायनानामाज्यभागयोर्नियमनं प्रैषेषु न भवति । "दार्शपौर्णमासिका निगमास्तेषु निगच्छेत" ( ६।१८।७ ) इत्युक्त्वा 'न प्रैषेषु' ( ६।१८।८ ) इति निषिद्धत्वात् ।

( २ ) ऋ० १०।२।१।

आश्वलायनपद्धतिः ।                    31763

इदमग्नये स्विष्टकृते न मम ।

( वसाशेषेण दिशां व्याघारणम् )

प्रत्येत्य वा दिशो व्याघारयति वसाहोमहवन्या वसाशेषेण वाजिनवत्सर्वं जुहोति दिश इति प्रतिमन्त्रं प्रदक्षिणम् ।

पुरस्तात्प्रथमम् । उत्तमाभ्यां मध्ये पूर्वार्द्धं च ।

"ॐदिशः स्वाहा" (६।१९)—

पूर्वस्याम् ।

इदं दिग्भ्यो न मम ।

"ॐप्रदिशः स्वाहा" (६।१९)—

दक्षिणस्याम् ।

इदं प्रदिग्भ्यो न मम ।

"ॐआदिशः स्वाहा" (६।१९)—

पश्चात् ।

इदमादिग्भ्यो न मम ।

हौत्रपद्धतिः ।

मैत्रावरुणः—

होता यक्षदग्निं स्विष्टकृतमयाडग्निरग्नेराज्यस्य हविषः प्रिया धामान्ययाट् सोमस्याज्यस्य हविषः प्रिया धामान्ययाडग्नीषोमयोश्छागस्य हविषः प्रिया धामान्ययाड् वनस्पतेः प्रिया पाथांस्ययाड् देवानामाज्यपानां प्रिया धामानि यक्षदग्नेर्होतुः प्रिया धामानि यक्षत्स्वं महिमानमायजतामेज्या इषः कृणोतु सो अध्वरा जातवेदा जुषतां हविर्होतर्यज ।

होता—

भूर्भुवर्येष यजामहे (१) ऽग्ने यदद्य विशो अध्वरस्य होतः पावकशोचे वेष्ट्वं हि यज्वा ।

ऋता यजासि महिना वि यद्भूर्हव्या वह यविष्ठ या ते अद्य ४वौ ४षट् ।

नात्र (२)निगदः । उदकोपस्पर्शनम् । ततः पश्विडोपह्वानम् । उपहूतं बृहत् देवी देवपुत्रे । उपहूतोऽयं यजमानोऽस्य यज्ञस्यागुर उद्दृचमशीयेति तस्मिन्नुपहूतः ।

---

(१) ऋ० ६।१५।१४।

(२) 'अनिगदाश्चाज्या' इत्युक्त्वात्'अग्नेः स्विष्टकृतम्'इत्यादिकः प्राकृतो निगदोऽत्र न भवति ।

आध्वर्यवपद्धतिः ।

"ॐविदिग्भ्यः स्वाहा" (६।१६)—
उत्तरतः ।
इदं विदिग्भ्यो न मम ।
"ॐउद्दिशः स्वाहा" (६।१६)—
मध्ये ।
इदमुद्दिग्भ्यो न मम ।
"ॐदिग्भ्यः स्वाहा" (६।१६)—
पूर्वार्द्धे ।
इदं दिग्भ्योन मम ।
स्रुचौ सादयित्वा ।

## ( ऐन्द्राग्नयागपक्षे प्रयोगक्रमः )

ऐन्द्राग्नपक्षे त्वेवं प्रयोगक्रमः ।

पूर्वं सर्वत्रोपस्तारं कृत्वाऽग्नीषोमीयस्यावदानानि गृहीत्वा जुह्वां हिरण्यावधान-प्रत्युपस्तरणे कृत्वोपभृति हिरण्यशकलावधान-प्रत्युपस्तारौ चाकृत्वा, पात्रे वसाग्रहण-द्विरभिघारण-सर्ठं० सर्जनानि च कृत्वा इडायां वसाशेषमासिच्य क्रोडं श्रोणिवर्जमनस्थीनि च प्रास्य अनभिघार्य जाघन्यादि निधाय पशुसम्मर्शनमकृत्वाऽग्नीषोमीयप्रधानयागं कृत्वा वसाहुतशेषं पात्रान्तरे कृत्वा प्रत्येत्य जुह्वां वसाहोमहवन्यां चोपस्तीर्यं जुह्वां हिरण्यं निधाय जुहूपभृत्प्राशित्रेडासु पूर्ववदवदाय जुहूपभृतोर्हिरण्यशकले अवधाय सर्वत्र प्रत्युपस्तीर्य वसाग्रहणादि-जाघन्यादिनिधानान्तं पूर्ववत्कृत्वा उभयशेषं तन्त्रेणाभिमृश्य—

## ( ऐन्द्राग्नः प्रधानयागः )

इन्द्राग्निभ्यां छागस्य हविषोऽनुब्रूहि ।

हौत्रपद्धतिः ।

प्राशनम् । (१)मैत्रावरुण-प्रतिप्रस्थात्रोरप्यत्र केचिद्भक्षमिच्छन्ति । मार्जनम् ।

## ( ऐन्द्राग्नः प्रधानयागः )

तत इन्द्राग्निभ्यां छागस्य हविषोऽनुब्रूहीत्युक्तो—
मैत्रावरुणः—
(२)ता योधिष्टमभि गा इन्द्र नूनमपः स्वरुषसो अग्न ऊळ्हाः

---

(१) 'अध्वर्युविकारात्प्रतिप्रस्थाता भक्षेषु, मैत्रावरुणश्च होत्रध्वर्युविकारात्' (का० श्रौ० ५।५।२५ २६ ) इति कात्यायनवचनादत्र मैत्रावरुणप्रतिप्रस्थात्रोरपि इडाभक्षणं केचिदिच्छन्ति । (२) ऋ० ६।६०।२

आध्वर्यवपद्धतिः ।

ओ३श्रा३वय ।

अस्तु श्रौ३षट् ।

इन्द्राग्निभ्यां छागस्य हविषः प्रेष्य ।

अर्द्धर्चान्तरे वसाहोमः (१)पूर्ववत् ।

इदमिन्द्राग्निभ्यां न मम ।

प्रदक्षिणमावृत्य नेतरथावृत्तिः ।

ततो वनस्पति-स्विष्टकृद्यागौ ।

तत उभयवसाशेषर्द्धं०सर्द्धं०सृजते । न दिग्यागः (२)पूर्ववदिति ।

ततः स्रुचौ सादयित्वा सञ्चरमभ्युदय ।

अत्र वा पशुसम्मर्शः ।

प्राशित्रसमर्पणम् । उदकोपस्पर्शः ।

इडामादधाति वनिष्ठु निष्कास्य होत्रे इडासमर्पणं प्रकृतिवत् ।

भागावदानानामभावेऽप्युपाहूतायामग्नीधे (३)वनिष्ठुदानम् ।

षड्विडायां ब्रह्महोत्रध्वर्युस्त्याद्(४) प्रशास्त्रग्नीध्रयजमानानां सप्ताना-मिडाभक्षः ।

पशुपुरोडाशे तु स्या(५)द्वर्जं षण्णाम् ।

हौत्रपद्धतिः ।

दिशः स्वरुषस इन्द्रचित्रा अपो गा अग्ने युवसे नियुत्वो३म् ।

तत इन्द्राग्निभ्यां छागस्य हविषः प्रेष्येत्युक्तो—

मैत्रावरुणः—

होतायक्षदिन्द्राग्नी छागस्य हविष आत्तामद्य मध्यतो मेद उद्भृतं पुरा द्वेषोभ्यः पुरा पौरुषेय्या गृभः ।

घस्तान्नूनं घासे अज्राणां यवसप्रथमानां सुमत्क्षराणां शतरुद्रि-याणामग्निष्वात्तानां पीवोपवसनानां पार्श्वतः श्रोणितः शितामत उत्सा-

---

(१) २४७ पत्रे द्रष्टव्यम् । (२) २४१ पत्रे द्रष्टव्यम् ।

(३) अत्र मीमांसा—

वनिष्टुरपि तद्वत्स्यात्प्राप्तिः प्रासनतो यदि ।

इडासंस्कार एवार्थं भक्षो विक्रियते ततः । ( जै० न्या० १०।७।२ ) ।

(४) मैत्रावरुणनाम्नोऽत्र भक्षो नास्त्यस्ति वा नहि ।

अप्राकृतत्वादध्वर्युहोत्रन्तर्भावतोऽस्ति सः ।

द्विभाग एकभागो वा द्विभागः स्याद् द्विकर्मतः ।

एकः पुमैक्यतो नो चेद्वैषम्यं प्रकृतावपि । ( जै० न्या० मा० १०।७।८-९ ) ।

(५) प्रतिप्रस्थातुरस्त्यस्ति भक्षो नो वा वपामयौ ।

पयत्वतोऽस्ति, नो पशौ वपा सर्वहुता यतः । ( जै० न्या० मा० १०।७।१० ) ।

आध्वर्यवपद्धतिः।

मार्जिते पवित्रप्रतिपत्तिः।

समस्योल्मुके समिधमादायाह सावसानान् चतुरः प्रैषान्।

अग्नीदौपयजानङ्गारानाहर।

उपयष्टरुपसीद।

ब्रह्मन्प्रस्थास्यामि।

समिधमाधायाग्निमग्नीत्सम्मृड्ढि।

अग्नीत् (१)शामित्राद‌ङ्गारानाहृत्य होतृधिष्ण्ये निवपति।

एतन्त (२) इत्याद्यग्निसम्मार्गान्तं पौर्णमासवत्।

## ( अनुयाजयागः। उपयाजहोमः। )

ततोऽनुयाजचरणम्।

होत्रपद्धतिः।

इतोऽङ्गादङ्गादवत्तानां करत एवेन्द्राग्नी जुषेतां हविर्होतर्यज।

होता—

भूर्भुवर्ये४ यजामहे (३)प्रचर्षणिभ्यः पृतनाहवेषु प्र पृथिव्या रिरिचाथे दिवश्च।

अत्रार्द्धर्चे विरमेदा वसाहोमात्।

प्र सिन्धुभ्यः प्र गिरिभ्यो महि त्वा प्रेन्द्राग्नी विश्वा भुवनात्यन्या ३वौ४षट्।

ओजः सहः सह ओजः स्वः।

## ( अनुयाजयागः )

तत एकादशानुयाजान्यजति।

---

(१) आग्नीध्रीयात् शामित्राद्वा ज्वलदङ्गाराहरणम्।

(२) ब्रह्मा—एतं ते देव सवितर्यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे।
तेन यज्ञमव तेन यज्ञपतिं तेन मामव।
मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञꣳ समिमं दधातु।
विश्वे देवास इह मादयन्ताम्।
ॐप्रतिष्ठ। ( शु० य० सं० २।१२-१३ )
एषा त इति होताऽनुमन्त्रयते—
ॐएषा ते अग्ने समित्तया वर्धस्व चा च प्यायस्व।
वर्धिषीमहि च वयमा च प्यासिषीमहि। ( शु० य० सं० २।१४ )।
अजानात यजमानः।
सम्मार्ष्टि पूर्ववदपरिक्रामꣳ सकृत् सकृत् सप्तवाꣳसममिति।
ॐअग्ने वाजजिद्‌ वाजन्त्वा सरिष्यन्तं वाजजितꣳ सम्मार्ज्मि।
( शु० य० सं० २।१४ )।
दक्षिणतः पश्चात् उत्तरतः तूष्णीमुपरि। (३) ऋ० ११०।१६

आध्वर्यवपद्धतिः ।

जुह्वां पृषदाज्यं (१)समानीय एकादशानुयाजान्यजति ।

औ(२)पयजेषु प्रतिप्रस्थातोपयजति ।

गुदतृतीयस्य प्रच्छेदमनुयाजेषु समुद्रं गच्छेति प्रतिमन्त्रं प्रतिवषट्कारम् ।

पक्षे गुदतृतीययोस्तन्त्रेण होमः ।

अध्वर्युः—

स्रुचौ गृहीत्वा सकृदतिक्रम्याश्राव्याह—

देवेभ्यः प्रेष्येति सर्वत्र(३)

( प्रथमः )

"ॐ समुद्रङ्गच्छ स्वाहा" (६।२१) ।

हौत्रपद्धतिः ।

तत्र देवेभ्यः प्रेष्येत्युक्तो मैत्रावरुणः प्रतिप्रैषं देवं बर्हिरित्यादिकानेकादशानुप्रयाजप्रधानाह(४) ।

( प्रथमः )

मैत्रावरुणः—

देवं बर्हिः सुदेवं देवैः स्यात्सुवीरं वीरैर्वस्तोर्वृज्येताक्तोः प्र म्रियेता-

---

( १ ) विकृतावर्थभेदादनुयाजानां पात्रभेदे विचारः—
प्रयाजानुयाजसिद्ध्यै पात्रैक्यमुत भिन्नता ।
एकोपभृद् द्वयोरर्थे दृष्टान्तो विकृता तथा ।
विकृतौ पात्रभेदोऽस्तु जुह्वाज्यपृषदाज्ययोः ।
एकपात्रे महाशाक्तेर्ऐक्यं प्रकृतौ द्वयोः ॥ (ज० न्या० मा० ९।२।१३-१४ ) ।

( २ ) 'औपयजानङ्गारान्' ( का० श्रौ० सू० ६।९।७ ) इत्युपदेशात्तेषामाहरणस्य दृष्टार्थत्वाच्च तेष्वेवाङ्गारेषु जुहुयात् । स च होमो हस्तेनैव "हस्तेनैव गुदकाण्डं जुहोति" इति शाखान्तरश्रुतेः ।

"तद्वा एतदेको द्वाभ्यां वषट् करोति अध्वर्युश्च यश्चैव उपयजत्यथ यजन्तमुपयजति तस्मादुपयजो नामाथ यदुपयजति प्रैवै तज्जनयति पश्चादुपयजति पश्चाद्धि योषायै प्रजाः प्रजायन्ते । स उपयजति समुद्रं गच्छ स्वाहेति" (श०ब्रा०३।८।४।१०-११) अत्र पद्धतौ स्वाहाकारहोममन्त्रश्रवणात् त्र्यम्बकवत् दर्विहोमा अपूर्वा ( जै० सू० ८।४।१०-२८ ) एते द्रष्टव्याः । ततश्च सकृद्वत्तं उपविश्य होतव्यम् ।

( ३ ) प्रथमस्यानुयाजस्य वन्हेः पूर्वभागे होमः । द्वितीयभृतानां नराशंसपर्यन्तानामेकस्मिन् स्थाने मध्ये होमः । ततस्त्रयाणामेकत्र पश्चाद्भागे होमः । तत उपस्थायोत्तरत उपविश्य समानीय देवेभ्य. स्वाहेति प्राचीमाहुतिं जुहुयात् ।

( ४ ) देवेभ्यः प्रेष्य इत्यध्वर्युणा सम्प्रेषितोऽनुप्रैषं देवं बर्हिरित्यादिकान् एकादशानुयाजप्रैषान् अनवानमाह मैत्रावरुणः ।

होता च देवं बर्हिरित्यादिका चातुर्मास्योक्ता याज्याः पठेत् । तत्र काष्ठमनड्मयोर्मध्ये 'देवो वनस्पतिर्देवं बर्हिर्वारितीनाम्' इति द्वे याज्ये अन्ये पठेत् तत्र चातुर्मास्योक्ताः, एवमेकादशानुयाजयाज्या अनुप्रैषं होता पठेत् ।

आध्वर्यवपद्धतिः ।

इदं देवाय बर्हिषे न मम ।

इदं समुद्राय न मम ।

( द्वितीयः )

"ॐ अन्तरिक्षं गच्छ स्वाहा" (६।२१)

इदं देवेभ्यो द्वार्भ्या न मम ।

इदमन्तरिक्षाय न मम ।

( तृतीयः )

"ॐ देवꣳ सवितारं गच्छ स्वाहा" (६।२१)

इदं देवीभ्यामुषासानक्ताभ्यां न मम ।

इदं देवाय सवित्रे न मम ।

हौत्रपद्धतिः ।

त्यन्याप्राया बर्हिष्मतो मदेम वसुवने वसु धेयस्य वेतु यज ।

होता—

भूर्भुवर्वे ४ यजामहे देवं बर्हिर्वसुवने वसुधेयस्य वेतू ४ वौ ४ षट् ।

ओजः सहः सह ओजः स्वः ।

( द्वितीयः )

अध्वर्युणा प्रेष्येत्युक्तो—

मैत्रावरुणः—

देवीर्द्वारः सङ्घाते विड्वीर्यामं छिथिरा ध्रुवा देवहूतौ वत्स ई मेना स्तरुण आमिमीयात्कुमारो वावनजातो मेना अर्वा रेणुककाटः पृणग्वसुवने वसुधेयस्य व्यन्तु यज ।

होता—

भूर्भुवर्वे ४ यजामहे देवीर्द्वारो वसुवने वसुधेयस्य व्यन्तु ४ वौ ४ षट् ।

ओजः सहः सह ओजः स्वः ।

( तृतीयः )

अध्वर्युणा प्रेष्येत्युक्तो—

मैत्रावरुणः—

देवी उषासा नक्ताद्यास्मिन्यज्ञे प्रयत्यह्वेतामपि नूनं दैवीर्विशः प्राया सिष्टां सुप्रीते सुधिते वसुवने वसुधेयस्य वीतां यज ।

होता—

भूर्भुवर्वे ४ यजामहे देवी उषासानक्ता वसुवने वसुधेयस्य वीतां ४ वौ ४ षट् ।

ओजः सहः सह ओजः स्वः ।

आध्वर्यवपद्धतिः ।

( चतुर्थः )

चतुर्थसप्तमदशमेषु समानयनम् ।

"ॐमित्रावरुणौ गच्छ स्वाहा" (६।२१) ।

इदं देवीभ्यां जोष्ट्रीभ्यां न मम ।

इदं मित्रावरुणाभ्यां न मम ।

( पञ्चमः )

"ॐअहोरात्रे गच्छ स्वाहा" (६।२१) ।

इदं देवीभ्यामूर्जाहुतिभ्यां न मम ।

इदमहोरात्राभ्यां न मम ।

( षष्ठः )

"ॐछन्दांऽसि गच्छ स्वाहा" ( ६।२१ )

हौत्रपद्धतिः ।

( चतुर्थः )

अध्वर्युणा प्रेष्येत्युक्तो—

मैत्रावरुणः—

देवी जोष्ट्री वसुधिती ययोरन्याघा द्वेषांसि युयवदान्यावक्षद्वसु वार्याणि यजमानाय वसुवने वसुधेयस्य वीतां यज ।

होता—

भूर्भुवर्ये ४ यजामहे देवी जोष्ट्री वसुवने वसुधेयस्य वीतां ४ वौ ४ षट् ।

आजः सहः सह ओजः स्वः ।

( पञ्चमः )

अध्वर्युणा प्रेष्येत्युक्तो—

मैत्रावरुणः—

देवी ऊर्जाहुती इषमूर्जमन्यावक्षत्सग्धिं सपीतिमन्यानवेन पूर्वं दयमाना स्याम पुराणेन नवन्तामूर्जमूर्जाहुती ऊर्जयमाने अधातां वसुवने वसुधेयस्य वीतां यज ।

होता—

भूर्भुवर्ये ४ यजामहे देवी ऊर्जाहुती वसुवने वसुधेयस्य वीतां ४ वौ ४ षट् ।

ओजः सहः सह आजः स्वः ।

( षष्ठः )

अध्वर्युणा प्रेष्येत्युक्तो—

मैत्रावरुणः—

देवा दैव्या होतारा पोतारा नेष्टारा इवावधंसावभरद्वसुवने वसु-

आध्वर्यवपद्धतिः ।

इदं देवाभ्यां दैव्याभ्याᳪ होतृभ्यां न मम ।

इदं छन्दोभ्यो न मम ।

( सप्तमः )

"ॐद्यावापृथिवी गच्छ स्वाहा" ( ६।२१ ) ।

इदं देवीभ्यस्तिसृभ्यस्तिसृभ्यो देवीभ्यो न मम ।

इदं द्यावापृथिवीभ्यां न मम ।

( अष्टमः )

"ॐयज्ञङ्गच्छ स्वाहा" ( ६।२१ ) ।

इदं देवाय नराशᳪसाय न मम ।

इदं यज्ञाय न मम ।

हौत्रपद्धतिः ।

धेयस्य वीतां यज ।

होता—

भूर्भुवर्यं ४ यजामहे देवा दैव्या होतारा वसुवने वसुधेयस्य वीत
४ वौ ४ षट्

ओजः सहः सह ओजः स्वः ।

( सप्तमः )

अध्वर्युणा प्रेष्येत्युक्तः—

मैत्रावरुणः—

देवीस्तिस्रस्तिस्रो देवीरिळा सरस्वती भारती द्यां भारत्यादित्यैः
स्पृक्षत्सरस्वतीमं रुद्रैर्यज्ञमावीदहैवेळया वसुमत्या सधमादं मदेम व
सुवने वसुधेयस्य व्यन्तु यज ।

होता—

भूर्भुवर्यं ४ यजामहे देवीस्तिस्रस्तिस्रो देवीर्वसुवने वसुधयस्
व्यन्तु ४ वौ ४ षट् ।

ओजः सहः सह ओजः स्वः ।

( अष्टमः )

अध्वर्युणा प्रेष्येत्युक्तो—

मैत्रावरुणः—

देवो नराशंसस्त्रिशीर्षा षळक्षः शतमिदेनं शितिपृष्ठा आदधति सह
स्रमीं प्रवहन्ति मित्रावरुणे दस्युहोत्रमर्हतो बृहस्पतिस्तोत्रमश्विनाध्व
र्यवं वसुवने वसुधेयस्य वेतु यज ।

होता—

भूर्भुवर्यं ४ यजामहे देवो नराशंसो वसुवने वसुधयस्य वेतु ४ वौ ४ षट्

ओजः सहः सह ओजः स्वः ।

आध्वर्यवपद्धतिः ।

( नवमः )

"ॐसोमङ्गच्छ स्वाहा" ( ६।२१ ) ।
इदं देवाय वनस्पतये न मम ।
इदं सोमाय न मम ।

( दशमः )

"ॐदिव्यं नभो गच्छ स्वाहा" ( ६।२१ ) ।
इदं देवाय बर्हिषे न मम ।
इदं दिव्याय नमसे न मम ।

( एकादशः )

"ॐ अग्निं वैश्वानरं गच्छ स्वाहा" ( ६।२१ )—
इदं देवायाग्नये स्विष्टकृते न मम ।

हौत्रपद्धतिः ।

( नवमः )

अध्वर्युणा प्रेष्येत्युक्तो—
मैत्रावरुणः—
देवो वनस्पतिर्वर्षप्रावा घृतनिर्णिक् धामग्रेणास्पृक्षदान्तरिक्षं मध्ये नाग्राः पृथिवीमपरेणाद्दृंहीद्वसुवने वसुधेयस्य वेतु यज ।
होता—
भूर्भुवर्यं ४ यजामहे देवो वनस्पतिर्वसुवने वसुधेयस्य वेतु ४वौ ४षट् ।
ओजः सहः सह ओजः स्वः ।

( दशमः )

अध्वर्युणा प्रेष्येत्युक्तो—
मैत्रावरुणः—
देवं बर्हिर्वारितीनां निधेधासि प्रच्युतीनामप्रच्युतं निकामधरणं पुरुस्पार्हं यशस्विदेना बर्हिष्या बर्हीष्यमिष्याम वसुवने वसुधेयस्यवेतु यज।
होता—
भूर्भुवय ४ यजामहे देवं बर्हिर्वारितीनां वसुवने वसुधेयस्य वेतु ४ वौ ४ षट् ।
ओजः सहः सह ओजः स्वः ।

( एकादशः )

अध्वर्युणा प्रेष्येत्युक्तो—
मैत्रावरुणः—
देवो अग्निः स्विष्टकृत्सुद्रविणा मन्द्रः कविः सत्यमन्मायजी होता

आध्वर्यवपद्धतिः ।

इदमग्नये वैश्वानराय न मम ।

हुत्वा मनो म इति मुखोपस्पर्शनं प्रतिप्रस्थातुः(१) ।

"ॐ मनो मे हार्दि यच्छ" ( ६।२१ )

न स्वरुहोमः ।

( धारानुयाजः )

पत्याध्वर्युः समानीय प्राचीं देवेभ्य इति ।

"ॐ देवेभ्यः स्वाहा"

इदं देवेभ्यो न मम ।

जुहूं निधायेतरां वेदोपग्रहेण (२)पशुदेवतावनस्पतिभ्यां॑ऽछग् व्यूहनम् ।

हौत्रपद्धतिः ।

होतुर्होतुरयजीयानग्ने यां देवानयाड्याँ अपि प्रैर्यैते होत्रे अमत्सत । तां ससनुषीं होत्रां देवंगमां दिवि देवेषु यज्ञमेरयेमं स्विष्टकृच्चाग्ने होता भूर्वसुवने वसुधेयस्य नमो वाके वीहि यज ।

---

( १ ) अथ मुखं विमृष्टे "मनो मे हार्दि यच्छ" इति (श०ब्रा० ३।८।६।६) श्रुतत्वात्।

( २ ) वनस्पतिस्तु स्विष्टकृद्विकारः । अत एव तस्य व्यूहने सङ्कीर्तनं न प्राप्नोति, प्रधानदेवतानामेव व्यूहने सङ्कीर्तनदर्शनात् । अतो वचनात्तस्योच्चारणम् , वनस्पतिग्रहण एव क्रियमाणे परिसङ्ख्यामाशङ्क्य तस्यैवोच्चारणेन व्यूहनं मा भूदिति पशुदेवताग्रहणम् , पशुदेवताया अपि दर्शपूर्णमासधर्मित्वेन प्राप्तस्य व्यूहनस्यानिषिद्धत्वात्, अत्र तु देवताया एकत्वात् कालगुणभेदा ( का० श्रौ० ६।७।२८ ) भावात् अव्यवधानाच्च पशुदेवता—पशुपुरोडाशदेवतयोस्तन्त्रेणोच्चारणम् ।

यत्र तु व्यवधानं सपशुचातुर्मास्यादौ तत्र भेदेन देवतोच्चारणम् । यत्र तु पशुदेवतानां पशुपुरोडाशदेवतानां च भेदो भवति यथा सौत्रामण्यां "तदाहुरन्यदेवत्याः पशवो भवन्त्यन्यदेवत्याः पुरोडाशाः" ( श० ब्रा० १२।७।२।१६) इति । तथा चेष्टकापशौ पञ्चपशुपक्षे वैश्वानरः पशुपुरोडाशः (का०श्रौ० १६।१।२५ ) इत्यत्र, तत्र न प्राप्नोति अपशुदेवतात्वात् । प्रासङ्गिकत्वाविशेषात्तु तत्रापि भवति । एवं प्रासङ्गिकानां चातुर्मास्यहविर्देवतानां देवसू ( का० श्रौ० सू० १५।४।४ ) देविकाहविरादीनां च व्यूहने सङ्कीर्तनं ज्ञेयम् ।

केचित्तु—पशुदेवताग्रहणं पशुपुरोडाशदेवताव्युदासार्थमाहुः । तेषां मते पशुपुरोडाशदेवतायास्तमनुविहितचातुर्मास्यहविर्देवसूहविरादीनां देवतानां कुत्रापि व्यूहनं न भवति । तेषामभिप्रायः—यथा बह्वृचानामेवं विधानां परतन्त्रोत्पन्नानां आवाहन—स्विष्टकृत्—सूक्तवाकेषु सङ्कीर्तनाभावः, एवमेव तेषां व्यूहनमपि न भवतीति । तेषां हि वचनम्—"पशुतन्त्रे हवींषि चोद्यमानानि निगमाल्लभन्ते" इति । तथा च तेषां चोदकप्राप्तस्यावाहनादेरभावः, एवं व्यूहनस्याप्यभाव एव युक्तः समानन्यायात् । अयं पक्षो युक्ततर इव दृश्यते इति देवाशयः ।

आध्वर्यवपद्धतिः ।

## ( स्रुग्व्यूहनम् )

"ॐ अग्नीषोमयोर्वनस्पतेरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामि ।

अग्नीषोमौ वनस्पतिस्तमपनुदतां योऽस्मान्द्वेष्टि यञ्च वयं द्विष्मो वाजस्यैनम्प्रसवेनापोहामि" (२।१५) ।

पक्षे—

"ॐ अग्नीषोमयोरिन्द्राग्न्योर्वनस्पतेरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामि ।

अग्नीषोमाविन्द्राग्नी वनस्पतिस्तमपनुदतां योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मो वाजस्यैनं प्रसवेनापोहामि ।" (२।१५) ।

अभ्युदय जुह्वा(१) परिध्यञ्जनम् ।

## ( सूक्तवाकप्रैषादि )

प्रथमं परिधिं गृहीत्वाश्राव्याह—

इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय

हौत्रपद्धतिः ।

होता—

देवो अग्निः स्विष्टकृत् सुद्रविणा मन्द्रः कविः सत्यमन्माऽऽयजी होता होतुर्होतुरायजीयानग्ने यान् देवानयाड्याँ अपि प्रैयैते होत्रे अमत्सत । तां ससनुषीं होत्रां देवंगमां दिवि देवेषु यज्ञमेरयेमं स्विष्टकृच्चाग्ने होताभूर्वसुवने वसुधेयस्य नमो वाके वीही ४ वौ ४ षट् ।

ओजः सहः सह ओजः स्वः । उदकोपस्पर्शनम् ।

इत्येकादशानुयाजाः(२) ॥

---

( १ ) पश्चिमदक्षिणोत्तरपरिधीन् क्रमेण ।

"ॐ वसुभ्यस्त्वा अनज्मि ।

ॐ रुद्रेभ्यस्त्वा अनज्मि ।

ॐ आदित्येभ्यस्त्वा अनज्मि ।"

इति मन्त्रैरञ्ज्यात् ।

( २ ) अत्र भूर्भुव इति पुरस्तात्स्वरो ये यजामहे वौषडोजः सह सह ओज स्व इत्युपरिष्टादिति चतुष्टयं सर्वासु याज्यासु ( शां० श्रौ० १।१।३९ ) इति याज्यात्वेन अनुयाजेष्वपि ये यजामह इति प्राप्तौ "अनुयाजेषु ये यजामहो नास्ति" ( शां० श्रा० १।१।४० ) इति कल्पनिषेधात् सर्वेषु अनुयाजेषु ये यजामहशब्दो न भवतीति वेदितव्यम् ।

आध्वर्यवपद्धतिः ।

स्रुक्ता प्रेष्य ।

(१)प्रस्तरादानादि वेद्यालम्भनान्ते पत्नीसंयाजाः ।

हौत्रपद्धतिः ।

ततोऽध्वर्युणा स्रुक्ता प्रेष्येत्युक्ते मैत्रावरुणः—

अग्निमद्य होतारमवृणीतायं यजमानः पचन्पक्तीः पचन्पुरोळाशं गृह्णन्नग्नय आज्यं गृह्णन्सोमायाज्यं बध्नन्नग्नीषोमाभ्यां छागं सूपस्था अद्य देवो वनस्पतिरभवदग्नय आज्येन सोमायाज्येनाग्नीषोमाभ्यां छा·

---

( १ ) सञ्जानाथामिति प्रस्तरादानम् ।

"ॐ सञ्जानाथां द्यावापृथिवी मित्रावरुणौ त्वा वृष्ट्याऽवताम्" ( २।१६ ) ।

विधृतीस्थाने कृत्वा अलक्त्येनं व्यन्तु वय इत्यग्रं जुह्वामुपभृति मध्यं मूलमितरस्याम् ।

"ॐ व्यन्तु वयोऽक्तᳬ॰ रिहाणाः ( २।१६ )" ।

मरुतामिति नीचैर्हृत्वा तृणमादायानुप्रहरति ।

"ॐ मरुतां पृषतीर्गच्छ वशा पृश्निर्भूत्वा दिवं गच्छ ततो नो वृष्टिमावह"(२।१६) ।

अग्नीत्—अनुप्रहर ।

अध्वर्युः—प्रास्य तृणं चक्षुष्पा इत्यात्मानमालभते ।

"ॐ चक्षुष्पा अग्नेऽसि चक्षुर्मे पाहि" ( २।१६ ) ।

अग्नीत्—संवदस्व । अध्वर्युः—अगानग्नीत । अग्नीत्—अगन् । अध्वर्युः—श्रा· ३ वय । अग्नीत्—श्रौ३षट् ।

अध्वर्युः—स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहि ।

होता—"तच्छंयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः । ऊर्ध्वं जिगातु भेषजᳬ॰ शन्नो अस्तु द्विपदे शं चतुष्पदे" । ( का॰ हौ॰ प॰ ११ ) ।

"अनया" ( का॰ हौ॰ प॰ ११ ) इति प्रादेशं वेदिश्रोणौ निदधाति ।

परिधीननु प्रहरति यं परिधिमिति प्रथमम् ।

"ॐ यं परिधिं पर्यधत्था अग्ने देव पणिभिर्गुह्यमानः । तन्त एतमनुजोषं भराम्येष नेत्त्वदपचेतयातै" ( २।१७ ) ।

इतरौ च युगपदग्नेः प्रियमिति ।

"ॐ अग्ने. प्रियं पाथो पीतम्" (२।१७ ) ।

स्रुचौ प्रगृह्णाति सᳬस्रवभागा इति सᳬस्रवाञ्जुहोति ।

"ॐ सᳬस्रवभागा स्थेषा बृहन्तः प्रस्तरेष्ठाः परिधेयाश्च देवाः । इमां वाचमभि विश्वे गृणन्त आसद्यास्मिन् बर्हिषि मादयध्वᳬ स्वाहा वाट्" ( २।१८ ) ।

यजमानः—इदं विश्वेभ्यो देवेभ्यो न मम ।

घृताची इति धुरि निदधात्यनसि चेद् यद्यूर्ण (?) पात्र्यां चेत् ।

"ॐ घृताची स्थो धुर्यौ पातᳬ॰ सुम्ने स्थ सुम्ने मा धत्तम्" ।

यज्ञ नमश्च त इति वेदिमालभते ।

"ॐ यज्ञ नमश्च त उप च यज्ञस्य शिवे सन्तिष्ठस्व स्विष्टे मे सन्तिष्ठस्व" (२।१९) ।

आध्वर्यवपद्धतिः ।

## ( पत्नीसंयाजाः )

शालाद्वार्यं अध्वर्युः आग्नीध्रीयमुत्तरेण स्रुचौ आदाय गत्वा शालाद्वार्यदक्षिणेनोपविशति ।

यजुरुत्त० होता, जाघनीमाज्यस्थालीं चाग्नीदादाय गमनम् ।

ब्रह्मयजमानयोरपि तद्दक्षिणत उपवेशनं च ।

(१) जाघन्या पत्नीसंयाजनम् ।

हौत्रपद्धतिः ।

मेधावस्तं तं मेदस्तः प्रतिपचताग्रभीष्टामवीवृधेतां पुरोळाशेन त्वामद्यर्षे आर्षेय ऋषीणां नपादवृणीतायं यजमानो बहुभ्य आसङ्गतेभ्यः एप मे देवेषु वार्यादयत इति ता या देवा देवदानान्यदुस्तान्यस्मा आ च शास्वा च गुरस्वेषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि(२) ।

होता—

इदं द्यावापृथिवी भद्रमभूदार्ध्म सूक्तवाकमुत नमोवाकमृध्यास्म सूक्तोच्यमग्ने त्वं सूक्तवागसि उपश्रुती दिवस्पृथिव्योरोमन्वती ते अस्मिन्यज्ञे यजमान द्यावापृथिवी स्तां शङ्गयी जीरदानू अत्रस्नू अप्रवेदे उरुगव्यूती अभयङ्कृतौ । वृष्टिद्यावा रीत्यापा शम्भुवौ मयोभुवा ऊर्जस्वती च पयस्वती च सूपचरणा च स्वधिचरणा च तयोराविदि ।

( आज्यभागपक्षे )—

अग्निर्हविरजुषतावीवृधत महो ज्यायोऽकृत ।

सोमो हविरजुषतावीवृधत महो ज्यायोऽकृत ।

( सर्वत्र )—

अग्नीषोमौ हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम् ।

---

( १ ) अत्र मीमांसा—

संयाजयन्ति जाघन्या पत्नीरित्यत्र श्रुत ।

दर्शादौ तदुत्पत्तौ युक्तं जाघन्याः समवायतः ।

जाघनी नाम भागोऽसौ दर्शादौ समवैति हि ।

नोत्कष्टव्यं न संस्कार्या साधनत्वात्तृतीयया । ( जै० न्या० मा० ३।३।३७-३८ ) ।

समुच्चयो जाघनीनां न वाऽऽद्यो गुदवन्न तत् ।

प्रकृतौ नियमादेकर्मातोऽत्र सर्पात्वतः । ( जै० न्या० मा० १२।४।७ ) ।

( २ ) अवभृथरहिते कर्मणि सूक्तवाकप्रैषं समाप्य मैत्रावरुणः अनन्तरमेवाहवनीये स्वकीयं दण्डमनुप्रहरेत् । सावभृथे च कर्मणि अवभृथे स्वकीयं दण्डमनुप्रहरेन्मैत्रावरुणः । तथा चोक्तमाश्वलायनेन—समाप्य प्रैषमग्नौ दण्डमनुप्रहरेदनवभृथे । अवभृथेऽप्स्वत्र ( १६६ पृ० ) इति ।

आध्वर्यवपद्धतिः ।

उत्तानाया देवानाम्पत्नीभ्योऽवद्यति इडां च परिवर्त्याग्नये गृहपतयेऽमीधे। अत्र सर्वत्र नोपस्तराभिघारौ। तस्या एव चतुरवत्तता, पञ्चावत्तता वा।

पक्षे-जाघनीभ्यां पत्नीसंयाजनम् ।

(१)यजति सोमं त्वष्टारं देवानाम्पत्नीरग्निं गृहपतिमिति ।

हौत्रपद्धतिः ।

इन्द्राग्नी हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम् ।

वनस्पतिर्हविरजुषतावीवृधत महो ज्यायोऽकृत ।

देवा आज्यपा आज्यमजुषन्तावीवृधन्त महो ज्यायोऽकृत ।

अग्निर्होत्रेण हविरजुषतावीवृधत महो ज्यायोऽकृत ।

अस्यामृधेद्धोत्रायां देवंगमायामाशास्तेऽयं यजमानोऽस्य यज्ञस्यागुर उदृचमशीयेत्याशास्ते । यदनेन हविषाशास्ते तदस्यात्तदृध्यात्तदस्मै देवा रासन्तां तदग्निर्देवो देवेभ्यो वनुतां वयमग्नेः परि मानुषाः । इष्टं च वित्तं चोभे चैनं द्यावापृथिवी अंहसः पातामिह गतिर्वामस्येदं च नमो देवेभ्यः ।

ततो होत्रा—

"तच्छंयो"रिति शंयोर्वाकं उक्ते (२)यथाप्रपन्नमुपनिष्क्रम्योत्सृजते मैत्रावरुणः ।

ततो होता निष्क्रम्याध्वर्योर्हस्ताद्वेदमादाय दक्षिणावृत्पूर्वया द्वारा शालां प्रपद्य पत्नीसंयाजान्तं कर्म कृत्वा नकं संस्थापयति ।

पत्नीसंयाजे मार्जनं महावेदेर्मध्ये भवति ।

---

(१) अत्रायं विचारः । किं चतस्रोऽपि पत्नीसंयाजदेवता जाघन्या यष्टव्या उत पूर्वे द्वे देवते, सोमत्वष्टारावाज्येन अत्र पूर्वपक्षोत्तरपक्षसूत्रे—आज्येन पूर्वे ( का० श्रौ० ६।९।१७ ) प्रथमे द्वे । "पत्नीः संयाजयन्ती" (श० ब्रा० ३।८।५।६) ति प्रकृत्य "अन्तरतो देवानां पत्नीभ्योऽवद्यति" "उपरिष्टादग्नये गृहपतय" इति च श्रुतेस्तृतीयचतुर्थे देवते जाघन्या यष्टव्ये । प्रथमद्वितीयदेवते आज्येन यष्टव्ये इति पूर्वः पक्षः ।

सर्वा वा जाघन्या विशेषात् ( का० श्रौ० ६।९।१८ ) । चतस्रोऽपि देवताः जाघन्या यष्टव्या आज्येन पूर्वे, अविशेषात् चतुर्ष्वपि पत्नीसंयाजेष्वेवाविशेषेण जाघन्याः श्रवणात् "अथ जाघन्या पत्नीः संयाजयन्ती"ति ।

अथवा—चतुर्णामपि यागानां पत्नीसंयाजत्वाविशेषात् । "चत्वारः पत्नीसंयाजा" इति श्रुतिनिर्देशात् । अतश्चतस्रोऽपि देवता जाघन्यैव यष्टव्या इति सिद्धान्तः ।

जाघन्या एव यागसाधनत्वेन विधानात् प्रत्याम्नानाच्च। तस्या एव चत्वारि चत्वार्यवदानानि नोपस्तराभिघारौ इति याज्ञिका धूर्तस्वामिनश्च ।

(२) यथाप्रपन्नं=येनैव मार्गेण प्रविष्टस्तेनैव होतृधिष्ण्यमुत्तरेणाग्नीध्रीयं वोत्तरेण निष्क्रम्य वाग्यमादिनियममुत्सृजते मैत्रावरुणः । न इदयशूलोपस्थानापेक्षा "अग्नायोमीयसवनीयौ परिहाप्य" ( शां० श्रौ० ) इति कल्पवचनात् ।

आध्वर्यवपद्धतिः ।

ततो होतुर्हस्ते इडासमर्पणम् ।

तत्र पर्वाञ्जनान्तरेडयोरभावः ।

अग्नीधेऽवदानम् । भक्षणं सर्वेषाम् । लौकिकपवित्राभ्यां मार्जनम् । नाग्नीषोमीयेऽदन्ध्याहुतिः ।

सव्येनावृत्य दक्षिणाग्नौ जुहोत्यग्नय(१)इति, सरस्वत्या(२)इति च ।

उलूखल (३)इति पिष्टलेपाहुतिः ।

---

(१) "ॐअग्नये सम्वेशपतये स्वाहा" ( ३।१० ) ।

इदमग्नये सम्वेशपतये न मम ।

(२) ॐसरस्वत्यै यशोभगिन्यै स्वाहा ( ३।१० ) ।

इदं सरस्वत्यै यशोभगिन्यै न मम ।

(३) "उलूखले मुसले यच्च सूर्पं आशिश्लेष दृषदि यत्कपाले अत्प्रुषो विप्रुषः सञ्जुहोमि सत्याः सन्तु यजमानस्य कामाः स्वाहा" इति पिष्टलेपाञ्जुहोति । ( का० श्रौ० ३।८।१ ) उलूखले मुसलेत्यनेन मन्त्रेणाध्वर्युः पिष्टलेपामाहुतिं जुहोति । अधिकाराद् दक्षिणाग्नावेव ।

अत्र विप्रतिपत्तिः । केचिदाज्यं जुह्वति केचिच्च पिष्टसम्बन्धिनो लेपान् इति ।

ये तु आज्यं जुह्वति तेषामयमभिप्रायः—पिष्टलेपामिति द्वितीयैकवचनमाहुतिविशेषणम् । पिष्टसम्बन्धेन हूयमानत्वात् पिष्टलेपपदेन सा विशेष्यते ।

ननु तर्हि पिष्टलेपा एव कुतो तेषामभावात् न हि पिष्टानां ( लेपाः ) शेषाः सन्ति यत्प्रतिपत्त्यर्थमियमाहुतिः स्यात् । पात्र्यङ्गुलिस्थाश्च ते सम्भाव्यन्ते, तेषां तु वचनात् ( का० श्रौ० २।५।२६ ) प्रक्षालनपूर्विका निनयनरूपा प्रतिपत्तिरुक्ता । नापि तेषां कारणवत्स्थापनमुपदिष्टम् । मन्त्रमध्ये च पात्र्यङ्गुलिस्थानां लिङ्गमपि नास्ति अतो वचनं विना पात्र्यङ्गुलिसंसक्ता होतुं न शक्यन्ते प्रागुक्तप्रतिपत्तिविधिविरोधात् ।

उलूखलादिषु तु पिष्टलेपसम्भावनैव नास्ति तदानीं हविषः पिष्टत्वाभावात् । दृषदुपलयोश्च संश्लिष्टानां ग्रहीतुमशक्यत्वाच्च । अतो विप्रुड्ढोमवत् देवतार्थं गृहीतस्य हविषो यदुलूखलादिषु श्लिष्टो गृहीतुमशक्यश्च भागः तेन विना वैगुण्यं मा भूदिति तत्प्रायश्चित्तित्वेन तत्प्रतिनिधिभूतं आज्यं होतव्यम् । यथा विप्रुड्ढोमे ( का० श्रौ० सू० ९।६।२१ ) अभिषवकाले ग्रहणकाले वा इतस्ततः स्कन्नानां सोमबिन्दूनां स्यन्दनप्रत्यवायपरिहारार्थं तत्प्रतिनिधित्वेन आज्यं हूयते वचनात् । एवमत्रापि पिष्टग्रहणं चाङ्गप्रधानहविर्मात्रोपलक्षणम् । 'उत्प्रुषो विप्रुष' (का० श्रौ० ३।८।१)इति मन्त्रलिङ्गात् । तेनाङ्गप्रधानहविषामाज्यचरुस्यापुरोडाशादीनामवयवस्य अन्यत्र श्लिष्टस्य गृहीतुमशक्यस्य प्रतिनिधिभूतोऽयमाज्यहोमः । अतश्चरसान्नाय्याज्यचरुस्यादि हविष्केपीयमाहुतिर्भवति ।

व्यवहाराभावे पिष्टलेपामित्येषा संज्ञा "सवनसन्तति जुहोति" "अथावतानां जुहोति" ( श० ब्रा० १।१।१।२७ ) "अथ प्रत्यवरोहान् जुहोति" (श० ब्रा० १।१।१।३२) इत्यादिवत् ज्ञेया । यस्मादङ्गप्रधानहविषां स्वावयवहीनत्वनिमित्तवैगुण्यनिरासार्थोऽयं प्रायश्चित्तहोमः । तेन पशोरप्ययमिष्यत एव । अस्य होमस्य प्रायश्चित्तार्थत्वं आज्यसाधनत्वं चोक्तं तैत्तिरीयसूत्रे—अथ स्रुचि चतुर्गृहीतं गृहीत्वा पस(लैः)लवि पर्यावृत्या-

आध्वर्यवपद्धतिः ।

अग्नीषोमीयमस्तमिते सꣳस्थाप्य, ततः प्रतिपत्तिकर्म । वेदविमोकः ।
पत्नी योक्त्रविमोकः ।
वायेदेस्तरणम् ।
देवा गातुविद(१) इत्येकर्ठं० समिष्टयजुः ।

---

न्वाहार्यपचने प्रायश्चित्तं जुहोत्युलूखले मुसले यच्च शूर्पं आशिश्लेष कृष्णाजिने यत्क· पाले । अवप्रुषो विप्रुषः संयजामि विश्वेदेवा हविरिदं जुषन्ताम् । यज्ञे या विप्रुषः सन्ति बह्वीरग्नौ ताः सर्वाः स्विष्टाः सुहुता जुहोमि स्वाहेति ( बौ० श्रौ० सू० १।२० ) । त्यागश्चात्र इदं विश्वेभ्यो देवेभ्य इत्येवं कर्तव्यः मन्त्रलिङ्गात् ।

ये तु पिष्टलेपानां होममिच्छन्ति तेषां पिष्टलेपानिति द्वितीयाबहुवचनम् । पिष्टस· म्बन्धिनो लेपाः पिष्टलेपाः, इति तान् जुहोति, इति होमविधानादेव पात्रवदङ्गुलीसंलग्नान् पिष्टलेपानुपादाय होमार्थं स्थापयित्वा पात्रवदङ्गुलिप्रक्षालनं कार्यम् । तन्मते च प्रति· पत्त्यर्थकमैव पुरोडाशसाधके एव कर्मणि भवति आज्यादिसाधनके ।

पिष्टलेपहोमप्रकारस्तु शाखान्तरे । आपस्तम्ब·—

फलीकरणहोमं पूर्वमेतद्वा विपरीतम् । चतुर्गृहीत आज्ये फलीकरणानोप्याग्नेदक्षा· योऽशीततनो इति जुहोति । एवं पिष्टलेपानुलूखले मुसल इति ( ३।३।१०।१ ) तैत्तिरीय· मन्त्रपाठोऽस्ति ।

मानवे च—तथा पुनर्गृहीत्वा पिष्टलेपं द्विरवत्तमभिघार्योलूखले मुसले यत्कपाले उप· लायां दृषदि धारयिष्यति । अवप्रुषो विप्रुष, संयजानि वैश्वदेवा। हविरिदं जुषन्तां स्वा· हेति जुहोतीति ।

केवलाज्यहोमपक्षे आमिश्रपिष्टलेपहोमपक्षेऽपि सर्वसूत्रेषु विश्वदेवमन्त्रस्य लिङ्ग· होममन्त्रे दर्शनात् तदुद्देशेनैव त्यागः कार्यः । स्वसूत्रेऽपि आज्यहोमपक्षे पक्षान्तरे च होमस्य अङ्गप्रधानभूतप्रकृतसर्वदेवताहविषां कचित्संश्लिष्टानां स्वावयवहीनतानिमित्त प्रत्यवायपरिहारार्थं तत्प्रतिनिधिभूतेनाज्येन क्रियमाणत्वात् देवतान्तरस्यानुपदेशात् च प्रकृतसर्वदेवताकत्वम् । तत्सम्बन्धिद्रव्यस्य ताभ्य एव होतुमुचितत्वात् । अत एव "विश्वेभ्यो देवेभ्यो" उद्देशः । विश्वेदेवाः सर्वे देवा ( १२।३९।२ ) इति यास्कोक्तेः । किं च अनादिष्ट देवतानां मन्त्राणां प्रकृतदेवताकत्वमेव युक्तम् कुतः "तद्येनादिष्टदेवता मन्त्रास्तेषु देवतोपपरीक्षा यद्देवतः स यज्ञो वा यज्ञाङ्गं वा तद्देवता भवतीति" ( निरु० ७।४।१-२ ) यास्कोक्तेः । अत्र यज्ञाङ्गस्य हूयमानस्याज्यादिद्रव्यस्य मन्त्रलिङ्गेन प्रकृत- बहुदेवतासम्बन्धित्वं गम्यते याश्चात्र अङ्गप्रधानदेवताः प्रकृताः अतश्च बहुदेवतत्वात् विश्वेषां देवतानां देवतात्वं युज्यत एव "यत्तु किंचिद्बहुदैवतं तद्वैश्वदेवानां स्थाने युज्यत ( १२।४० )" इति च यास्कोक्ते । कर्काचार्यास्त्वेवमूचु —एकयैव देवतया देवस्य सिद्धत्वात् किमर्थमनेकदेवतात्वं कल्प्यते, इति प्राथम्यादेकैवात्रा।भिदेवतेति । अतस्त- न्मते प्रकृतिविकृतिरूपसर्वकर्मसु इदमग्नय इत्येवास्य त्यागः ।

(१) ॐ देवा गातुविदो गातुं वित्त्वा गातुमित ।
मनसस्पत इमं देव यज्ञꣳस्वाहा वाते धाः । ( शु० य० सं० ८।२१ ) ।

आध्वर्यवपद्धतिः ।

सकृदु बर्हिः सम्बर्हिरिति(१) जुहोति ।

न शूलावभृथः ।

प्रणीता निनयति परीत्य कस्त्वेति(२) ।

[ यदि पशुपुरोडाशे प्रणीतास्तर्ह्यत्र तासां निनयनम् । ]

कणापासन-पूर्णपात्रनिनयन-विष्णुक्रम-भागावेक्षण-प्राशन-प्रैष-तर्पणक-र्मापवर्गान्तं कुर्यात् । समिद्धयजुर्होमः । पूर्णपात्रनिनयनादीनि कर्मापवर्गान्तान्यत्र पशुपुरोडाशाङ्गभूतत्वान्न भवन्तीति देवः ।

## इत्यग्नीषोमीयः पशुः ।

## ( सुत्यायाः पूर्वदिनकृत्यम् )

ततः सुत्यायाः पूर्वदिनकृत्यम् ।

अध्वर्युः अन्तपात्ये तिष्ठन् व्युत्क्रामतेत्याह त्रिरुच्चैः ।

ॐ व्युत्क्रामत३ ।

ततः सर्वे देवयजनाद् बहिर्निष्क्रामन्ति ।

येषां शालाद्वार्यमपरेणास्ते पत्नी ।

उत्तरवेदिमपरेण यजमान उपस्थे सोमं कृत्वा आस्ते ।

महावेदेर्दक्षिणतः समन्त्रं ब्रह्मास्ते ।

अध्वर्युः शालाद्वार्यमपरेण प्राजहितं च वसतीवरीः परिहरति ।

दक्षिणेन द्वारेण निर्हृत्य मार्जालीयं दक्षिणेनाहृत्य दक्षिणस्यामुत्तरवेदिश्रोणौ निदधातीन्द्राग्न्योरिति ।

"ॐ इन्द्राग्न्योर्भागधेयीस्थ" ( ६।२४ ) ।

[ (३)ता आदाय यथेतं प्रत्याहृत्य अग्रे स्थाने निदधाति । कलशस्थमुदकं पत्न्यालभते ।

ततोऽध्वर्युः प्राजहितमपरेण विहारं चोत्तरेण गत्वा कलशमादाय पूर्वद्वारेण निर्हृत्याग्नीध्रीयमुत्तरेण परिक्रम्योत्तरस्यामुत्तरवेदिश्रोणौ निदधाति पूर्ववत् ।

हौत्रपद्धतिः ।

वेदविमोकः—

: तत उत्तरेणाग्नीध्रीयं धिष्ण्यं गत्वोत्सृजत |

---

( १ ) ॐ सम्बर्हिरङ्क्ताᳬ हविषा घृतेन समादित्यैर्वसुभिः सम्मरुद्भिः । समिन्द्रो विश्वदेवेभिरङ्क्तां दिव्यं नभो गच्छतु यत् स्वाहा" । (शु०य०सं० २।२२)

( २ ) ॐ कस्त्वा विमुञ्चति स त्वा विमुञ्चति कस्मै त्वा विमुञ्चति तस्मै त्वा विमुञ्चति पोषाय ( निनयामि ) ।　　( शु० य० सं० २।२३ )।

[ ३ ] [ ] चिह्नितः 'क' पुस्तके पाठः ।

आध्वर्यवपद्धतिः।

"ॐ इन्द्राग्न्योर्भागधेयी स्थ" ( ६।२४ ) । ]

मित्रावरुणयोरिति वा ।

"ॐ मित्रावरुणयोर्भागधेयी स्थ" ( ६।२४ ) ।

पुनराराहृत्य निदधाति विश्वेषां देवानामित्याग्नीध्रे ।

"ॐ विश्वेषां देवानां भागधेयी स्थ ।

अमूर्या उपसूर्ये याभिर्वा सूर्यः सह ।

ता नो हिन्वन्त्वध्वरम्" (६।२४) ।

यजमानात् सोमं चादायाग्नीध्रीये पूर्वस्यावितायामासन्द्यां निदधाति ।

दीक्षितश्च तत्र तार्ठ० रात्रिर्ठ० सोमर्ठ० रक्षति ।

उत्करे स्थित्वा सुब्रह्मण्यां च प्रेष्यति ।

सुब्रह्मण्ये सुब्रह्मण्यामाह्वय गीतावुधीयाम् ।

सुब्रह्मण्याह्वानान्ते परिवाप्याये दोहनम् ।

( गोदोहनम् )

शालाद्वार्ये दक्षिणतः समन्त्रं ब्रह्मास्ते यजमानश्च ।

उपसृष्टां प्रब्रूतादित्याह दोग्धारं प्रत्यध्वर्युः ।

उपसृष्टां प्रब्रूतात् ।

उपसृष्टा इति दोग्ध्रा प्रत्युक्ते अध्वर्युः द्यौरसीति स्थाल्यादानम् ।

"ॐ द्यौरसि पृथिव्यसि" ( १।२ )

मातरिश्वन इत्यधिश्रयति ।

"ॐ मातरिश्वनो घर्मोऽसि विश्वधा असि ।

परमेण धाम्ना दृर्ठ०हस्व मा ह्वार्मा ते यज्ञपतिर्ह्वार्षीत्" ( १।२ ) ।

वसोः पवित्रमिति पवित्रमस्यां करोत्युदग्रा ।

"ॐवसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम्"(१।३)।

वाग्यतो दोहयत्यग्रेण ।

गां धुक्ष इति प्रेष्यति दोग्धारम्

दोग्धा अपाकरणक्रमेण स्थाल्याः प्रत्येकं दुग्ध्वा आनीय स्थाल्या-मासेचयति ।

अध्वर्युः यजमानेन सह स्थाल्यन्वारब्धो देवस्त्वेत्यासिच्यमाने जपति ।

"ॐ देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा"(१।३)।

"कामधुक्" इति पृच्छति ।

गङ्गामिति तेनोक्ते ।

अध्वर्युः—

"सा विश्वायुः" (१।४)

इति जपति ।

एवमितरे उत्तरास्यां प्रतिमन्त्रम् ।

पुनः गां धुक्ष्व ।

"ॐ देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः" ( ११३ ) ।

यमुनाम् ।

"सा विश्वकर्मा" ( ११४ ) ।

ततस्तृतीयां गां धुक्ष्व ।

"ॐ देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सु वा कामधुक्षः" ( ११३ ) ।

सरस्वतीम् ।

"सा विश्वधायाः" ( ११४ ) ।

ततो गाः धुक्ष्वेति प्रेष्यति ।

विसृष्टवागुत्तरा मनन्वारब्धे तत्र प्रतिदोहमासेकजपः ।

ततः परिक्षालनमानयति स्थाल्याम् ।

"ॐ सम्पृच्यध्वमृतावरीरूर्मिणी मधुमत्तमाः ।

पृञ्चतीर्मधुना पयो मन्द्रा धनस्य सातये" ( का० श्रौ ४।२।३२ ) ।

ततस्तूर्ष्णीं श्रपणम् ।

एवमेवोपसृष्टप्रैषादि परिक्षालन-निनयनान्तौ द्वौ दोहावप्रवर्ग्ये ।

सप्रवर्ग्ये तु मपाकरणक्रमेण पूर्ववत् चत्वारो दोहाः ।

## ( आतञ्चनम् )

श्रृतेषु क्रमेणोद्वास्य लौकिकेन दध्ना आतनक्ति क्रमेण ।

"ॐ इन्द्रस्य सरस्वतिवतस्त्वा भागर्ठ० सोमेनातनच्मि" (११४) ।

इति प्रथमम् ।

"ॐ इन्द्रस्य त्वा भागर्ठ० सोमेनातनच्मि" ( ११४ ) ।

इति सप्रवर्ग्ये दधि घर्मार्थं द्वितीयम् ।

प्रथमवद्न्यौ ।

सोदकेनामृण्मयेनापिदधाति विष्णो हव्यमिति ।

"ॐ विष्णो हव्यर्ठ० रक्ष" ( ११४ ) ।

एवमेवेतरे ।

प्रथमत्वादिचिन्हिता दोहाः सुगुप्ते स्थापनीयाः ।

## इति सायं दोहः ।

पुनर्वत्सापाकरणम् ।

आध्वर्यवपद्धतिः।

प्रातः सवनिकपयस्यार्थं तेनैव शाखापवित्रेण।

"ॐ वायवस्थ" (१।१)।

"ॐ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वमघ्न्या" (१।१)।

इत्युपस्पर्शनम्।

"इन्द्राय मित्रावरुणवते भागम्" (१।१।)

अन्यतरागारे शाखोपगूहनम्।

"ॐ यजमानस्य पशून् पाहि" (१।१)।

आवसथेऽभ्यर्दनालङ्करणदन्तप्रक्षालनान्यध्वर्योरदीक्षितस्याध्वर्योरदीक्षितस्य।

इति चतुर्थमहः।

( अथ पञ्चममहः। )

(१) अथ सौत्यं पञ्चममहः।

[ सौत्यकर्मोपक्रमः ]

तत्रापररात्रे(२) ऋत्विजः प्रबोधयन्ति सयजमाना यजमानपुरुषाः।

औद्गात्रपद्धतिः

( अथ पञ्चममहः )

अथापररात्रे सुत्यारम्भः। सुप्तोत्थितास्सर्वे दन्तधावन-स्नानादि·

हौत्रपद्धतिः।

इत्यग्नीषोमीयः (३)पशुः।

इति तृतीयोपसद्दिनस्यारम्भाच्चतुर्थदिनस्य कार्यं समाप्तम्।

अथ पञ्चममहः।

अथ पञ्चममहः। तत्र 'ऋत्विजः प्रबुध्यध्वम्' इति यजमानपुरु·

(१) इतः पूर्वं श्रीमद्भिः पूज्यपाद-गुरुवर-वैदिकभूषण-पण्डितप्रवर-श्रीभगवत्प्रसादमिश्र वेदाचार्यचरणैः संशोधिताः पद्धतयः सटिप्पणीप्रदानम्। सम्प्रति च पाठनादिकार्यव्यापृतैर्गुरुवरादेरयं किल जनः समाज्ञापितः संशोधनाय, इति तेषामादेशं शिरसा स्वीकुर्वन्निमाः पद्धतयस्तेषामेवोपदिष्टपथा सम्पादयामि। [ श्री गोपालचन्द्र मिश्रः ]

(२) रात्रेरपरो भागोऽपररात्रः। "पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे" (पा० २।२।१) इति समासः। "रात्राह्नाहाः पुंसि" (पा० २।४।२९) ति पुंल्लिङ्गत्वम्।

(३) अयमग्नीषोमीयः पशुरेकः, सर्वेषां पशूनां प्रकृतिर्भवति। अग्नीषोमीयसवनीयानुबन्ध्यपशुत्वमी। उपाकरणमुख्यास्तु धर्माः साधारणा न वा॥

आध्वर्यवपद्धतिः ।

"ऋत्विजः प्रवृध्यध्वमि"ति प्रैषः ।

ततो ब्रह्मादयः स्नाता आचान्तोदकाः शालाद्वार्ये अप उपस्पृशेयुः ।

उत्करे द्विर्महावेदेर्दक्षिणतो द्विरिति चतुरासनम् । उत्करे वाचस्पतिप्रैषः ।

## ( ब्रह्मयजमानयोरुपवेशनम् )

ब्रह्मा पूर्वेणोत्तरवेदिमाग्नीध्रीयमुत्तरेण शालाद्वार्यं पूर्वेणागत्य तद्दक्षिणतः समन्त्रमास्ते यजमानश्च ।

अथवोत्तरवेदेर्दक्षिणत एवोपविशतः ।

## ( परिस्तरणम् )

यजमान वाचं यच्छेति प्रैषः । वाग्यमनम् । आहवनीयशालाद्वार्यदक्षिणाग्नीनां परिस्तरणम्(१) ।

## ( पात्रासादनम् )

शालाद्वार्यस्य पश्चादुत्तरतो वा पात्रासादनम् । अग्निहोत्रहवणी, वज्रः, शम्या, दृषदुपलं, पवित्रच्छेदनानि, पवित्रे, आज्यस्थाली, कुशमुष्टिः । पत्नी-योक्त्रम् । स्रुवो, जुहूः, उपभृद्, ध्रुवा, सन्नहनावच्छादनानि, काश्मर्यमयाः परिधयः, वेदद्वयो विधृत्यावाज्यं, होतृषदनं, वपाश्रपण्यौ, शूलं, स्वरासी, वसाहोमहवनी, प्राशित्रहरणे, इडापात्र्यन्तर्धानकटश्च ।

## ( उपकल्पनीयानि वस्तूनि )

उपकल्पनीयानि—इध्मा, अश्ववालप्रस्तरोपसन्नद्धं बर्हिरेकवृत्स्तरणपर्याप्तं, दधि, प्लक्षशाखा, पृषदाज्यपात्रद्वयं, त्रिगुणरशना, उपा-

औद्गात्रपद्धतिः ।

कृत्वा शालामुखीये अप उपस्पृश्य स्वं स्वं कर्म कुर्युः ।

हौत्रपद्धतिः ।

येऽकृत्वा उत्थाय दन्तधावनस्नानाचमनवस्त्रपरिधानाचमनतिलकान्तानि कृत्वा पवित्रपाणिराचम्य प्राणानायम्य शालाद्वार्येऽप उपस्पृश्य स्वकर्माणि प्रवर्तन्ते ।

---

ज्योतिष्टोमप्रकरणे पाठात्साधारणा अमी । पशुधर्मग्रहात सोमयागे ते स्युर्निरर्थका. । अग्नीषोमीयधर्मत्वं तेषां स्थानात्प्रसिद्ध्यति । द्वयोरितरयोः पश्वोः प्राप्यन्ते चोदकेन ते ॥

( जै० न्या० मा० ३।६।१३-१५) ।

( १ ) परिस्तरणमौत्तरवेदिकाहवनीय-शालाद्वार्य—दक्षिणाग्नीनां, न प्राजहितस्य होमाभावात् । आग्नीध्रीयस्य उपदेशातिदेशयोरभावात् ।

आध्वर्यवपद्धतिः ।

करणतृणं, शकलं, कुशतरुणे, अरणिद्वयं चेति मन्थनचतुष्टयं, द्विगुणरशना, पशुः, शमिता, परिपशव्याज्यं, पान्नेजनीपात्रद्वयं, हिरण्यशकलानि षट् ।

अध्वर्योर्वाग्यमनम् ।

( प्राकृतरूपाणि )

पवित्रकरणम् ।

लौकिकेनोदकेन प्रोक्षणीसंस्कारः ।

वज्रादिपात्रप्रोक्षणम् ।

शालाद्वार्यमुत्तरेण प्रोक्षणीनिधानम्(२), अन्तःपात्ये वा ।

वाग्विसर्ग उभयोः ।

कुक्कुटाहननम् ।

आज्यनिर्वापोऽध्वर्योः । वेदप्रन्थः । (३)आज्याधिश्रयणमध्वर्योः । (४)पर्यग्निकरणम् । उदकोपस्पर्शः ।

अन्तःपात्ये प्रोक्षणीप्रैषः । तत्रैव सादनम् ।

प्रैषे-पक्षे पत्नीशब्दः ।

द्विषत इति स्फ्योदकप्रहारः । न पाण्योरवनेजनम् ।

औद्गात्रपद्धतिः ।

प्रस्तोता प्रातरनुवाकोपक्रमणात् पूर्वमाज्यप्रणयनकाले आग्नीध्रमण्डपे अग्ने पश्चाद्प्राङ्मुख उपविश्येमं स्तोममिति यज्ञसारथिसाम त्रिर्गायेत् ।

( यज्ञसारथिसाम )

कुत्स ऋषिः जगती छन्दः अग्निर्देवता प्रातः सवनारम्भे विनियोगः ।

इमा३स्तो २३४ माम् । अर्हते २३४ जा । ता वेदसे ३ । होइ । रथामी २३४ वा । सम्माहे २३४ मा । मानीषया ३ । होयि । भद्राही २३५ नाः प्रमातो २३४ रा । स्यास ठं० सदे ३ होयि । अग्नायिसा २३४ ख्यायि । मारायिरा २३४ मा । वायन्त वा ३ । हो २३४५ ६ । (१)डा ।

---

( १ ) अग्रेण गार्हपत्य निधायेति शाखान्तरे ।

( २ ) अग्नीध शालाद्वार्यं एवाज्याधिश्रयणमिति देव ।

( ३ ) पर्यग्निकरणमध्वर्यो ।

( ४ ) छ० आ० १, २, २, ४=गे, गा० २, १, ३८, ( ऋ० वे० १।९४।१ )

आज्यग्रहणपद्धतिः ।

अन्तः पात्ये स्फ्येध्माबर्हिषामासादनम् ।

वेदाग्रनिष्पत्तिः ।

स्रुवसम्मार्गः, ततस्तद्वदसेः, ततो जुह्वाः, ततस्तूष्णीं वसाहोमहवन्याः, तत उपभृद्ध्रुवयोः, ततस्तूष्णीं प्राशित्रहरणयोः, इडापात्र्याश्च ।

सम्मार्जनानां रक्षणम् ।

पत्ते पत्नीसन्नहनम् । आज्योद्वासनम् ।

पत्न्या आज्यावेक्षणम् ।

आज्यस्थाली-वेद-स्रुव-दधि-पृषदाज्यपात्रद्वय-प्रोक्षणी-स्फ्येध्माबर्हींष्यादाय आग्नीध्रीयं गत्वा तत्राज्यं प्रोक्षणीद्वेनोत्पूय आज्यमवेक्षते तेजोऽसीति यजमानो वा ।

"ॐ तेजोऽसि शुक्रमस्यमृतमसि" ( १।३१ ) ।

ततो धामनामेति (१।३१) चतुर्गृहीतं जुह्वप्भृतोर्गृहीत्वा पृषदाज्यमाज्यं दधिमिश्रं पञ्चगृहीतं ज्योतिरसीति सकृन्मन्त्रेण चतुस्तूष्णीं पृषदाज्यपात्रे गृहीत्वा ध्रुवायां च चतुर्गृहीतं गृहीत्वा आज्यान्यादाय सोमं |चार्यवच्च ग्राव-द्रोणकलश-ग्रह-चमसतुपात्र-सम्भरणी-परिप्लवादीनि गृहीत्वाऽऽहवनीयं गत्वा तदुत्तरतः स्फ्ये इध्माबर्हिषी निधाय प्रोक्षणादि करोति ।

ब्रह्मन्निध्मं प्रोक्षिष्यामि ।

तदनुज्ञात इध्मं प्रोक्षति विस्रꣳस्य कृष्णोऽसीति ।

"ॐ कृष्णोऽस्याखरेष्ठोऽग्नये त्वा जुष्टं प्रोक्षामि" (२।१) ।

वेदिं च वेदिरसीति ।

"ॐ वेदिरसि बर्हिषे त्वा जुष्टं प्रोक्षामि" ( २।१ ) ।

पश्चादुत्तरवेदेः प्रोक्षणम् । वेदेः सशेत्तरार्द्धे वा ।

बर्हिः प्रतिगृह्य वेद्यां कृत्वा पुरस्तादूर्ध्वग्रन्थि ।

ब्रह्मन् बर्हिः प्रोक्षिष्यामि ।

तदनुज्ञातो बर्हिरसीति बर्हिः ।

"ॐ बर्हिरसि स्रुग्भ्यस्त्वा जुष्टं प्रोक्षामि" ( २।१ ) ।

सशेषे मूलावसेकः ।

"ॐ अदित्यै व्युन्दनमसि" (२।२) ।

बर्हिर्विस्रꣳस्य पुरस्तात्प्रस्तरग्रहणं विष्णोरिति ।

"ॐ विष्णोस्तुपोऽसि" ( २।२ ) ।

तूष्णीं प्रस्तरं ब्रह्मणे प्रदाय सन्नहनं विस्रꣳस्य आस्तरणादेशाद्दक्षिण-

आध्वर्यवपद्धतिः ।

एवमिध्मायां निधायाऽग्रेऽश्वच्छाय प्रोक्षिते देशे बर्हिः स्तृणात्येकधूर्दूर्णे म्रदसमिति ।

"ॐ ऊर्णम्रदसं त्वा स्तृणामि स्वासस्थान्देवेभ्यः" ( ३१२ ) ।

बर्हिषि प्लक्षशाखास्तरणम् ।

इध्मात्समिधमादाय ब्रह्मणः प्रस्तरं चादायाहवनीयं कल्पयत्युपर्युपरि प्रस्तरं धारयन्नुत्सुके उद्दहति ।

परिधीन्परिदधाति क्रमेण मध्यमदक्षिणोत्तरान्गन्धर्व इति प्रतिमन्त्रः

"ॐ गन्धर्वस्त्वा विश्वावसुः परिदधातु विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडितः ।

ॐ इन्द्रस्य बाहुरसि दक्षिणो विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडितः ।

ॐ मित्रावरुणौ त्वोत्तरतः परिधत्तां ध्रुवेण धर्मणा विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडितः" ( ३१३ ) ।

प्रथमं परिधिꣳ समिधोपस्पृश्य वीतिहोत्रमित्यादधाति ।

"ॐ वीतिहोत्रं त्वा कवे द्युमन्तꣳ समिधीमहि । अग्ने बृहन्तमध्वरे" ( ३१४ ) ।

अनुपस्पृश्य द्वितीयाꣳ समिदसीति ।

"ॐ समिदसि" ( ३१५ ) ।

सूर्यस्त्वेति जपत्याहवनीयमीक्षमाणः ।

"ॐ सूर्यस्त्वा पुरस्तात्पातु कस्याश्चिदभिशस्त्यै" (३१५) ।

आवृत्य वेदिं बर्हिषस्तृणे तिरश्ची निदधाति सवितुरिति ।

"ॐ सवितुर्बाहू स्थः" ( ३१५ ) ।

अन्ये वा युक्तत्वाच्चयोः । प्रस्तरꣳ स्तृणात्यूर्णम्रदसमिति ।

"ॐ ऊर्णम्रदसन्त्वा स्तृणामि स्वासस्थन्देवेभ्यः" ( ३१५ ) ।

अभिनिदधाति आ त्वा वसव इति ।

"ॐ आ त्वा वसवो रुद्रा आदित्याः सदन्तु" ( ३१५ ) ।

प्रस्तराद्दक्षिणतस्तूर्ष्णीं स्रुवासिनिधानम् ।

सव्याङ्गुल्ये प्रस्तरे जुहूं प्रतिगृह्य घृताचीति ।

"ॐ घृताच्यसि जुहूर्नाम्ना सेदम्प्रियेण धाम्ना प्रियꣳ सद आसीद" ( ३१६ ) ।

ततस्तूर्ष्णीं वसाहोमहवनीम् ।

उपभृतं घृताचीति ।

आश्वपेवपद्वतिः ।

"ॐ घृताच्यस्युपभृन्नाम्ना सेदम्प्रियेण धाम्ना प्रियꣳ सद आसीद" ( २।६ )।

प्रियेणेति पृषदाज्यम् ।

"ॐ प्रियेण धाम्ना प्रियꣳ सद आ सीद" ( २।६ ) ।

ध्रुवा घृताचीति

"ॐ घृताच्यसि ध्रुवा नाम्ना सेदम्प्रियेण धाम्ना प्रियꣳ सद आसीद" ( २।६ )।

तूष्णीं वानस्पत्यम् ।

प्रियेणेत्याज्यस्थालीम् ।

"ॐ प्रियेण धाम्ना प्रियꣳ सद आसीद" ( २।६ )।

ध्रुवा असदन्निति प्रत्येकं स्थालीपूर्वकमालम्भः सर्वेषाम् ।

"ॐ ध्रुवा ऽअसदन्नृतस्य योनौ ता विष्णो पाहि पाहि यज्ञं पाहि यज्ञपतिम्" ( २।६ ) ।

वानस्पत्यस्य तूष्णीं निधानालम्भने । मन्त्रेणैव वानस्पत्यस्येति रामः ।

पाहि मामित्यात्मालम्भान्ते—

"ॐ पाहि मां यज्ञन्यम्" ( २।६ ) ।

उदकोपस्पर्शः ।

नात्र समिधाधाधायाहुतिः । पाणिप्रक्षालनम् ।

## ( सोमस्य हविर्द्धाने प्रवेशः )

यजमानान्वारब्धꣳ सोमꣳ हविर्धाने प्रवेशयति ।

ईषान्तरेणार्द्धाधिकं सोममद्रिषु सम्मृतेषु सोमोपनहनेनैव निदधाति हृदे त्वेति । अवशिष्टस्यार्धान्न्यूनस्य सोमस्य माध्यन्दिनसवनार्थमीषयोरुपर्येवावशेषणं तस्य च वस्त्रान्तरेणोपनहनं कर्तव्यम् ।

"ॐ हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वा ।

ऊर्ध्वमिममध्वरन्दिवि देवेषु होत्रा यच्छ ।

सोम राजन् विश्वास्त्वम्प्रजा उपावरोह" ( ६।२१-२६ )।

## ( याजमानं सोमोपस्थानम् । )

अग्नीनां मुखानि स्वचीयांꣳस्यभ्यन्तराणि ।

विश्वास्त्वामिति विसृज्योपतिष्ठते यजमानः ।

"ॐ विश्वास्त्वाम्प्रजा उपावरोहन्तु" ( ६।२६ )।

आध्वर्यवपद्धति ।

( सोमार्थानामीषान्तरेणाहरणम् । )

अनेनेषान्तरेणाहरणं० सोमार्थस्याभिषवे ।

हिरण्य ग्रावाणो निग्राभ्याः सम्भरणी दशापवित्रं परिप्लवापात्रं चेति । अभिषवोत्तरकालं नोद्धरणं ततो बहिर्दाभिघातात् । अभिषुतस्य चानयद्धरणं कृतत्वात् ।

( आज्यसंस्कारः )

अथाध्वर्युः सर्वार्थं प्रभूतमाज्यं शालाद्वार्ये संस्करोति । अथवा तत्काले लौकिकं० संस्कर्तव्यम् ।

( लोकद्वारीगानम् )

ततो यजमानः शालाद्वार्यस्य पश्चादुदङ्मुख उपविश्य लोकद्वारी-(१)साम गायेत् ।

पुष्कल ऋषिः द्विपदा गायत्री छन्दः वसवो देवताः प्रातःसवने विनियोगः ।

ॐ लोकद्वारमपावार्णू २ पश्येम त्वा वयं रा १२१२ इम् आ २ जायो आ ३४५ ।

एवं त्रिः ।

शालाद्वार्ये पुरस्तात्समिधमाधाय प्राङ्मुखः संस्कृताज्यात्स्रुवेण जुहोति ।

औद्गात्रपद्धति ।

( लोकद्वारीगानम् )

यजमान प्रातरनुवाकस्योपाकरणात् पूर्वं गार्हपत्यस्य पश्चादुदङ्मुख उपविश्य लोकद्वारमिति वासन्तं साम त्रिर्गायेत ।

पुष्कल ऋषिः द्विपदागायत्री छन्दः वसवो देवताः प्रातःसवनारम्भे विनियोगः ।

लोकद्वारमपावार्णू २ पश्येम त्वा वयंरा १२१२ इम्आ २ जायो आ ३४५ ( एवत्रिः ) ।

---

(१) अत्र मीमांसा—

ऋक्सामयजुषां एकम स कुर्यादिति शङ्किते ।
पादश्च गीतिः प्रश्लिष्टपाठ इत्यस्त्वसङ्करः । ( ज० न्या० मा० ९।१।१७ ) ।

आग्नेयपद्धतिः ।

"ॐ नमोऽग्नये पृथिवीक्षिते लोकक्षिते लोकं मे यजमानाय विन्दे- व वै यजमानस्य लोक एतास्मयत्र यजमानः परस्तादायुषः स्वाहा ।

इदमग्नये न मम ।

तूष्णीं द्वितीयाम् ।

ॐ प्रजापतये स्वाहा ।

इदं प्रजापतये० ।

उपरिष्टात्समित् ।

ॐ अपजहि परिघम् ।

इत्युक्त्वोत्तिष्ठति ।

( इति लोकद्वारीगानम् )

ऐन्द्राग्नपद्धतिः ।

अथ तस्मिन्नेवाग्नौ प्राङ्मुखः स्रुवेण जुहोति । होमस्य पुरस्तादु- परिष्टाच्च समिद्धोमस्तूष्णीम् ।

"नमोऽस्त्वग्नये पृथिवीक्षिते लोकक्षिते लोकम्मे यजमानाय विन्दैव वै यजमानस्य लोक एतास्म्यत्र यजमानः पुरस्तादायुषः स्वाहा" ।

इदमग्नये न मम ।

स्वाहा ।

इदं प्रजापतये न मम ।

अपजहि परिघमित्युक्त्वोत्तिष्ठति ।

अथ यजमानः प्रातरनुवाकोपाकरणात् पूर्वं विश्वरूपाणां गानं मे गायेत्युद्गातारं प्रत्याह ।

एवं ( गुणातिशयलिप्सुना ) यजमानेनोक्त उद्गाता गानं प्रत्याच- क्षीत । तस्य नवनिशतं स्तोत्रीया इत्युक्तचतुष्टोमस्तोमसम्पदतिरेकात् चतुष्टोमस्याग्निष्टोमस्य स्तोमानां त्रिवृत्पञ्चदशसप्तदशविधानां या संपत्तिः स्यादतिरेकप्रसङ्गात् ।

प्रहृत्स्वाभावाच्च नाहं गायामीति ।

अथ यजमानः परिहरति । पुरिसामान्तरवत्परिमामन्वादासां : चा सम्परकोपः । वसतीवर्यो ग्रहः । प्रातरनुवाकः शस्त्रम् । तस्माद्गा येति यजमानेन प्रत्युक्ते न मामनामन्त्र्य प्रातरनुवाकमुपाकुर्यात् इत्य- ध्वर्युर्ब्रूयात् ।

उद्गाता यजमानश्च पूर्वया द्वारा हविर्धानं प्रविश्य प्रातरनुवाका- योपविष्टं होतारं पूर्वेणोत्तरतो गत्वा शकटयोर्मध्ये चक्रयोः पुरस्तादु- दङ्मुखस्तूष्णीमुपविशेत् ।

आध्वर्यवपद्धतिः ।

## ( विश्वरूपागानम् )

ततो विश्वरूपाणां गानं मे गायेत्युद्गातारं प्रत्याह । नाहं गायामीति तेनोक्ते गायेति वदेत । तत्प्रकारः सामप्रयोगे ।

विश्वरूपागानम् —

अध्वर्यु होतरिति होतारमामन्त्र्य हविर्धानपूर्वद्वारि पृष्ठ्यायास्ततो होतुर्वदनस्थापनम् ।

औद्गात्रपद्धतिः ।

उद्गातुः पूर्वप्रदेशे यजमानः प्रत्यङ्मुखस्तृणेषूपविशेत् ।

उद्गाता विश्वरूपाभिर्गायति ।

विश्वरूपाणां पुष्कल ऋषिः पंक्तिश्छन्दः विश्वारूपाणि देवताः ।

हौत्रपद्धतिः ।

यदि होतरित्युक्ते होता चात्वालोत्करान्तरेणाग्नीध्रीयं पूर्वेण प्रविश्याग्नीध्रीयधिष्ण्यस्य पश्चात्तिष्ठेत ।

## ( प्रपदजपः )

महारात्रे प्रातरनुवाकायामन्त्रितोऽग्रेणाग्नीध्रीयं धिष्ण्यं तिष्ठन्प्र(१)पदो जपति ।

ॐ भूः प्रपद्ये भुवः प्रपद्ये स्वः प्रपद्ये भूर्भुवः स्वः प्रपद्ये ॐ प्रपद्ये वाचमृचं प्रपद्ये मनो यजुः प्रपद्ये साम प्राणं प्रपद्ये चक्षुः श्रोत्रं प्रपद्ये नमो देवेभ्यो नमो देवताभ्यो नमो महते देवाय नमो गन्धर्वाप्सरोभ्यो नमः सर्पदेवजनेभ्यो नमो भूताय नमो भविष्यते नमः पितृभ्यः प्रतिनमस्कारेभ्यो येऽपि नमः ।

नमः पितृभ्य इति मात्र प्राचीनावीतिना अपस्पर्शश्च ।

## ( दिगुपस्थानम् )

ततः दिशो यथा रूपमुपतिष्ठते । दिगुपस्थाने समपदावस्थितस्तत्र दिङ्मुखो भूत्वोपतिष्ठते ।

ॐ अस्यां मे प्राच्यां दिशि सूर्यश्च चन्द्रश्चाधिपती सूर्यश्च चन्द्रश्च एतस्यै दिशः पातां सूर्यं च चन्द्रं च स देवतानामृच्छतु यो नोऽताभिदासति ।

इति प्राच्याम् ।

ॐ अस्यां मे दक्षिणस्यां दिशि यमश्च मृत्युश्चाधिपती यमश्च मृत्युश्च

(१) शां० श्रौ० ६।५।५।

औद्गात्रपद्धतिः।

१ २ २ २ २ २ २
ॐ हुम् गंजे यान्ऽग्नपदीम् । गाये महत्व वर्त्तनि । गायन्द वैष्णं
२ २ १ २ १ २ २ १ २
अगद्विश्वाकृणा । मम्भुना २ । देवा मो कापसि चा १ ३ २ २ हुं
१ २ १ १ १
मा । २ । क्रायिरा । मा ३ ४ ५ (१) ॥ ३२ ॥

होत्रपद्धतिः ।

मैतस्यै दिशः पातां यमं च मृत्युं च स देवतानामृच्छतु यो नोऽस्तोऽभिदासति ।

इति दक्षिणाम् ।

ॐ अस्यां मे प्रतीच्यां दिशि मित्रश्च वरुणश्चाधिपती मित्रश्च वरुणश्च मैतस्यै दिशः पातां मित्रं च वरुणं च स देवतानामृच्छतु यो नोऽस्तोऽभिदासति ।

इति प्रतीचीम् ।

सव्यावृदुदीचीम् ।

ॐ अस्यां म उदीच्यां दिशि सोमश्च रुद्रश्चाधिपती सोमश्च रुद्रश्च मैतस्यै दिशः पातां सोमं च रुद्रं च स देवतानामृच्छतु यो नोऽस्तोऽभिदासति ।

इत्युदीचीम् ।

प्राकृर्ध्वायाम् ।

ॐ अस्यां म ऊर्ध्वायां दिशि बृहस्पतिश्चेन्द्रश्चाधिपती बृहस्पतिश्चेन्द्रश्च मैतस्यै दिशः पातां बृहस्पतिं चेन्द्रं च स देवतानामृच्छतु यो नोऽस्तोऽभिदासति ।

इत्यूर्ध्वायाम् ।

अथान्तरिक्षम् ।

ॐ अस्मिन्मेऽन्तरिक्षे वायुश्च वृष्टिश्चाधिपती वायुश्च वृष्टिश्च मैतस्यै दिशः पातां वायुं च वृष्टिं च स देवतानामृच्छतु यो नोऽस्तोऽभिदासति ।

इत्यन्तरिक्ष माङ्गुल एव ।

अथ पृथिवीम् ।

ॐ अस्यां मे पृथिव्यामग्निश्चान्नं चाधिपती अग्निश्चान्नं च मैतस्यै दिशः पातामग्निं चान्नं च स देवतानामृच्छतु यो नोऽस्तोऽभिदासति"

इति पृथिवीम् ।

(१) ऋ० सा० १, २, ४, २ ।

आध्वर्यवपद्धतिः ।

## ( प्रातरनुवाकोपाकरणम् )

प्राग्वंशे प्रपन्नाः प्रातरनुवाकमुपाकरणं देवेभ्यः प्रातर्यावभ्योऽनु ब्रूहि इति समिधमाधायाहवनीये । देवेभ्य इत्येके ।

औद्गात्रपद्धतिः ।

एकस्यां पक्तौ त्रिर्गायत्रं गायेदिति धानंजय्यः स्वाध्यायस्वरेण तस्मिन् काल एव मनसैव यजमानो गायेत् ।

हौत्रपद्धतिः ।

बृहद्रथन्तरे मे ऊरू वामदेव्यमात्मा यज्ञायज्ञीयं प्रतिष्ठा भूरहं भुवरहं स्वरहमश्माहमश्माण ।

सुत्रामाणमिति सस्वरं जपित्वा ।

ॐ सुत्रामाणं पृथिवीं द्यामनेहसं सुशर्माणमदितिं सुप्रणीतिम् ।

दैवीं नावं स्वरित्रामनागसमस्रवन्तीमा रुहेमा स्वस्तये(१) ।

## ( आग्नीध्रीये होमः ) ।

दक्षिणाद्वाराग्नीध्रीये जुहोतीति श्रुतेः । उपविश्य दक्षिणं जान्वाच्य स्रुवेण जुहुयात् ।

ॐ भूर्भुवः स्वः स्वाहा ।

इदं प्रजापतये न मम ।

त्यागस्तु यजमानस्यैव ।

अग्नये स्वाहा ।

इदमग्नये न मम ।

उषसे स्वाहा ।

इदमुषसे० ।

अश्विभ्यां स्वाहा ।

इदमश्विभ्यां० ।

सरस्वत्यै स्वाहा ।

इदं सरस्वत्यै० ।

जुषाणानि महांसि सवनान्याज्यस्य व्यन्तु स्वाहा ।

इदं सवनेभ्यो न मम ।

इति स्रुवेण हुत्वा सर्वेऽनूद्धविर्धानयोः पूर्वस्यां द्वार्युपविशन्ति ।

अध्वर्युणा देवेभ्यः प्रातर्यावभ्योऽनुब्रूहीत्युक्ते ।

---

(१) ऋ० १० । ६३ । १० ।

हौत्रपद्धतिः ।

## ( प्रातरनुवाकः )

अतः परं प्रकृतस्याग्निष्टोमस्य षष्टिसहितत्रिशतप्रातरनुवाकस्य प्रयोगोऽनुसन्धीयते ।

हिं(१) आपो रेवतीः क्षयथा हि वस्वः क्रतुं च भद्रं बिभृथामृतं च ।
रायश्च स्थ स्वपत्यस्य पत्नीः सरस्वती तद्गृणते वयोधा३ ।
आपो रेवतीः क्षयथा हि वस्वः क्रतुं च भद्रं बिभृथामृतञ्च ।
रायश्च स्थ स्वपत्यस्य पत्नीः सरस्वती तद्गृणते वयोधा३ ।
आपो रेवतीः क्षयथा हि वस्वः क्रतुं च भद्रं बिभृथामृतं च ।
रायश्च स्थ स्वपत्यस्य पत्नीः सरस्वती तद्गृणते वयोधो३ । [१]
(२)उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये, आरे अस्मे च शृण्वतो३
-यः स्नीहितीषु पूर्व्यः संजग्मानासु कृष्टिषु अरक्षद्दाशुषे गयो३ ।
उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाजनि धनञ्जयो रणे रणे३ ।
यस्य दूतो असि क्षये वेषि हव्यानि वीतये दस्मत् कृणोष्यध्वरो३ ।
तमित्सुहव्यमङ्गिरः सुदेवं सहसो यहो जना आहुः सुबर्हिषो३ ।
आ च वहासि ताँ इह देवाँ उप प्रशस्तये हव्या सुश्चन्द्र वीतयो३ ।
न यो रुपब्दिरश्व्यः शृण्वे रथस्य कच्चन यदग्ने यासि दूत्यो३ ।
त्वो तो वाज्यह्नयोऽभि पूर्वस्मादपरः प्रदाश्वाँ अग्ने अस्थो३ ।
उत द्युमत्सुवीर्यं बृहदग्ने विवाससि देवेभ्यो देव दाशुषे ३ । [१०]
(३)अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजं, होतारं रत्नधातमो३ ।
अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत स देवाँ एह वक्षतो३ ।
अग्निना रयिमश्नवत्पोषमेव दिवे दिवे यशसं वीरवत्तमो३ ।
अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि स इद्देवेषु गच्छतो३ ।
अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः देवो देवेभिरागमो३ ।
यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि तवेत्तत्सत्यमङ्गिरो३ ।
उप त्वाग्ने दिवे दिवे दोषावस्तर्धिया वयं नमो भरन्त एमसो३ ।
राजन्तमध्वराणां गोपामृतस्य दीदिविं वर्द्धमानं स्वे दमो३ !

---

(१) ऋ० १०।३०।१२।

अत्र याः पङ्क्तयस्तासां त्रीन् पादान् एकीकृत्यावस्येत्। ततो द्वाभ्यां पादाभ्यां प्रणवं कुर्यात्। अन्यासां ऋचामर्धर्चेनावसायोत्तरार्धेन प्रणवं कुर्यात्। हिं इति मन्द्र-मया वाचा सकृत्।

होत्रा प्रातरनुवाके वक्ष्यमाणे अध्वर्युकर्तृकः सवनीयनिर्वापः उन्नेतृकर्तृकं पात्रयोजनं च सहैव भवतीति रत्नमाला।

(२) ऋ० १।७४।१-९। (३) ऋ० १।१।१-९।

हौत्रपद्धतिः।

स नः पितेव सूनवेऽग्ने सूपायनो भव सचस्वा नः स्वस्तये ३।[१६]
(१)तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमं धनंजयं रणे रणे ३।
एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः एभिर्वर्धास इन्दुभिः ३।
यत्र क्व च ते मनो दक्षं दधस उत्तरं तत्रा सदः कृणवसे ३।
नहि ते पूर्तमक्षिपद्भुवन्नेमानां वसो अथा दुवो वनवसे ३।
अग्निरगामि भारतो वृत्रहा पुरुचेतनः दिवो दासस्य सत्पतिः ३।
स हि विश्वाति पार्थिवा रयिं दाशन्महित्वना वन्वन्नवातो अस्तृतः ३।
स प्रत्नवन्नवीयसाग्ने द्युम्नेन संयता बृहत्ततन्थ भानुना ३।
प्र वः सखायो अग्नये स्तोमं यज्ञं च धृष्णुया अर्च गाय च वेधसे ३।
स हि यो मानुषा युगा सीदद्धोता कविक्रतुः दूतश्च हव्यवाहनः ३।
ता राजाना शुचिव्रतादित्यान्मारुतं गणं वसो यक्षीह रोदसी ३।
वस्वी ते अग्ने संदृष्टिरिषयते मर्त्याय ऊर्जो नपादमृतस्य ३।
क्रत्वा दा अस्तु श्रेष्ठोऽद्य त्वा वन्वन्सुरेक्णाः मर्त आनाश सुवृक्तिम् ३।
ते ते अग्ने त्वोता इषयन्तो विश्वमायुः तरन्तो अर्यो अरातीर्वन्वन्तो अर्यो अरातीः ३। [३२]

(२)होताजनिष्ट चेतनः पिता पितृभ्य ऊतये प्रयक्षञ्जेन्यं वसु शकेम वाजिनो यमं ३।

आ यस्मिन्सप्त रश्मयस्तता यज्ञस्य नेतरि मनुष्वद्दैव्यमष्टमम्। पोता विश्वं तदिन्वति ३।

दधन्वे वा यदीमनु वोचद्ब्रह्माणि वेरु तत् परि विश्वानि काव्या नेमिश्चक्रमिवाभवत् ३।

साकं हि शुचिना शुचिः प्रशास्ता क्रतुनाजनि विद्वाँ अस्य व्रता ध्रुवा वया इवानु रोहते ३।

ता अस्य वर्णमायुवो नेष्टुः सचन्त धेनवः कुवित्तिसृभ्य आ वरं स्वसारो या इदं ययुः ३।

यदी मातुरुप स्वसा घृतं भरन्त्यस्थित तासामध्वर्युरागतौ यवो वृष्टीव मोदते ३।

स्वः स्वाय धायसे कृणुतामृत्विगृत्विजं स्तोमं यज्ञं चादरं वनेमा ररिमा वयं ३।

यथा विद्वाँ अरं करद्विश्वेभ्यो यजतेभ्यः अयमग्ने त्वे अपि यं यज्ञं चकृमा वयं ३। [५०]

---

(१) ऋ० ६।१६।१६-२७। (२) ऋ० २।५।१-८।